

श्रीवीतरागाय नमः

श्रीमदमोघवर्षपरमेश्वरपरमगुरु-

भगवज्जिनसेनाचार्यविरचितम्

# पार्श्वाभ्युदयम्

श्रीयोगिराट् पण्डिताचार्यविरचितसुबोधिकाटीका-
सहितम् ।



आकलूजनिवासी गांधी नाथारंगजी इत्येतेषां कृते

मुम्बापुरीस्थश्रीनिर्णयसागराख्ययन्त्रालये वा. रा. घाणेकर इत्यनेन
मुद्रयित्वा प्रकाशितम् ।

प्रथमावृत्तिः ] * * * [ मूल्यं द्वादशाणकाः ।

श्रीवीरनिर्वाणाब्द २४३५. विक्रमसंवत् १९६६.

# सुधीषु निवेदनम् ।

इदमश्रुतपूर्वं काव्यमाकलञ्जनिवासि श्रेष्ठिवर्य्य नाथारङ्गजी गांधी इत्येतैरस्मदधिकृतमुद्रणादिप्रबन्धद्वारा विद्वज्जनतायां प्रकाशमानीतम् । एतन्मुद्रणावसरे बहुतरमन्वेषितेऽपि पुस्तकान्तरानुपलम्भादन्यैश्च कियद्भिः प्रमादजनितैः कारणैरस्य मुद्रणे यत्र तत्रातितरां स्खलितमस्माभिरिति तद्विषयिकां क्षमां प्रार्थयामोऽध्येतृजनकृताम् । पुस्तकान्ते निवेशितेन शुद्धिपत्रेण संशोध्य पुस्तकं पठनीयमिति च निवेदयामो वाचकवृन्दम् ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादता ।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः ॥

अलं विज्ञानां पुरो निवेदनकरणेन ।

प्रार्थी—पन्नालाल बाकलीवाल ।

# INTRODUCTION.

This Jaina poem entitled पार्श्वाभ्युदय which is here offered to the public, will, I hope, be welcomed by all students of Sanskrit literature. It was composed by the celebrated author Jinasenáchárya in the reign of the राष्ट्रकूट King Amoghavarsha I as we learn from the concluding verses of the poem :—

इति विरचितमेतत्काव्यमावेष्ट्य मेघं
बहुगुणमपदोषं कालिदासस्य काव्यम्
मलिनितपरकाव्यं तिष्ठतादाशशाङ्कं
भुवनमवतु देवः सर्वदाऽमोघवर्षः ॥
श्रीवीरसेनमुनिपादपयोजभृङ्गः
श्रीमानभूद्विनयसेनमुनिर्गरीयान् ।
तच्चोदितेन जिनसेनमुनीश्वरेण
काव्यं व्यधायि परिवेष्टितमेघदूतम् ॥

Virasena was the teacher of Vinayasena, and Jinasena. At the request of Vinayasena Jinasena composed the पार्श्वाभ्युदय into which he has interwoven the whole of Kálidása's Meghaduta by way of samasyápúrana. Each stanza in the पार्श्वाभ्युदय borrows one or two lines from the Meghadúta, the remaining lines being composed by Jinasena himself. At the end of each canto of the पार्श्वाभ्युदय Jinasena is spoken of as the great teacher of the king Amoghávarsha. This King belonged to the राष्ट्रकूट dynasty and reigned over the Karnátaka and Mahárashtra. He ascended the

throne in S'aka 736 and reigned till S'aka 799. His capital was Mânyakheta or Malakheda. He was a great patron of literature. He composed a work called kavirajamârga in the old Kannada language on Alankâra sâstra. He is believed to have written a small Sanskrit poem called प्रश्नोत्तररत्नमाला the concluding verse of which is:—

विवेकात्त्यक्तराज्येन राज्ञेयं रत्नमालिका ।
रचितामोघवर्षेण सुधिया सदलंकृतिः ॥

In the concluding pras'asti of the Uttarapurâna it is stated that Amoghavarsha considered himself purified by falling at the feet of Jinasena and that Vîrasena was the teacher of Jinasena :—

अभवदिह हिमाद्रेर्देवसिन्धुप्रवाहो
ध्वनिरिव सकलज्ञात्सर्वशास्त्रैकमूर्तिः ।
उदयगिरितटाद्वा भास्करो भासमानो
मुनिरनु जिनसेनो वीरसेनादमुष्मात् ॥
यस्य प्रांशुनखांशुजालविसरद्धारान्तराविर्भव-
त्पादाम्भोजरजःपिशङ्गमकुटप्रत्यग्ररत्नद्युतिः ।
संस्मर्ता स्वममोघवर्षनृपतिः पूतोऽहमद्येत्यलं
स श्रीमान् जिनसेनपूज्यभगवत्पादो जगन्मङ्गलम् ॥

Both Amoghavarsha and his teacher Jinasena are also mentioned in the Jayadhavalâ-tîkâ which was composed in Saka 759.

इति श्रीवीरसेनीया टीका सूत्रार्थदर्शिनी ।
मद्ग्रामपुरे श्रीमद्गुर्जरार्यानुपालिते ॥
फाल्गुने मासि पूर्वाह्णे दशम्यां शुक्लपक्षके ।
प्रवर्धमानपूजायां नन्दीश्वरमहोत्सवे ॥

अमोघवर्षराजेन्द्रप्राज्यराज्यगुणोदया ।
निष्ठितप्रचयं यायादाकल्पान्तमनल्पिका ॥
षष्टिरेव सहस्राणि ग्रन्थानां परिमाणतः ।
श्लोकेनानुष्टुभेनात्र निर्दिष्टान्यनुपूर्वशः ॥
विभक्तिः प्रथमस्कन्धो द्वितीयः संक्रमोदयः ।
उपयोगश्च शेषास्तु तृतीयस्कन्ध इष्यते ॥
एकान्नषष्टिसमधिकसप्तशताब्देषु शकनरेन्द्रस्य ।
समतीतेषु समाप्ता जयधवला प्राभृतव्याख्या ॥
गाथासूत्राणि सूत्राणि चूर्णिसूत्रं तु वार्तिकम् ।
टीका श्रीवीरसेनीयाऽशेषा पद्धतिपञ्चिका ॥
श्रीवीरप्रभुभाषितार्थघटना निर्लोठितान्यागम-
न्याया श्रीजिनसेनसन्मुनिवरैरादेशितार्थस्थितिः ।
टीका श्रीजयचिन्हितोरुधवला सूत्रार्थसंद्योतिनी
स्थेयादारविचन्द्रमुज्ज्वलतमा श्रीपालसंपादिता ॥

जयधवला P. 519.

Jinasena wrote his first work the Jaina Harivams'a in S'aka 705 when S'rivallabha the Son of Krishnarâja I and the grand father of Amoghavarsha I was the reigning sorereign. Jinasena's second work the पार्श्वाभ्युदय must have been composed shortly after S'aka 736, while his third and last work the Adipurâna, was left unfinished. He wrote only 45 chapters. The remaining chapters of the Adipurâna were composed by his celebrated pupil Gunabhadra who also completed the Uttarapurâna at Bankâpur in the Dharwar (धारवाड) District in S'aka 824 while Akâlavarsha, the son and Successor of Amoghavarsha I was reigning over the Karnâtaka and Mahârâshtra.

The commentator पण्डिताचार्य योगिराट् was a guru of the *Jaina* matha at S'ravana Belgol in Mysore. He closely follows Mallinatha in explaining the lines from the Meghaduta and frequently quotes the Jainendra-vyâkarana and the Nánártharatnamálá. The last named Ros'a was composed by Iraga dandanátha who was a Jaina and who served under Harihara II, the King of Vijayanagara, who was reigning in S'aka 1321. The commentator of the Párs'vábhyudaya, therefore, is later than S'aka 1321. His statement that Kálidâsa was contemporary with Jinasena is not correct because Kâlidása is mentioned by the Jaina poet Ravikirti who composed the Aivale Inscription in S'aka 556, and who was patronised by the early Chalukya King Pulikes'i II.

We sincerely congratulate K. B. Pathak Esqr. late Proffesor Deccan Collage, Poona, for the assistance he gave.

PANNALALL BAKLIWAL.



श्रीः

# प्रस्तावना.

## ( पूर्वलिखिताङ्ग्लभाषायाः सारांशः

मुद्रित्वा लोके प्रकाशमायातमिदं पार्श्वाभ्युदयनामकं जैनकाव्यं साहित्यसुधातरङ्गिणीतरङ्गतीर्यमाणानां विदुषां प्रीतिकरं भविष्यतीत्याशास्महे वयम् । राष्ट्रकूटनामराजधान्यां प्राथमिकस्य श्रीअमोघवर्षनरपतेः राज्यशासनसमये प्रख्यातमहाकविश्रीजिनसेनाचार्येण विरचितमिदं काव्यमिति स्पष्टीभवत्यस्य काव्यस्यान्तिमेन श्लोकेन—

इति विरचितमेतत्काव्यमावेष्ट्य मेघं
बहुगुणमपदोषं कालिदासस्य काव्यम् ।
मलिनितपरकाव्यं तिष्ठतादाशशाङ्कं
भुवनमवतु देवः सर्वदाऽमोघवर्षः ॥ १ ॥
श्रीवीरसेनमुनिपादपयोजभृङ्गः
श्रीमानभूद्विनयसेनमुनिर्गरीयान् ।
तच्चोदितेन जिनसेनमुनीश्वरेण
काव्यं व्यधायि परिवेष्टितमेघदूतम् ॥ २ ॥

महामुनिः श्रीवीरसेनो विनयसेनजिनसेननाम्नोर्मुनिपुङ्गवयोर्गुरुरासीत् । श्रीविनयसेनप्रार्थनया श्रीजिनसेनाचार्यः कालिदासकृतं समग्रं मेघदूतं समस्यापूरणद्वारेणावेष्ट्य ( अन्तर्नीय ) पार्श्वाभ्युदयमरीरचत् । प्रत्येकश्लोकेत्र मेघदूतस्य क्रमेण श्लोकचतुर्थांशं श्लोकार्द्धं वा समस्यारूपेणादायाऽवशिष्टपादान्स्वयं निर्ममौ ग्रन्थकारः । जिनसेनोऽमोघवर्षमहाराजस्य गुरुरित्येतद्ग्रन्थस्य प्रत्येकाङ्कसमाप्तावुल्लिखितम् । अयममोघवर्षनामा भूपती राष्ट्रकूटनाम्नि वंशे समजनि । अयं पृथिवीपालः कर्णाटमहाराष्ट्रदेशयोः पृथिवीं बुभुजे । षट्त्रिंशदधिकसप्तशततमे शकाब्दे ( ७३६ ) राज्यविष्टरमारुह्य नवनवत्यधिकसप्तशततमशकाब्दपर्यन्तं ( ७९९ ) भूमिमन्वशासत भूमिपतिरेषः । अस्य राजधानी मलखेडेतिख्याते मान्यखेटपुरे बभूव । अयं नरवरो विद्यां बहूत्तेजयामास । अनेन भूभुजा अलङ्कारविषयकः कविराजमार्गनामा ग्रन्थः पुरा-

तनकर्णाटभाषायां जग्रथे, प्रश्नोत्तररत्नमालानामकं च लघु काव्यं संस्कृत-भाषायां संददर्भे इति मन्यन्ते ऐतिहासिकाः। इदमस्या अन्तिमः श्लोकः—

विवेकात्त्यक्तराज्येन राज्ञेयं रत्नमालिका।
रचितामोघवर्षेण सुधिया सदलङ्कृतिः ॥ १ ॥

अमोघवर्षो महाराट् श्रीजिनसेनस्य चरणारविन्दयोर्नमस्कारकरणेन पूतीभूतं स्वममन्यत इति, जिनसेनस्य श्रीवीरसेनाचार्यो गुरुरभूदिति च श्रीउत्तरपुराणस्य प्रशस्तेरन्ते लिखितमस्ति।

अभवदिह हिमाद्रेर्देवसिन्धुप्रवाहो
ध्वनिरिव सकलज्ञात्सर्वशास्त्रैकमूर्तिः।
उदयगिरितटाद्वा भास्करो भासमानो
मुनिरनु जिनसेनो वीरसेनादमुष्मात् ॥
यस्य प्रांशुनखांशुजालविसरद्धारान्तराविर्भव-
त्पादाम्भोजरजःपिशङ्गमुकुटप्रत्यग्ररत्नद्युतिः।
संस्मर्ता स्वममोघवर्षनृपतिः पूतोहमद्येत्यलं
स श्रीमान् जिनसेनपूज्यभगवत्पादो जगन्मङ्गलम् ॥

एकान्नषष्ठ्युत्तरे सप्तशततमे शकाब्दे (७५९) निर्मितायां जयधवलटीकायाममोघवर्षस्य गुरुर्जिनसेनोऽमोघवर्षश्चोल्लिखितौ।

इति श्रीवीरसेनीया टीका सूत्रार्थदर्शिनी।
भटग्रामपुरे श्रीमद्गुर्जरार्यानुपालिते ॥
फाल्गुने मासि पूर्वाह्ने दशम्यां शुक्लपक्षके।
प्रवर्धमानपूजायां नन्दीश्वरमहोत्सवे ॥
अमोघवर्षराजेन्द्रप्राज्यराज्यगुणोदया।
निष्ठितप्रचयं यायादाकल्पान्तमनल्पिका ॥
षष्टिरेव सहस्राणि ग्रन्थानां परिमाणतः।
श्लोकेनानुष्टुभेनात्र निर्दिष्टान्यनुपूर्वशः ॥
विभक्तिः प्रथमस्कन्धो द्वितीयः संक्रमोदयः।
उपयोगश्च शेषास्तु तृतीयस्कन्ध इष्यते ॥
एकान्नषष्टिसमधिकसप्तशताब्देषु शकनरेन्द्रस्य।
समतीतेषु समाप्ता जयधवला प्राभृतव्याख्या ॥

गाथासूत्राणि सूत्राणि चूर्णिसूत्रं तु वार्तिकम् ।
टीका श्रीवीरसेनीयाऽशेपा पद्धतिपञ्जिका ॥
श्रीवीरप्रभुभापितार्थघटना निर्लोडितान्यागम-
न्यायाः श्रीजिनसेनसन्मुनिवरैरादेशितार्थस्थितिः ।
टीका श्रीजयचिह्नितोरुधवला सूत्रार्थसंबोधिनी
स्थेयादारविचन्द्रमुज्ज्वलतमा श्रीपालसम्पादिता ॥

पञ्चोत्तरसप्तशततमे शकाब्दे(७०५)प्रथमकृष्णराजस्य पुत्रे श्रीवल्लभेऽमोघवर्पस्य पितामहे च धरां पालयति सत्ययं श्रीजिनसेनाचार्यः सर्वतः प्रथमं जैनहरिवंशपुराणमारचयामास । एप एव द्वितीयग्रन्थं पार्श्वाभ्युदयनामकं पट्त्रिंशदुत्तरसप्तशततमे (७३६) शकाब्दे निर्ममे । अन्यच्च श्रीआदिपुराणस्य स्वकृतेः पञ्चविंशतिसर्गानेवैप महाकविर्निर्मातुं प्रबभूव । ततोस्य गुणाकरः प्रधानशिष्यः श्रीगुणभद्रसूरिः सम्पूरयामासैनं ग्रन्थराजम् । धारवाडप्रान्तस्य बङ्कापुरे नगरे चतुर्विंशत्यधिकाष्टशततमे ( ८२४ ) शकाब्दे आद्यस्यामोघवर्पस्य पुत्रे शासति महीमनेनैव गुणभद्रकवीन्द्रेण उत्तरपुराणं रचितम् ।

योगिराट्पण्डिताचार्येण महिसोरान्तर्गतश्रवणबेलगुलनिवासिना जैनधर्मगुरुणा पार्श्वाभ्युदयस्य टीकाविधाने मल्लिनाथकृता मेघदूतटीकाऽनुचक्रे। अत्र टीकायां शाकटायनव्याकरणस्य नानार्थरत्नमालायाश्चातितरामुल्लेखः कृतः। इयं रत्नमाला इरुगदण्डनाथेन विहितास्ति यो जैनधर्ममनुपालयन्नेकविंशत्यधिकत्रयोदशशततमे(१३२१)शकाब्दे विजयनगरराज्यमनुशासतो हरिहरमहाराजस्याश्रितो जातः। अत एव पार्श्वाभ्युदयस्य टीकाकारोपि १३२१तमाच्छकाब्दात्पश्चादेव संबभूवेति मन्तव्यम् । जिनसेनस्य समकालीनः कालिदास इति टीकावचनं नोपपद्यते यतो जैनकविना श्रीरविकीर्तिना षट्पञ्चाशदुत्तरपञ्चशततमे ( ५५६ ) शकाब्दे स्वकीयशिलालेखे कालिदासोप्युल्लिखितः । स च रविकीर्तिर्द्वितीयेन चालुक्यवंशोद्भवपुलिकेशीनाममहाराजेन लब्धसहायो जातः । इति ।

इयं प्रस्तावना पुण्यपत्तनस्थदक्षिणकालेजस्य भूतपूर्वप्रोफेसर पं. काशीनाथ बापूजी पाठक महाशयैः कृपां विधाय लिखिता इति चिराय तेपां वयं कृतज्ञाः स्मः ।

निवेदक—पन्नालाल बाकलीवाल ।



श्रीपरमात्मने नमः ॥

अथ

# पार्श्वाभ्युदयकाव्यं सटीकम् ।

---

टीकाकारस्य मङ्गलाचरणादि ।

श्रियं विदध्याद्विमलां सतां स श्रीपार्श्वनाथो नतसेन्द्रनाथः ।
यद्देहमावेष्ट्य रराज भोगी क्षणप्रभेवासितनीरवाहे ॥ १ ॥

जिनसेनमुनीशेन कृतस्य कविवेधसा ।
पार्श्वाऽभ्युदयकाव्यस्य टीकां वक्ष्ये स्वशक्तितः ॥ २ ॥

नामूलमाश्रयन्नीपन्नापि प्रस्तुतमुत्सृजन् ।
सर्वमन्वयरूपेण विवृणोमि सदूक्तिभिः ॥ ३ ॥

अत्र कथावतारः कथ्यते—

इहैव भरतक्षेत्रे सुरम्यविषये पौदनपुरे अरविन्दनृपतिः भुवं पूर्वं पालयति स्म । तदा विश्वभूतिनाम्नो द्विजन्मनोऽनुदर्य्याश्च तनयौ कमठमरुभूतिसञ्ज्ञकौ तद्भूपतेर्मन्त्रिपदं प्राप्तौ । तयोः क्रमेण वरुणा वसुन्धरा च भार्य्ये बभूवतुः । तयोः कनीयान् मरुभूतिः कदाचित् वज्रवीर्यरिपुराजविजयाय निजस्वामिनारविन्दभूपेनामा[1] जगाम । तदा लब्धावसरो दुराचारो ज्यायान् कमठः स्वभार्य्यावरुणासुखेन वसुन्धरां भ्रातृपत्नीमङ्गीकारयामास किल । राजा विपक्षविजयाऽनन्तरं स्वपुरागमने तद्दुर्वृत्तिं ज्ञात्वा भ्रातृपत्नीमितस्य का वाञ्छेति

---

1 अमा सहेत्यर्थः ।

मरुभूतिं पृष्ट्वा ( श्रुत्वा ) तद्वचनानुसारेण पुरप्रवेशात्पूर्वमेव भृत्य-मुखेन दुःसहामाज्ञां कारयित्वा अस्मच्चक्षुर्विषयो माभूदिति पुरात्कमठं निर्द्धाटयामास[1] । सोऽपि भ्रातरि क्रुद्धो वनं गत्वा तापसवृत्तिं बभार। अथ मरुभूतिरागत्य भ्रातृवार्तामाकलय्य पश्चात्तापाद्गत्वा तमन्विष्य तत्कोपशमनाय पादयोरानमंस्तेनैव क्रोधान्धेन मस्तकस्थ-शिलापातेन मारितः । एवं भवान्तरेष्वपि तेनैव मृतिमित्वेत्वा कश्चिद्भवे तीर्थंकरनाम लब्ध्वाऽत्रैव काशीविषये वाराणसीपुर्यां विश्वसेनमहाराजस्य ब्राह्मीदेव्याश्च सूनुः पञ्चकल्याणाधिपतिः पार्श्व-नाथनामा मरुभूतिचरस्तीर्थंकरो बभूव । कमठचरस्तु चिरं संसारे भ्रमित्वा शम्बरनामा ज्योतिरिन्द्रो भूत्वा स्वैरविहारसमये परिनि-ष्क्रमणकल्याणाऽनन्तरं प्रतिमायोगस्थितं तन्मुनीन्द्रं विलोक्य प्राक्त-नविरोधेन घोरोपसर्गं चकारेत्यादिकथासङ्गतिर्विस्तरेण तत्पुराणेऽ-वगन्तव्या। अत्र ज्योतिरिन्द्रस्य शम्बरस्यास्य दैत्येन्द्रत्वं यक्षेन्द्रत्वं वा तस्यालकापुरवासित्वं वर्षमात्रानुभवनीयस्वभर्तृशापप्रभृति सर्वं च परकाव्यानुसरणमात्रत्वात् काल्पनिकतयोपगम्य अतीतवर्तमानभव-योरभेदभावेन प्रबन्धोऽयं विरचितो बुद्धिमद्भिरवसेयः ॥

अथ भगवान् जिनसेनाचार्यः प्रथमं पादवेष्टितान्युपक्रमन् 'आ-शीर्नमस्क्रियावस्तुनिर्देशो वा कृतेर्मुखम्' इति वचनाद्वस्तुनिर्देशेन कथां प्रस्तौति—

श्रीमन्मूर्त्या मरकतमयस्तम्भलक्ष्मीं वहन्त्या
योगैकाग्र्यस्तिमिततरया तस्थिवांसं निदध्यौ ।
पार्श्वं दैत्यो नभसि विहरन्बद्धवैरेण दग्धः
कश्चित्कान्ताविरहगुरुणा स्वाधिकारात्प्रमत्तः ॥ १ ॥

श्रीमन्मूर्त्येत्यादि ॥ मरकतमयस्तम्भलक्ष्मीम् मरकतस्य विकारो

१ निरकासयत् ।

मरकतमयः। " गारुत्मतं मरकतम् " इत्यमरः। मरकतमयश्चासौ स्तम्भश्च तथोक्तस्तस्य लक्ष्मीं शोभां हरितवर्णकान्तिमित्यर्थः॥ वहन्त्या वहतीति वहन्ती। " सल्लृत्स्यल्टौ " इति शतृप्रत्ययः। " शप्स्यादिनर्मनृदुगिदंचोस्वआदेः" इति। तया बिभ्रत्येति भावः॥ योगैकाग्र्यस्तिमिततरया एकाग्रस्य भावः ऐकाग्र्यमनन्यवृत्तिता। योगस्य ध्यानस्यैकाग्र्यं तथोक्तम्। प्रकृष्टा स्तिमिता स्तिमिततरा। " स्तिमितोऽचञ्चले क्लिन्ने " इति विश्वः। योगैकाग्र्येण स्तिमिततरा तथोक्ता। " योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु। एकतानोऽनन्यवृत्तिरेकाग्र्यैकायनावपि " इत्युभयत्राप्यमरः। तया ध्यानैकतानतास्थिरतरयेति यावत्॥ श्रीमन्मूर्त्या पुण्यवतः पुरुषान् श्रयतीतिश्रीः लक्ष्मीः श्रीरस्यास्तीति श्रीमती। " अस्त्यर्थे मतुः "। 'नृदुग्'इति। वज्रवृषभनाराचसंहननसमचतुरस्रसंस्थानत्वसाष्टशतमहालक्षणलक्षितत्वादिमहिमावतीति भावः। श्रीमती चासौ मूर्त्तिश्च तथोक्ता। " स्त्रियां मूर्त्तिस्तनुस्तनूः " इत्यमरः। "मानिक्यैकार्थयोरुयन्यतोनुः" इति पुंभावः। तया परमौदारिकदिव्यदेहेन॥ तस्थिवांसम् तस्थाविति तस्थिवान्। "लिटः क्वसुकानौ" इति क्वसुः। " उगिदचो वेधादेः " इति नम्। तस्थिवन्तमित्यर्थः॥ पार्श्वं पार्श्वनाथाभिधानं त्रयोविंशतितमं तीर्थंकरपरमदेवम्॥ नभसि आकाशे। " नभोन्तरिक्षम् " इत्यमरः॥ विहरन् विहरतीति विहरन्। " शतुरुगिदचः" इति नम्। स्वैरविहारीति भावः॥ कान्ताविरहगुरुणा कान्ताया वनिताया जातो विरहो विप्रयोगः कान्ताविरहः। " मयूरव्यंसकादयः " इति समासः। तेन युवतिविप्रलम्भेन। गुरुणा महद्भूतेन। " गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे" इति शब्दार्णवः॥ बद्धवैरेण बध्यते स्म बद्धम् तच्च तद्वैरं चेति कसः। जैनेन्द्रव्याकरणपरिभाषायां कस इति सञ्ज्ञा कर्मधारयस्य। " वैरं विरोधः " इत्यमरः। तेन। पुरानुबद्धविद्वेषेण॥ दग्धः दह्यते

स दग्धः । " क्तक्तवतू " इति क्तः । क्रूरहृदय इत्यर्थः ॥ स्वाधिकारात् स्वस्याधिकारः स्वाधिकारः । " स्वो ज्ञातावात्मनि " इत्यमरः । तस्मात् स्वकीयप्राधान्यात् ॥ प्रमत्तः प्रमाद्यते स्म प्रमत्तः अनवहितः । " प्रमादोऽनवधानता " इत्यमरः । " अपायेऽवधौ " इति पञ्चमी ॥ कश्चिद्दैत्यः कोप्यसुरः । " असाकल्ये तु चिच्चन " इत्यमरः । शम्बरनामा देव इति भावः ॥ निदध्यौ प्रेक्षाञ्चक्रे । "ध्यै स्मृ" चिन्तायाम् । कर्तरि लिट् ॥ अत्र काव्ये सर्वत्र मन्दाक्रान्तानि वृत्तानि । " मन्दाक्रान्ता कुहमदीदू " इति रत्नमञ्जूषिकायामुक्तत्वात् ॥ १ ॥

तन्माहात्म्यात्स्थितवति सति स्वे विमाने समानः
प्रेक्षाञ्चक्रे भ्रुकुटिविषमं लब्धसञ्ज्ञो विभागात् ।
ज्यायान्भ्रातुर्वियुतपतिना प्राक्कलत्रेण योऽभू-
च्छापेनास्तंगमितमहिमा वर्षभोग्येण भर्तुः ॥ २ ॥

तन्माहात्म्यादिति ॥ तन्माहात्म्यात् । महांश्चासावात्मा च महात्मा तस्य भावो माहात्म्यम् । " पतिराजान्तः " इति भावे ष्यण् । "आरैचोक्ष्वादेः" इति आकारः । तस्य पार्श्वनाथस्य माहात्म्यं तथोक्तं तस्मात् । तत्तपोमहिम्न इति भावः ॥ स्वे स्वकीये । स्वं त्रिष्वात्मीय-" इत्यमरः ॥ विमाने व्योमयाने "व्योमयानं विमानोऽस्त्री" इत्यमरः ॥ स्थितवति सति तिष्ठति स्मेति स्थितवान् । "क्तक्तवतू" इति क्तवतुप्रत्ययः । तस्मिन् । स्तम्भिते इत्यर्थः । अस्तीति सन् । "शतृत्यः नमस्त्योः " इत्यलुक् । तस्मिन् प्राक्पूर्वभवे ॥ वियुतपतिना । वियुतो विमुक्तः पतिर्भर्त्ता यस्य तथेति वसः[1] । तेन ॥ भ्रातुः मरुभूतेः ॥ कलत्रेण भार्यया वसुन्धरया । "कलत्रं श्रोणिभार्ययोः" इत्यमरः ॥

---

१ जनपदभुवेत्यस्य पाठान्तरं-जैनेन्द्रव्याकरणे बहुव्रीहि समासस्य वस इति परिभाषा च ।

भर्तुः अरविन्दराजस्य। "भर्ता धातरि पोष्टरि" इत्यमरः॥ वर्षभोग्येण वर्षं भोग्यो वर्षभोग्यः। "कालाध्वनोः" इति द्वितीयासमासः। तेन॥ शापेन आज्ञया॥ अस्तंगमितमहिमा अस्तं नाशं "अस्तमदर्शने" इत्यमरः। गमितः प्रापितो महिमा माहात्म्यं यस्य सोऽस्तंगमितमहिमा॥ मानेन सह वर्तते इति समानः "वान्यार्थे" इति सहस्य सभावः। साहंकारः। "गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः" इत्यमरः॥ यो ज्यायान् अग्रजः। "वर्षीयान्दशमी ज्यायान्" इत्यमरः॥ अभूत् अजनिष्ट॥ स दैत्यः विभागात् विभजनं विभागस्तस्मात्। विचारात् विभंगज्ञानादित्यर्थः॥ लब्धसञ्ज्ञः प्राप्तपूर्वभवस्मरणः सन्। "लब्धं प्राप्तं विन्नम्"। "सञ्ज्ञा स्याच्चेतना नाम" इत्युभयत्राप्यमरः॥ भ्रुकुटिविषमं भ्रुकुट्योः क्रोधोद्भूतभ्रूविकारयोः विषमं कुटिलं यथा भवति तथा। "भ्रकुटिर्भ्रुकुटिर्भ्रूकुटिः स्त्रियाम्" इत्यमरः॥ प्रेक्षाञ्चक्रे अद्राक्षीत्। ईक्ष दर्शने इति धातुः। "दयाय" इत्याम्। कृञो योगे लिट्॥२॥

> यो निर्भर्त्सैः परमविषमैर्घाटितो भ्रातरि स्वे
> वद्ध्वा वैरं कपटमनसा हा तपस्वी तपस्याम्।
> सिन्धोस्तीरे कलुषहरणे पुण्यपण्येषु लुब्धो
> यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु॥ ३॥

य इत्यादि॥ यः यक्षः भविष्यद्देवः कमठः॥ परमविषमैः परमाश्च ते विषमाश्च तैः॥ निर्भर्त्सैः धिक्कारैः॥ घाटितः पुरान्निष्कासितः॥ स्वे स्वकीये॥ भ्रातरि सहोदरे॥ वैरं विद्वेषम्॥ वद्ध्वा विधाय॥ तपस्वी तापसो भूत्वा। तपोऽस्यास्तीति तपस्वी। "तपस्सहस्राभ्यां विनीनी" इति विनिः "अस्मायामेधास्रजो विनिः" इति मत्वर्थीयः॥ पुण्यपण्येषु पुण्यमेव पण्यमापणयोग्यवस्तु येषां तेषु। "स्याद्धर्ममस्त्रियां पुण्यम्" "विक्रेयं पणितव्यं च पण्यं क्रय्या-

दयंस्त्रिपु " इत्युभयत्राप्यमरः ॥ जनकतनयास्नानपुण्योदकेपु जनकस्य राज्ञः तनया सीता देवी तस्याः स्नानमभिषेचनं तस्य पुण्याणि पुण्यानीव पुण्यानि परमपतिव्रतासंस्पर्शात् पुण्यरूपाणि उदकानि जलानि तथोक्तानि तेपु । अत्रोदकशब्दस्य बहुवचनं कूपसरोदीर्घिकादितीर्थविशेषं सूचयति ॥ लुब्धः अभिलापुकः । स्नानपानाद्युपयोगमिच्छन्नित्यर्थः । " लुब्धोऽभिलापुकः " इत्यमरः ॥ कलुपहृणे पापापसरणनिमित्ते । " कलुपं वृजिनैनोघमंहो दुरितदुष्कृतम्" इत्यमरः ॥ सिन्धोः सिन्धुनामनद्याः ॥ तीरे कूले । " कूलं रोधश्च तीरं च " इत्यमरः ॥ कपटमनसा कपटेन युक्तं मनस्तथोक्तं तेन । " कपटोऽस्त्री व्याजदम्भोपधयः " इत्यमरः ॥ तपस्यां " नमोवरिवस्तपसः क्यच्" इति क्यच् त्यः। तपश्चरणम् ॥ चक्रे विदधे ॥ हा हन्त । " हा विषादशुगर्त्तिपु " इत्यमरः ॥ ३ ॥

तस्यास्तीरे मुहुरुपलवानूर्ध्वशोषं प्रशुष्यन्-
नुद्वाहुस्सन्परुपमननः पञ्चतापं तपो यः ।
कुर्वन्न स स्मरति जडधीस्तापसानां मनोज्ञां
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेपु ॥ ४ ॥ [1] ॥

तस्या इत्यादि ॥ कमठः जडधीः मन्दबुद्धिः ॥ तस्याः सिन्धुनद्याः ॥ तीरे कूले ॥ मुहुः पुनःपुनः । " पुनः शश्वदभीक्ष्णमसकृत्समाः " इत्यमरः ॥ उपलवान् उपलोऽस्यास्तीति उपलवान् " अस्यास्ति " इति मतुः । " मान्तोवान्तः " इति वः । " उगिदः " इति नम् । " न्यक् " इति दीर्घः । दृपदं धरन् ॥ ऊर्ध्वशोषं प्रशुष्यन् । ऊर्ध्वशोषं प्रशुष्यतीति ऊर्ध्वशोषं प्रशुष्यन् । " शतृत्यः । " " ऊर्ध्वात्पुः शुषः " इति णम् । आतपेन सन्तप्यमानमस्तकाद्यवयवः सन् ॥ उद्बाहुः उद्गतौ बाहू यस्येति बहु-

1. विततमवनिः इति पाठांतरं ।

व्रीहिः । उद्धृतभुजः । " भुजवाहू प्रवेष्टो दोः " इत्यमरः ॥ परुषमननः परुषं कठिनं मननं चिन्तनं यस्येति वहुव्रीहिः ॥ " निष्ठुरं कठिनम् " इत्यमरः ॥ पञ्चतापं पञ्च तापाः यस्मिन्निति वहुव्रीहिः ॥ तपः तपश्चरणम् । पञ्चाग्निमध्यस्थितिरूपं कायमात्रशोषणमिति यावत् ॥ कुर्वन् करोतीति कुर्वन् स । भवन् । " शतृत्यः" ॥ स्निग्धच्छायातरुषु स्निग्धाः सान्द्राः छायातरवः नमेरुवृक्षाः येषु तेषु । सुखवसतियोग्येष्वित्यर्थः । "स्निग्धं तु मसृणे सान्द्रे" "छायावृक्षो नमेरुः स्यात् " इत्युभयत्र शब्दार्णवः ॥ रामगिर्याश्रमेषु रामगिरिनामपर्वतस्थिततापसाश्रमेषु ॥ तापसानां तपसि नियुक्तास्तापसास्तेषाम् ॥ मनोज्ञां रम्याम् । " मनोज्ञं मञ्जु मञ्जुलम् " इत्यमरः ॥ वसतिं स्थानम् ॥ न स्मरति स्म न ध्यायति स्म । "स्मे च लिट् " इति भूतानद्यतनेर्थे लिट् । मनसापि नास्मरदित्यभिप्रायः ॥ ४ ॥

यस्मिन्ग्रावा स्थपुटिततलो दावदग्धाः प्रदेशाः
शुष्का वृक्षा विविधवृतयो नोपभोग्या न गम्याः ।
यस्माद्ग्रीष्मान्नयति दिवसाञ्शुष्कवैराग्यहेतो-
स्तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी ॥ ५ ॥

यस्मिन्नित्यादि ॥ यस्मिन् पर्वते ॥ ग्रावा उपलः । जात्यैकवचनम् । "ग्रावाणौ शैलपाषाणौ" इत्यमरः ॥ स्थपुटिततलः स्थपुटितं निम्नोन्नतं तलमधःप्रदेशो यस्येति वहुव्रीहिः । " स्थपुटं विषमोन्नतम् " इति धनञ्जयः ॥ " अधःस्वरूपयोरस्त्री तलं स्यात् " इत्यमरः ॥ प्रदेशाः अरण्यदेशाः ॥ दावदग्धाः दावाग्निना भस्मिताः । "दवदावौ वनारण्ये " इत्यभिधानात् ॥ वृक्षास्तरवः ॥ शुष्यन्ति स्म शुष्काः ।

१ अत्र तापसानां मिथ्यातपस्विनां संबंधि पंचाग्निमध्यस्थितिरूपं तपः कुर्वन्मनोज्ञां सकलभोग्यद्रव्यजातभरितत्वेन रमणीयां वसतिं सदनं " वसती रात्रिवेश्मनोः" इत्यमरः ॥ नास्मरदित्यपि भाति.

क्तप्रत्ययः "शुष्पचः कम्" इति तस्य कः ॥ विविधवृतयः विविधाश्च ताः वृतयश्चेति बहुव्रीहिः । " विविधः स्याद्बहुविधम्" इति "प्राचीनं प्रान्ततो वृतिः" इति च वचनात् प्रान्तावरणानीत्यर्थः ॥ उपभोग्या न स्थातुं योग्या न भवन्ति ॥ गम्याश्च न विहारयोग्याश्च न भवन्ति ॥ तस्मिन् अद्रौ तन्नामगिरौ ॥ यः अबलाविप्रयुक्तः स्त्रीवियुक्तः सन् । शुष्कवैराग्यहेतोः निष्फलविरक्तिनिमित्तम् ॥ कतिचित् कियतः ॥ ग्रैष्मान् ग्रैष्मस्य इमे ग्रैष्मास्तान् ॥ दिवसान् वासरान् । " क्लीबे दिवसवासरौ " इत्यमरः ॥ नयति स्म यापयति स्म ॥ स कामी विषयाभिलाषुकः । कमठः सोसाविति नवमवृत्तेनाकाङ्क्षानिवृत्तिः ॥ ५ ॥

यं चान्विच्छन्वनमथ नदीमुत्तरारोहशैला-
नित्युद्भ्रान्तश्चिरमनुशयाद्भ्रातृभक्तः कनीयान् ।
शोकाद्देहे कतिचिदवशादत्यनूचानवृत्त्या
नीत्वा मासान्कनकवलयभ्रंशरिक्तप्रकोष्ठः ॥ ६ ॥

यं चेत्यादि ॥ अथ अनन्तरे । " मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ " इत्यमरः ॥ भ्रातृभक्तः ज्येष्ठभ्रातृवत्सलः ॥ कनीयान् मरुभूतिः । " कनीयांस्तु युवाल्पयोः " इत्यमरः ॥ देहे शरीरे ॥ अवशात् अनधीनात् । अपरिमितादित्यर्थः ॥ शोकात् दुःखात् ॥ कनकवलयभ्रंशरिक्तप्रकोष्ठः । कनकस्य वलय इति तत्पुरुषः । "कटकं वलयोऽस्त्रियाम्" इत्यमरः । तस्य । भ्रंशः पातः । "भ्रेषो भ्रंशो यथोचितात्" इत्यमरः । तेन रिक्तो विकलः प्रकोष्ठः कूर्पराऽधः प्रदेशो यस्य स तथोक्तः सन् । " कक्षान्तरं प्रकोष्ठः स्यात् । प्रकोष्ठःकूर्परः " इति शाश्वतः । " स्यात्कफोणिस्तु कूर्परः । अस्योपरि प्रगण्डः स्यात्प्रकोष्ठस्तस्य चाप्यधः " इत्यमरश्च । अत्रोपलक्षणभूतेन वलयभ्रंशेन दुःखाधिक्यं विरागश्च व्यज्यते ॥ अत्यनूचानवृत्त्या

अत्यन्तविनीतवर्तनेन। "अनूचानो विनीते स्यात्साङ्गवेदविचक्षणे" इति विश्वः। "वृत्तिर्वर्तनजीवने" इत्यमरः॥ कतिचित् कियतः॥ मासान् नीत्वा यापयित्वा॥ अनुशयात् पश्चात्तापात्। "अथाऽनुशयो दीर्घद्वेषानुतापयोः" इत्यमरः॥ यं च भ्रातरम्॥ अन्विछन् अन्वेषयन्॥ वनं काननम्॥ नदीम् आपगाम्॥ उत्तरारोहशैलान् उत्तरः आरोहो येषां शैलानां ते तथोक्तास्तान् उपरिभागप्रचारयोग्यानद्रीनित्यर्थः। "उपर्युदीच्यश्रेष्ठेष्वप्युत्तरं स्यादनुत्तरम्" इत्यमरः। अत्र शैलस्य उत्तरारोहविशेषणं नरविहारोचितानामद्रीणां निरवशेषत्वं व्यञ्जयति॥ चिरं बहुवासरान्। "चिरायचिररात्राच्चिरस्याद्याश्चिरार्थकाः" इत्यमरः॥ उद्भ्रान्तः परिभ्रमति स्म॥६॥

यं चापश्यद्गिरिवननदीः पर्य्यटन्सोपि कृच्छ्रा-
दध्वश्रान्तः कतिपयथकैर्वासरैरद्रिकुञ्जे।
दूराद्धूमप्रततवपुषं नीललेश्यं यथोच्चै-
राषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुम्॥ ७॥

यं चापश्यदिति॥ सोपि मरुभूतिरपि॥ गिरिवननदीः पर्वतकान्तारसरितः॥ कृच्छ्रात् कष्टात्। "स्यात्कष्टं कृच्छ्रमाभीलम्" इत्यमरः॥ पर्यटन् पर्यटतीति पर्यटन्। अट् गताविति धातोः शतृत्यः॥ अध्वश्रान्तः मार्गायस्तः। "अयनं वर्त्ममार्गाध्वपन्थानः पदवी सृतिः" इत्युक्तेः॥ आषाढस्य आषाढ्या चन्द्रोपेतया युक्ता पौर्णमासी आषाढी "चन्द्रोपेतात्काले" इत्यण्। टिड्ढाणि इति ङी। आषाढी पौर्णमासी अस्यास्तीत्याषाढो मासः। "सास्य पौर्णमासी" इत्यण्। तस्य॥ प्रथमदिवसे प्रतिपद्दिने॥ आश्लिष्टम् आक्रान्तं सानुपर्वततटं येन स तथोक्तस्तम्। "स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः। उच्चैः अनल्पम्। "महत्युच्चैः" इत्यमरः॥ मेघं वारिवाहम्॥ यथा येन प्रकारेण। यत्तदोर्नित्यसम्बन्धात्तथेति गम्यते। यद्वत्तद्वदितिशेषः। "व वा यथा तथैवैवं

साम्ये" इत्यमरः ॥ धूमप्रततवपुषं धूमेन प्रततम् आवृतं वपुः शरीरं यस्य स इति बहुपदो बहुव्रीहिः । विस्तृतं प्रततमिति । "गात्रं वपुः संहननम्" इत्यभिधानात् । पञ्चाग्निमध्यगतत्वादिति भावः ॥ नीललेश्यं नीला लेश्या परिणामविशेषो यस्य तम् ॥ यं च कमठं च ॥ अद्रिकुञ्जे पर्वतनिकुञ्जे । "अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः।" निकुञ्जकुञ्जौ वा क्लीबे" इत्युभयत्राप्यमरः ॥ कतिपयथकैः कियद्भिः । "षट्ककतिपयात् थुक्" इति थुक्प्रत्ययः । कतिपयानां पूरणाः कतिपयथाः त एव कतिपयथकास्तैः ॥ वासरैः दिवसैः ॥ दूरात् दविष्ठप्रदेशात् ॥ अपश्यत् ददर्श । दृशृ प्रेक्षणे । इतिधातोर्लङि "पाघ्राध्मा" इत्यादिना पश्यादेशः ॥ ७ ॥

यश्चाबद्धभ्रुकुटिकुटिलभ्रूतटो जिह्मवक्रः
क्रोधावेशाज्ज्वलदपघनो भ्रातरं तं तदानीम् ।
स्नेहोद्रेकाच्चरणपतितं नापदृष्टिर्विरूक्षं
वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श ॥ ८ ॥ २ ॥

यश्चेत्यादि ॥ तदानीं तद्दर्शनावसरे । "सदैतर्ह्यधुनेदानींतदानीं सद्यः" इति काले साधुः ॥ यः कमठः ॥ आबद्धभ्रुकुटिकुटिलभ्रूतटः आबद्धा रचिता भ्रुकुटिर्दर्शनविकारजो भ्रूभङ्गविशेषो यस्य तत् । "भ्रुवोश्च कुटिकुंस-" इति ह्रस्वः । कुटिले च ते भ्रुवौ च तथोक्ते तयोस्तटम् आबद्धं भ्रुकुटिकुटिलभ्रूतटं यस्य स तथोक्तः । "आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि" इत्यमरः ॥ जिह्मं वक्रं वक्त्रं मुखं यस्येति बहुव्रीहिः । "जिह्मस्तु कुटिलेऽलसे ।" "वक्त्रास्ये वदनं तुण्डम्" इत्युभयत्राप्यमरः ॥ क्रोधावेशात् क्रोधस्य कोपस्यावेशात् अवतारात् । "कोपक्रोधामर्षरोष-" इत्यमरः ॥ ज्वलदपघनः ज्वलतीति ज्वलन् । "शतृत्यः" ज्वलन्नपघनोऽङ्गं यस्य सः तथोक्तः । "अङ्गं प्रतीकोऽवयवोऽपघनः" इत्यमरः ॥ अपदृष्टिः विमुखदर्शनः

सन्॥ स्नेहोद्रेकात् स्नेहस्य प्रेम्णः उद्रेकात् प्रादुर्भावात्। "प्रेम स्नेहः" इत्यमरः॥ चरणपतितं चरणयोः पादयोः पतितं विनतम्। "पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः॥ वप्रक्रीडापरिणतगजप्रेक्षणीयं वप्रक्रीडा उत्खातकेलयः। "उत्खातकेलिः शृङ्गाद्यैर्वप्रक्रीडा निगद्यते" इति शब्दार्णवः। तासु परिणतः। "तिर्य्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इति हलायुधः। स चासौ गजश्चेति कर्मधारयः। प्रेक्षितुं योग्यः प्रेक्षणीयः वप्रक्रीडापरिणतगज इव प्रेक्षणीयो दर्शनीयस्तम्। "गौणस्तेन" इति समासः तत्पुरुषः कर्मधारयो वा॥ तं भ्रातरं मरुभूतिं॥ विरूक्षम्। विनष्टोरूक्षः अप्रेम यथा भवति तथा "शब्दप्रद" इत्यादिनाऽव्ययीभावः॥ "रूक्षस्त्वप्रेम्ण्यचिक्कणे" इत्यमरः॥ न ददर्श नाऽपश्यत्। विमुखोऽभवदिति तात्पर्यम्॥ ८॥

> सोऽसौ जाल्मः कपटहृदयो दैत्यपाशो हताशः
> स्मृत्वा वैरं मुनिमपघृणो हन्तुकामो निकामम्।
> क्रोधात्स्फूर्ज्जन्नवजलमुचः कालिमानं दधान-
> स्तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतोः॥ ९॥

सोऽसावित्यादि॥ सोऽसौ स एष कमठचरः। सोसावित्युभयप्रयोगो भूतवर्तमानभवेष्वात्म्यैकत्वसाधकः॥ जाल्मः गुणदोषविचारशून्यः। "जाल्मोऽसमीक्ष्यकारी स्यात्" इत्यमरः॥ कपटहृदयः कपटेन युक्तं हृदयं यस्येति बहुव्रीहिः। कुटिलचेताः॥ दैत्यपाशः निन्द्यदेवः। "निन्द्ये पाशप्" इति पाशप्र्त्यः॥ हताशः हता दुष्टा आशा अभिलाषो यस्येति बहुव्रीहिः। "आशा तृष्णापि चायता" इत्यमरः॥ वैरं प्राग्भवविरोधम्॥ स्मृत्वा ध्यात्वा॥ अपघृणः अपगता घृणा यस्य सः। "कारुण्यं करुणा घृणा" इत्यमरः॥ क्रोधात्

---

१ त्यः इति प्रत्ययस्य परिभाषा जैनेन्द्रव्याकरणे,

कोपात् ॥ मुनिं मन्यते केवलज्ञानेन लोकालोकस्वरूपमिति मुनिस्त-म् । भाविनि भूतवदुपचारः । पार्श्वनाथम् ॥ निकामं यथेष्टम् । " निकामेष्टा यथेप्सितम् " इत्यमरः ॥ हन्तुकामः हन्तुं कामयते इति हन्तुकामः । " तुमो मनस्कामः " इति मकारस्य लुक् ॥ स्फूर्जन्नवजलमुचः स्फूर्जतीति स्फूर्जन् । " टुवोस्फूर्जावज्रनिर्घोषे " इति शतृत्यः ॥ जलं मुञ्चतीति जलमुक् । मुच्लृच् मोक्षणे क्विप्प्र्त्यः॥ नवश्चासौ जलमुक् च नवजलमुक् । " नूतने नवः " इत्यमरः । स्फूर्जश्चासौ स चेति पुनः कर्मधारयः । तस्य अध्वनद-भिनवमेघस्य ॥ कालिमानं कालस्य श्यामलस्य भावः कालिमानं श्यामलत्वम् । " पृथ्वादेर्वेमन् " इति भावे इमन्त्यः । " काल-श्यामलमेचकाः " इत्यमरः ॥ दधानः धत्ते इति दधानः दधत् । "सलदीति" आनशृत्यः ॥ कौतुकाधानहेतोः हर्षोपादानकारणस्य । अथ वा । उपसर्गकरणेन स्वमनोहर्षोत्पादनिमित्तमिति हेतौ का । "कौतुकं चाभिलाषे स्यादुत्सवे धर्महर्षयोः " इति विश्वः ॥ तस्य मुनेः ॥ पुरः अग्रे । " स्यात्पुरः पुरतोऽग्रतः " इत्यमरः ॥ कथमपि गरीयसा प्रयत्नेनेत्यर्थः । " ज्ञानहेतुविवक्षायामधिकथमित्यव्ययम् । " कथ-मादितथाप्यन्तं यत्नगौरवबाधयोः " इत्यभिधानात् ॥ स्थित्वा आ-स्थाय ॥ ९ ॥

किञ्चित्पश्यन्मुनिपमनघं स्वात्मयोगे निविष्टं
गाढाऽसूयां मनसि निदधत्तद्वधोपायमिच्छन् ।
क्रूरो मृत्युः स्वयमिव वहन्स्वेदबिन्दून्सरोषा-
दन्तर्बाष्पश्चिरमनुचरो राजराजस्य दध्यौ ॥ १० ॥

किञ्चिदित्यादि ॥ स्वात्मयोगे स्वस्यात्मा तस्य योगस्तथोक्तः तस्मिन् स्वस्वरूपध्याने । " आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म

१ का इति पंचम्यास्संज्ञा ।

वर्म्म च " इत्यमरः ॥ निविष्टं निविशति स निविष्टस्तम् ॥ अनघं न विद्यते अघं पापं यस्य सः तम् । " कलुषं वृजिनैनोघम् " इत्यमरः । अनेन निरपराधकत्वं सूच्यते ॥ मुनिपं मुनीन्पातीति मुनिपस्तम् हितोपदेशेन परमपदप्रापकमित्यर्थः ॥ किञ्चित् ईषत् । " किञ्चिदीषन्मनागल्पे " इत्यमरः ॥ पश्यन् अवलोकयन् ॥ मनसि मानसे ॥ गाढासूयां दृढाक्षान्तिम् । " गाढवाढदृढानि च । " "असूयातु दोषारोपो गुणेष्वपि।" इत्युभयत्राप्यमरः ॥ निदधत् निदधातीति निदधत् स्थापयन् ॥ स्वयम् आत्मैव । " स्वयमात्मनि " इत्यमरः । अव्ययत्वात्सर्वविभक्तिषु प्रयुज्यते ॥ मृत्युरिव यमवत् ॥ क्रूरः घातुकः । " नृशंसो घातुकः क्रूरः " इत्यमरः ॥ तद्वधोपायम् तस्य मुनेः वधस्य हिंसनस्य उपायः चिकित्सा तथोक्तस्तम् । " उपायः कर्म चेष्टा च चिकित्सा च नवक्रिया " इत्यमरः ॥ इच्छन् इच्छतीति इच्छन् । इषु इच्छायामिति धातोः । " यंगमिषोः शिच्छः " इति शिच्छादेशः तस्मात् शतृत्यः ॥ रोषात् क्रोधात् ॥ स्वेदबिन्दून् घर्माम्बुलवान् । "घर्मो निदाघः स्वेदः स्यात्" "पृषन्ति बिन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्" इत्युभयत्राप्यमरः ॥ वहन् धरन् ॥ अन्तर्बाष्पः अन्तस्तम्भिताश्रुः ॥ राजराजस्य राजानो यक्षाः । "राजा प्रभौ नृपे चन्द्रे यक्षे यक्षेशचन्द्रयोः" इति विश्वः । राज्ञां राजा राजराजः कुबेरः । " राजराजो धनाधिपः " इत्यमरः । " राजन्सखेः " इत्यट् ॥ तस्य अनुचरो यक्षः । सः कमठचरः ॥ चिरं बहुकालम् ॥ दध्यौ चिन्तयामास । ध्यै स्मृ चिन्तायाम् । इति धातोः लिट् "नो नोणमेकौशात इत्यौकारः ॥" युग्मम् ॥ १० ॥

मेघैस्तावत्स्तनितमुखरैर्विद्युदुद्योतहासै-
श्चित्तं क्षोभान्द्विरदसदृशैरस्य कुर्वे निकुर्वन् ।

पश्चाच्चैनं प्रचलितधृतिं ही हनिष्यामि चित्रं
मेघालोके भवति सुखिनोप्यन्यथावृत्ति चेतः ॥ ११ ॥

मेघैरित्यादि ॥ तावत् प्रथमतः । " यावत्तावच्च साकल्येवधौ मानेऽवधारणे " स्तनितमुखरैः स्तनितेन गर्जितेन मुखरैर्वाचाटैः । " स्तनितं गर्जितं मेघनिर्घोषे" इति । दुर्मुखे मुखरावद्धमुखौ " इति चामरः ॥ द्विरदसदृशैः गजसमानैः ॥ मेघैः जलदैः ॥ अस्य मुनेः ॥ चित्तक्षोभान् स्वान्तवेपथून् ॥ कुर्वे करोमि ॥ पश्चाच्च तदनन्तरम् । " प्रतीच्यां चरमे पश्चात् " इत्यमरः ॥ एनं मुनिम् । प्रचलित धृतिं प्रचलिता प्रकम्पिता धृतिः धैर्यं यस्य सः तम् । " चलितं कम्पितं धुते । ' धृतिर्धारणधैर्ययोः " इत्युभयत्राप्यमरः ॥ निकुर्वन् निकरोतीति निकुर्वन् निराकुर्वन्नित्यर्थः ॥ चित्रम् अद्भुतं यथा भवति तथा। ही दुःखहेतवो "ही दुःखहेतावुद्दिष्टो ही विस्मयविपादयोः" इति विश्वः ॥ हनिष्यामि घातयिष्यामि ॥ अत्र समर्थनमाह । मेघालोके वारिवाहदर्शने सुखिनोपि मित्रजनसङ्कुलस्यापि । किं पुनरेकाकिन इत्यपिशब्दार्थः ॥ चेतः हृदयम् । " चित्तं तु चेतो हृदयम् " इत्यमरः ॥ अन्यथावृत्ति अन्येन प्रकारेणान्यथा अन्यथाभूता वृत्तिर्वर्त्तनं यस्य तत् अन्यथावृत्ति । " वृत्तिर्वर्त्तनजीवने " इत्यमरः ॥ भवति जायते । प्रमाद्यत इत्यर्थः ॥ ११ ॥

ध्यायन्नेवं मुनिपमभणीन्निष्ठुरालापशौण्डो
भोभो भिक्षो भणतु स भवान्सान्तमन्तार्निरुन्धन् ।
क्षीणक्लेशे सिषिधुषि मतिं किं निधत्तेङ्गितत्वे
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ १२ ॥ ३ ॥

ध्यायन्नित्यादि ॥ एवं कथितरीत्या ॥ ध्यायन् ध्यायतीति ध्यायन्

१ वै इत्यपि पाठः.

चिन्तयन् ॥ निष्ठुरालापशौण्डः निष्ठुरश्चासौ आलापश्च निष्ठुरालापस्तस्मिन् शौण्डः मत्तः । " मत्ते शौण्डोत्कटक्षीबाः " इत्यमरः । कठोरवचनपर इत्यर्थः ॥ मुनिपं पार्श्वनाथम् ॥ अभणीत् अवोचत् ॥ भोभो भिक्षो ! हेहे मुने ! । " भृशाभीक्ष्णाविच्छेदे प्राक् द्विः " इति भोशब्दस्य द्विःप्रयोगः । " अथ सम्बोधनार्थकाः । स्युः प्याट् पाडङ्ग हे है भोः" इति । "भिक्षुः परिव्राट् " इति चामरः । अथवा भोभो इत्येकं पदम् । " अङ्गेत्यामन्त्रणे हेहे भोभो इति च कथ्यते " इति हलायुधः ॥ स्वान्तं चित्तम् ॥ अन्तर्निरुन्धन् अन्तर्दधानः ॥ भवान् पूज्यस्त्वम् ॥ भणतु जल्पतु । ब्रूहीत्यर्थः । भवच्छब्दप्रयोगे प्रथमपुरुष इति वचनात् । " सिपिधुपिसिपाथेतिसिपिधिवन् । " "लिटः क्सुः कस उस् इति उस् । तस्मिन् सिद्धे ॥ क्षीणक्लेशे । क्षीणो नष्टः " क्षि क्षये " इति धातोः क्तः । " भूत्वादेरिः " इति तस्य नः । " क्षेरीतीकारः । " क्षीणः क्लेशो यस्य तस्मिन् ॥ अङ्गितत्वे अङ्गमस्यास्तीत्यङ्गी जीवः स एव तत्वं पदार्थस्तस्मिन् आत्मद्रव्य इत्यर्थः ॥ मतिं बुद्धिं ॥ किं निधत्ते किमर्थं विदधासीति प्रश्नः । अत्रार्थान्तरन्यासः ॥ जने बंधुलोके कण्ठाश्लेषप्रणयिनि ग्रीवालिंगनार्थिनि सति ॥ पुनः पश्चादपि " पुनरप्रथमे भेदे " इत्यमरः ॥ दूरसंस्थे दूरे विप्रकृष्टप्रदेशे संस्था स्थितिर्यस्य तस्मिन् वस्तुनि "संस्थाचारे स्थितौ मृतौ" इत्यभिधानात् ॥ किं किमर्थमभिलषणमिति जुगुप्सा । "किं पृच्छायां जुगुप्सने " इत्यमरः । "उक्तसिद्ध्यर्थमन्यार्थं न्यासोऽन्यार्थपुरःसरम् । कथ्यतेऽर्थान्तरन्यासः " इति वाग्भटः ॥ १२ ॥

इत्युक्तादो मुहुरुपवहन्निश्चितात्मोपसर्गो
बद्धक्रोधः सरभसमसौ भीमजीमूतमायाम् ।
स्वागस्साक्षीन्मुनिपमभितो नो मनागप्यसूरिः
प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी ॥ १३ ॥

इत्युक्तेत्यादि ॥ इति प्रतिपादितप्रकारेण । "इति हेतुप्रकरणप्रकाशादिसमाप्तिषु" इत्यमरः ॥ मुहुः पुनः ॥ अदः अदसो नपुंसकलिङ्गद्वितीयैकवचनम् । एतदुच्यमानस्वरूपम् ॥ उपवहन् धरन् ॥ निश्रितात्मोपसर्गः आत्मना क्रियमाण उपसर्गः आत्मोपसर्गः निश्रितः आत्मोपसर्गो येन स तथोक्तः । "अजन्यं क्लीवमुत्पात उपसर्गः समं त्रयम् " इत्यमरः ॥ बद्धक्रोधः बद्धः क्रोधो येन सः कृतक्रोधः ॥ असौ दैत्यः ॥ सरभसं रभसेन सह वर्तते यस्मिन्कर्मणि तथोक्तं सहर्षम् । सशीघ्रं वा " रभसो वेगहर्षयोः " इत्यमरः ॥ मुनिपं यमीश्वरम् ॥ अभितः सर्वतः । " हाधिक्समया-" इत्यादिना द्वितीया ॥ भीमजीमूतमायां भीमश्चासौ जीमूतश्च । " घोरं भीमं भयानकम् " इत्यमरः ॥ "जीमूतोऽभ्रं बलाहकः " इति धनञ्जयः । तस्य मायां कल्पनाम् ॥ स्राक् रभसेन । " स्राग्झटित्यञ्जसाह्नाय द्राङ् मङ्क्षु सपदि द्रुते " इत्यमरः ॥ अस्राक्षीत् सृष्टिमकरोत् । सृज विसर्गे । लुङ् ॥ अत्र समर्थनमाह । नभसि श्रावणमासे । " नभाः श्रावणिकश्च सः " इत्यमरः ॥ प्रत्यासन्ने सन्निकृष्टे । " समीपे निकटासन्नसन्निकृष्टसनीडवत् " इत्यमरः ॥ दयिताजीविताल्म्बनार्थी दयितायाः प्रियायाः जीवितं जीवनं तस्यालम्बनम् आधारः तदर्थत इत्येवंशीलः तथोक्तः । " रमणी दयिता प्रिया " इति धनञ्जयः । विमुक्तकान्ताजीवनोपायाऽभिलाषी ॥ मनागपि ईषदपि । " किञ्चिदीषन्मनागल्पे " इत्यमरः ॥ असूरिः न सूरिः असूरिः अपण्डितः । " पण्डितः सूरिराचार्यः " इति धनञ्जयः ॥ नो न भवति । " अभावे नह्य नो नापि " इत्यमरः । नभसो मासस्य विरहदुःखोद्रेकहेतुत्वात्स्वाभिप्रेतसिद्धये शीतको न भवेदिति तात्पर्यम् ॥ १३ ॥

विद्युन्मालास्फुरितरुचिरे मेघजाते नताशे
स्फूर्जद्वज्रे झटिति कमठो वृष्टिपातं ससर्ज ।

कालेनासौ किल जलभृतां योगिनं तं वितन्वन्
जीमूतेन स्वकुशलमयीं हारयिष्यन्प्रवृत्तिम् ॥ १४ ॥

विद्युन्मालेत्यादि ॥ विद्युन्मालास्फुरितरुचिरे विद्युतां सौदामनीनां । " तडित्सौदामनी विद्युत् " इत्यमरः । माला पङ्क्तिः । " माला पङ्क्तिः पुष्पादिदामनि " इति भास्करः । तस्याः स्फुरितेन प्रकाशेन रुचिरं मनोहरं यस्य तस्मिन् । "सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्" इत्यमरः ॥ स्फूर्जद्वज्रे स्फूर्जत् निर्घोषत् वज्रमशनिर्यस्य तस्मिन् । " वज्रोऽस्त्री हीरके पवौ " इत्यमरः ॥ मेघजाते मेघानां जातं समूहस्तस्मिन् । "उत्पन्नभूतयोर्जातं वृन्दजात्योस्तु न द्वयोः" इत्यनेकार्थरत्नमाला ॥ नताशे नता व्याप्ता आशा दिशो येन तस्मिन्स्तति । " आशाश्च हरितश्च ताः " इत्यमरः ॥ असौ कमठः ॥ कालेन कृष्णेन । " कालश्यामलमेचकाः " इत्यमरः ॥ जीमूतेन मेघेन । " जीमूतौ मेघपर्वतौ " इत्यमरः ॥ तं मुनिम् ॥ जलभृतां वलाहकानाम् ॥ योगिनं संसर्गिणम् । "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु" इत्यमरः ॥ वितन्वन् वितनोतीति वितन्वन् । तनोतेः शतृत्यः ॥ स्वकुशलमयीं स्वस्य कुशलमयीम् पुण्यमयीम् । "कुशलं क्षेममस्त्रियाम् " इत्यमरः ॥ प्रवृत्तिं प्रवर्तनम् । प्रवृत्तिं प्रकृष्टां वृत्तिमित्यर्थः । "वृत्तिर्वर्तनजीवने" इत्यमरः । अथवा प्रवृत्तिं वृत्तान्तम् । " वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात् " इत्यमरः । " वृतुङ् वर्तने " स्त्रियां क्तिन् त्यः ॥ हारयिष्यन् हारयिष्यतीति हारयिष्यन् । " हृञ् हरते धातोस्तासौ लुलरोरिति स्सत्यः । " " वलादेः " इतीट् । " संज्ञद्भुत्स्यंल्लृटौ " इति शतृत्यः । नाशयिष्यन् । उपसर्गविधानादिति यावत् ॥ वृष्टिपातं वर्षपतनम् ॥ झटिति शीघ्रम् । " स्राग्झटित्यञ्जसाह्नाय " इत्यमरः ॥ ससर्ज निर्मिमीते स्म । " सृज विसर्गे । " लिट् ॥ किल वार्तायाम् । " वार्तासम्भाव्ययोः किल " इत्यमरः ॥ १४ ॥

एवं प्रायां निकृतिमधमः कर्तुमारब्धभूयो
मायाशीलश्चिरपरिचिताद्वैरबन्धात्प्रकुप्यन् ।
सिद्धैस्तन्निष्क्रमणसमये योगिने भक्तिनम्रैः
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै ॥ १५ ॥

एवमित्यादि ॥ भूयः पुनः ॥ चिरपरिचितात् चिरं बहुकालं परिचियते स्मेति परिचितः तस्मात् । बहुकालमभ्यस्तात् ॥ वैरबन्धात् विरोधानुबन्धात् ॥ प्रकुप्यन् प्रकोपितः सन् ॥ मायाशीलः मायया कपटेन युक्तं शीलं स्वभावो यस्य सः । "शीलं स्वभावे सद्वृत्ते" इत्यमरः ॥ अधमः निकृष्टः । "निकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमाः" इत्यमरः ॥ सः कमठः ॥ तन्निष्क्रमणसमये तस्य मुनेः निष्क्रमणस्य परिनिष्क्रमणस्य समये काले । "कालो दिष्टोप्यनेहापि समयोपि" इत्यमरः ॥ भक्तिनम्रैः नमन्तीत्येवं शीला नम्राः भक्त्या गुणानुरागेण नम्रास्तैः ॥ सिद्धैः देवविशेषैः । "पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः" इत्यमरः ॥ प्रत्यग्रैः नवैः । "प्रत्यग्रोऽभिनवो नव्यः" इत्यमरः ॥ कुटजकुसुमैः कुटजानां वनमल्लिकानां कुसुमैः पुष्पैः । "कुटजो वनमल्लिका" इति हलायुधः ॥ कल्पितार्घाय कल्प्यते स्म कल्पितः अर्घः पूजाविधिर्यस्य तस्मै । "मूल्ये पूजाविधावर्घः" इत्यमरः ॥ तस्मै योगिने पार्श्वमुनये ॥ एवं वक्ष्यमाणरीत्या ॥ प्रायां बहुलाम् । "प्रायो बहुत्वे मृत्यौ च तुल्यानशनयोरपि" इत्यभिधानात् । "प्रायो भून्म्यन्तगमने" इत्यमरयान्तपाठाच्चानन्ययोऽयं शब्दः ॥ निकृतिं निराकृतिम् । "कुसृतिर्निकृतिः शाठ्यम्" इत्यमरः । "निकृतिर्भर्त्सने क्षेपे वदन्ति शठशाठ्ययोः" इति विश्वः ॥ कर्तुं विधातुम् ॥ आरब्ध आरेभे । "रभि राभस्ये" लुङात्मनेपदम् ॥ १५ ॥

पर्जन्यानां ध्वनिमनु सकः स्फावयन् सिंहनादा-
नाक्रोशैः स्वैर्मुनिपरिसरात्तर्जयन्नाशदैत्यः ।
हा धिग्मूढं भगवति मुनौ पूर्वबन्धौ न चोच्चैः
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ १६ ॥ ४ ॥

पर्जन्यानामिति ॥ सकः कुत्सितः सः सकः कमठचरः ॥ नाशदैत्यः नाशेन प्रेरितो दैत्यः तथोक्तः । "पृषोदरादित्वात्समासः" आत्मनाशार्होऽसुरः ॥ मुनिपरिसरात् समीपभूमेः । "पर्यन्तभूः परिसरः" इत्यमरः ॥ पर्जन्यानां मेघानाम् । "पर्जन्यौ रसदब्देन्द्रौ" इत्यमरः ॥ ध्वनिमनु ध्वनिप्रतिभागिनि च । "प्रतिपर्यनुभिः" इति द्वितीया ॥ सिंहनादान् सिंहध्वनीन् ॥ स्फावयन् वर्धयन् । स्फावयतीति स्फावयन् । "स्फायैङ् वृद्धौ" इति धातोः । "कथातिपातिस्फायो ग्ललावमीति" वमागमः । शतृत्यः ॥ स्वैः स्वकीयैः ॥ आक्रोशैः शपनध्वनिभिः ॥ तर्जयन् तर्जयतीति तर्जयन् भर्त्संयन्नित्यर्थः ॥ पूर्वबन्धौ पूर्वभवानुजे ॥ भगवति माहात्म्यवति । "भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु" इत्यमरः ॥ मुनौ योगिनि ॥ उच्चैः अधिकम् ॥ प्रीतः सन्तुष्टः सन् ॥ प्रीतिप्रमुखवचनं प्रीतिमुखाणि प्रीतिपूर्वाणि वचनानि यस्मिन् तत् प्रीतिप्रमुखवचनं यथा भवति तथा ॥ स्वागतं शोभनमागतं स्वागतं क्षेमागमनम् ॥ न व्याजहार न ब्रवीति स्म । व्याङ्पूर्वस्य हृञो धातोर्लिट् ॥ मूढं मूर्खम् त्वाम् ॥ हा धिक् । प्राग्भवबन्धोः स्वामिनो दर्शने प्रीत्या कुशलोदन्तं न पप्रच्छ किन्तु सिंहनादप्रभृति तर्जनमेव चकारेति भावः ॥ १६ ॥

क्वायं योगी भुवनमहितो दुर्विलङ्घ्यस्वशक्तिः
क्वासौ क्षुद्रः कमठदनुजः केभराजः क्व दंशः ।

---

१ क्व इति मङ्कन्तरे ।

क्वासद्ध्यानं चिरपरिचितध्येयमाकालिकोऽसौ
धूमज्योतिः सलिलमरुतां सन्निपातः क्व मेघः ॥ १७ ॥

कायमिति ॥ भुवनमहितः भुवनेन लोकेन मह्यते स्म भुवनमहितः । त्रिलोकपूजित इत्यर्थः ॥ दुर्विलङ्घ्यस्वशक्तिः दुर्विलङ्घ्या अनिवार्या स्वशक्तिर्यस्येति बहुपदो बहुव्रीहिः ॥ अयं योगी एष मुनिः ॥ क्व कुत्र ॥ क्षुद्रः नीचः ॥ असौ कमठदनुजः अयं कमठचरदैत्यः ॥ क्व इभराजः गजेन्द्रः ॥ क्व दंशः दंशनामा जन्तुः । " दंशस्तु वनमक्षिका " इत्यमरः ॥ क्व असत् अशुभम् ध्यानं ॥ क्व चिरपरिचितध्येयं चिरात् परिचितमभ्यस्तं ध्येयं ध्यातव्यं वस्तु यस्य तत् चिरेणाभ्यस्तविषयमित्यर्थः । ध्यानं शुभध्यानम् क्व ॥ आकालिकः अकाले भवः आकालिकः अनवसरजः ॥ धूमज्योतिः सलिलमरुतां धूमश्च ज्योतिश्च सलिलं च मरुच्च "ज्योतिः खद्योतदृष्टिषु" इत्यमरः । तेषां सन्निपातः सङ्घातः ॥ असौ मेघः कालमेघः क्व ॥ १७ ॥

क्वायं देवो विलसदणिमाद्यष्टभेदस्थितर्द्धिः
क्वाल्पर्धित्वाद्गुरुसुरपशुः क्वाद्रिराट् क्वोपलौघः ।
क्वास्योद्योगः क्व नु मुनिगुणा दुर्विभेदाः क्व मूकः
संदेशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ॥ १८ ॥

क्वायं देव इति ॥ विलसदणिमाद्यष्टभेदस्थितर्द्धिः अणोर्भावः अणिमा । " पृथ्व्यादेरिमन् " इतीमन्त्यः । अणिमा आदिर्येषां ते तथोक्ताः । विलसन्तश्च ते आणिमादयश्चेति कर्मधारयः । अष्ट च ते भेदाश्चाष्टभेदाः । विलसदणिमादयश्च ते अष्टभेदाश्च तथोक्तास्तैः । स्थिता नित्यतया वसन्त्यः ऋद्धयः तपःप्रभावोद्भूतगुणाः यस्येति बहुपदो बहुव्रीहिः ॥ अयं देवः स्वामी क्व ॥ अल्पर्धित्वात् स्तोकैश्वर्यत्वात् ॥ गुरुसुरपशुः सुरः पशुरिवेति सुरपशुः गुरुर्महांश्चासौ

सुरपशुश्च तथोक्तः क ॥ क अद्रिराट् अद्रीणां राट् तथोक्तः "राज्ञि राट्" इत्यमरः । अगेन्द्रः ॥ क उपलौघः उपलानामश्मनामोघः समूहस्तथोक्तः । "पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्" इति "स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः" इति चामरः ॥ क अस्य कमठचरस्य ॥ उद्योगो व्यापारः ॥ क 'नु' दुर्विभेदाः भेत्तुमशक्याः ॥ मुनिगुणाः योगिगुणाः । क "नु पृच्छायां वितर्के च" इत्यमरः ॥ मूकः अज्ञः । वक्तुं श्रोतुमशिक्षित इत्यर्थः । "मुग्धो मूढो जडोऽनेडो मूको मूर्खश्च कद्वदः" इति धनञ्जयः ॥ क पटुकरणैः पटूनि स्फुटानि करणानीन्द्रियाणि येषां तैः विशदेन्द्रियैरित्यर्थः । "करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि" । "दक्षामंदागदेषु च । पटुर्द्वौ वाच्यलिङ्गौ च" इत्युभयत्राप्यमरः ॥ प्राणिभिः प्राणाः सन्ति येषां तैर्जीवैः । "प्राणी तु चेतनो जन्मी" इत्यमरः ॥ प्रापणीयाः प्रापयितव्याः । "आप्लृ प्राप्तौ" इति धातोस्तव्यानीयत्यः ॥ सन्देशार्थाः सन्दिश्यन्त इति सन्देशाः । "सन्देशः प्रिययोर्वार्ता" इति धनञ्जयः । तेषाम् अर्थास्ते क ॥ १८ ॥

सत्यप्येवं परिभवपथे योजयन्स्वं दुरात्मा
मत्यौद्धत्यात्स्वयमुपवहन्वारिवाहच्छलेन ।
मायायुद्धं मुनिपमुपमाक्षीणको दुर्जयोऽय-
मित्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे ॥ १९ ॥

सत्यप्येवमिति ॥ एवं सत्यपि ॥ दुरात्मा दुष्टस्वरूपः कमठः ॥ स्वम् आत्मानम् ॥ परिभवपथे परिभवस्यानादरस्य पन्थाः मार्गस्तथोक्तस्तस्मिन् । "ऋक्पूःपथ्यपात्" इति अत्यः । "अनादरः परिभवः परीभावस्तिरस्क्रिया" इत्यमरः ॥ योजयन् योजयतीति योजयन् । युजृष् योगे" इति शतृत्यः । सम्बन्धयन् । मत्यौद्धत्यात् उद्धतस्य

१ शमदमादयः ।

भावः औद्धत्यं मतेरौद्धत्यं तस्मात् । बुद्ध्यहङ्कारादित्यर्थः ॥ "सोन्मादस्तून्मदिष्णुः स्यादविनीतः समुद्धतः " इत्यमरः ॥ स्वयम् आत्मा ॥ वारिवाहच्छलेन मेघव्याजेन । " व्यपदेशं निभं व्याजं पदं व्यतिकरं छलम् । छद्म " इति धनञ्जयः ॥ मायायुद्धं मायारूपं विग्रहम् ॥ उपवहन् धरन् ॥ औत्सुक्यात् औत्सुकस्य भावः औत्सुक्यं तस्मात् स्वेष्टारतत्वात् । " इष्टार्थोद्युक्त उत्सुकः " इत्यमरः ॥ अयं मुनिः । उपमाक्षीणकः तुलारहितः ॥ दुर्जयः दुःसाध्यः ॥ इति एवम् ॥ अपरिगणयन् अविचारयन् ॥ गुह्यकः कमठचरः । " गुह्यकः सिद्धो भूतः " इत्यमरः ॥ तं मुनिपं ययाचे याचति स्म ॥ १९ ॥

जाता रम्या सपदि विरलैरिन्द्रगोपैस्तदा भूः
सेव्याः केकिध्वनितमुखरा भूभृतां कुञ्जदेशाः ।
योगिंस्तस्मिञ्जलदसमये प्रस्खलेर्नात्मधैर्यात्
कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ २० ॥ ५ ॥

जातेति ॥ तदा तद्याचनसमये ॥ भूः भूमिः ॥ विरलैः पेलवैः । " पेलवं विरलं तनु " इत्यमरः ॥ इन्द्रगोपैः रक्तवर्णकृमिविशेषैः ॥ सपदि सद्यः । " सद्यः सपदि तत्क्षणे " इत्यमरः ॥ रम्या मनोहरा । " रम्यं सौम्यं च सुन्दरम् " इति धनञ्जयः ॥ जाता जायते स्म । " भूभृद्भूमिधरे नृपे " इत्यमरः ॥ कुञ्जदेशाः निकुञ्जप्रदेशाः । " निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे " इत्यमरः ॥ केकिध्वनितमुखराः केकिनां मयूराणां ध्वनितेन ध्वनिना मुखराः शब्दयुताः। " दुर्मुखे मुखराबद्धमुखौ " इत्यमरः ॥ सेव्याः सेवितुं योग्याः ॥ जाताः जायन्ते स्म । अर्थवशाद्विभक्तया विपरिणाम इत्युभयत्राप्यन्वयः ॥ योगिन् भो मुने त्वं तस्मिन् जलदसमये तादृशे वर्षाकाले ॥

---

१ द्विकर्मकोयं प्रयोगः दुरात्मायं भगवन्तं दुर्जयमित्यनालोचयन्युद्धाय एहीति प्रार्थयामासेति भावः ।

आत्मधैर्यान् स्वमनोबलात् । " धैर्यं शौर्यं च पौरुषम् " इति धनञ्जयः ॥ न प्रस्खलेः न चलेः ॥ तथा हि । कामार्ता हि वांछितार्थपीडिता हि ॥ चेतनाचेतनेषु चेतनाश्चाचेतनाश्च चेतनाचेतना इति द्वन्द्वः । तेषु चिदचिद्रूपपदार्थेषु ॥ प्रकृतिकृपणाः स्वभावदीनाः । "स्वभावः प्रकृतिः शीलं निसर्गो विस्रसा निजम् ।" "कीनाशः कृपणो लुब्धो गृध्नुर्दीनोऽभिलाषुकः ।" इत्युभयत्रापि धनञ्जयः ॥ हि स्फुटम् । " हि हेतावन्वधारणे " इत्यमरः ॥ कामार्तानामेव जलदसमये चेतनाचेतनद्रव्येषु दैन्यं गमिते कामादेरिति तात्पर्यम् ॥ २० ॥

ऊर्ध्वज्ञुं तं मुनिमतिघनैः कालमेघैः प्रयुक्तो
धारासारो भुवि नमयितुं नाशकद्दुःसहोऽपि ।
जात्याश्वानामिव बहुगुणे भूभृतामुग्रनाम्नां
जातं वंशे भुवनविदिते पुष्कलावर्तकानाम् ॥ २१ ॥

ऊर्ध्वज्ञुमिति ॥ अतिघनैः परमसान्द्रैः । " घनं निरन्तरं सान्द्रम् " "प्रकर्षे लङ्घनेप्यति" इत्युभयत्राप्यमरः ॥ कालमेघैः कृष्णघनैः ॥ प्रयुक्तः विहितः ॥ धारासारः धाराणामासारस्तथोक्तः । प्रकृष्टवृष्टिरित्यर्थः । "धाराम्बुताने चोत्कर्षो" "आसारो वेगवद्वर्षम् " इत्युभयत्राप्यमरः ॥ भुवि भुवने ॥ दुःसहोपि सोढुमशक्तोपि ॥ पुष्कलावर्तकानां पुष्कलः शुद्धः आवर्तो येषां तेषां देवमण्यादियोग्यावर्तकानाम् ॥ जात्याश्वानां जातौ भवाः जात्याः । "जातः कुलजकान्तयोः" इत्यमरः । जात्याश्च ते अश्वाश्च जात्याश्वास्तेषाम् ॥ भुवनविदिते लोकप्रसिद्धे विशिष्टे वा । " बुद्धं बुधितं विदितं मनितं प्रतिपन्नमवगतावसितम् " इत्यमरः ॥ बहुगुणे बहवो गुणा अश्वयोग्या यस्मिन् तस्मिन् ॥ वंशे अन्वये । " वंशोऽन्ववायः सन्तानः " इत्यमरः ॥ जातमिव सम्भूतमिव विशिष्टवाजिनमिवेत्यर्थः ॥ पुष्कलावर्तकानां पुष्कलः विशुद्धः आवर्तः लक्षणविशेषो येषां तेषाम् ॥ "विशदे पुष्क-

लामलम् " इति धनञ्जयः ॥ उग्रनाम्नाम् उग्रवंशाभिधानानाम् ॥ भूभृतां राज्ञाम् ॥ वहुगुणे औदार्यादिवहुलगुणयुक्ते ॥ भुवनविदिते त्रिजगद्विख्याते ॥ वंशे गोत्रे ॥ जातम् उत्पन्नम् ॥ ऊर्ध्वज्ञुं ऊर्ध्वे जानुनी यस्येति ऊर्ध्वज्ञुस्तम् ऊर्ध्वजानुम् । "वोर्ध्वात्" इति जानुनो ज्ञुज्ञावादेशौ । "ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्" इत्यमरः । कायोत्सर्गस्थितमित्यर्थः ॥ तं मुनिं पार्श्वयतीन्द्रम् ॥ नमयितुं नम्रीकर्तुं ॥ नाशकत् न शक्नोति स्म । तद्ध्यानवृत्तिं चलयितुं समर्थो नाभवदिति तात्पर्यम् ॥ २१ ॥

भूयः क्षोभं गमयितुमनाः स्वान्तवृत्तिं मुनीन्दो-
वाचाटत्वं प्रचिकटयिषुर्धीरमेवं जजृम्भे ।
भोभो वीर स्फुटमिति भवान् मय्यगादल्पमृत्युं
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः ॥ २२ ॥

भूय इति ॥ भूयः पुनः ॥ मुनीन्दोः इन्दुरिव इन्दुः मुनीनामिन्दुः तस्य मुनिचन्द्रस्येत्यर्थः ॥ स्वान्तवृत्तिं चित्तवर्तनम् । "वृत्तिर्वर्त्तनजीवने " इत्यमरः ॥ क्षोभं सञ्चलम् ॥ गमयितुमनाः प्रापयितुमिच्छन् । " तुमो मनस्कामः " इति तुमो मकारस्य लोपः ॥ वाचाटत्वं वहुगर्ह्यवाक्त्वम् । " वागालाटौ " इत्याटत्यः । " स्याज्जल्पाकस्तु वाचालो वाचाटो वहुगर्ह्यवाक् " इत्यमरः ॥ प्रचिकटयिषुः प्रकटयितुमिच्छुः । " सन्भिक्षाशंस्विन्द्विच्छादुः " इत्युत्यः ॥ एवं वक्ष्यमाणप्रकारेण ॥ धीरं धीरत्वम् यथा तथा जजृम्भे जृम्भते स्म वभाणेत्यर्थः । " जृंभूङ् गात्रविनामे " लिट् ॥ भोभो वीर हेहे शूर ॥ भवान् त्वम् ॥ मयि कमठचरे ॥ अल्पमृत्युम् अल्पश्चासौ मृत्युश्च तम् ॥ स्फुटं व्यक्तम् । " स्फुटं प्रव्यक्तमुल्वणम् " इत्यमरः ॥ अगात् । " इणु गतौ " इति धातोः लुङि गैत्योरिगादेशः । अगमदित्यर्थः ॥ इति एवम् ॥ त्वां मुनिम् ॥ मघोनः इन्द्रस्य । " इन्द्रो मरुत्वान्मघवा"

इत्यमरः ॥ कामरूपम् इच्छादानविग्रहम् । " इच्छामनोभवौ कामौ " इत्यमरः । दुर्गादिसञ्चारक्षममित्यर्थः ॥ प्रकृतिपुरुषं प्रधानपुरुषम् । " प्रकृतिः सहजे योनावमात्ये परमात्मनि " इति विश्वः ॥ जानामि मन्ये ॥ २२ ॥

येनाऽमुष्मिन्भवजलनिधौ पर्यटन्नैकधा मां
रूयर्थैरुयर्थे परिभवपदं प्रापिपस्त्वं प्रमत्तम् ।
कृच्छ्राल्लब्धे पुनरिति चिराद्वैरनिर्यातनायां
तेनाऽर्थित्वं त्वयि विधिवशाद्दूरबन्धुर्गतोऽहम् ॥ २३ ॥

येनेति ॥ येन कारणेन ॥ अमुष्मिन् भवजलनिधौ जलानि निधीयन्तेऽस्मिन्निति जलनिधिः । भवः संसारः "भावो भवश्च संसारः सरण्यं चैव संसृतिः" इति धनञ्जयः । स एव जलनिधिस्तस्मिन् ॥ पर्यटन् भ्रमन् ॥ त्वं भवान् ॥ रूयर्थैरुयर्थे । आभीक्ष्ण्ये द्विः । स्त्रीनिमित्तम् ॥ प्रमत्तं प्रमाद्यति स्म प्रमत्तः तं प्रमादवन्तम् ॥ मां कमठचरम् ॥ नैकधा अनेकप्रकारेण । न एकधा अनेकधेत्यलुक्समासः ॥ परिभवपदं परिभवस्य पदं तथोक्तम् । तत् तिरस्कृतिस्थानम् । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु " इत्यमरः ॥ प्रापिपः प्रापयसि स्म । " आपॢ व्याप्तौ " इति धातोः सनि लङ् ॥ तेन कारणेन ॥ पुनः चिरात् बहुकालात् । इति गवम् । कृच्छ्रात् कष्टात् । " स्यात्कष्टं कृच्छ्रमाभीलम् " इत्यमरः ॥ लब्धे प्राप्ते ॥ त्वयि भवति ॥ विधिवशात् कर्मवशात् । " नियतिर्विधिः " इत्यमरः ॥ दूरबन्धुः दूरो विप्रकृष्टो बन्धुर्बान्धवो यस्येति बहुव्रीहिः । वियुक्तस्वजन इत्यर्थः । " बन्धुः स्वस्वजनाः समाः " इत्यमरः ॥ अहम् वैरनिर्यातनायां वैरविशुद्धिनिमित्तम् । " वैरशुद्धिः प्रतीकारो वैरनिर्यातनं च सा " इत्यमरः ॥ अर्थित्वं याचकत्वम् ॥ गतः प्राप्तोऽस्मि ॥ २३ ॥

तस्माद्वीरप्रथमगणनामाप्तुकामस्त्वकं चे-
त्पूर्वप्रीत्या सुभट सफलां प्रार्थनां मे विधत्स्व ।
कालाद्याचे परमपुरुषं त्वाभियायाद्ययुद्धं
याच्ञा मोघां वरमधिगुणे नाधमे लब्धकामा ॥ २४ ॥ ६ ॥

तस्मादिति ॥ तस्मात् कारणात् ॥ परमपुरुषम् उत्कृष्टपुरुषं ॥ त्वा भवंतम् । "त्वामौ द्वितीयायाः" इति युष्मदस्त्वादेशः ॥ कालात् कालवशात् ॥ अभियाय अभिगम्य ॥ अद्य इदानीम् । "अद्यात्राह्नि" इत्यमरः ॥ युद्धं सङ्ग्रामम् ॥ याचे प्रार्थये ॥ सुभट हे महावीर ॥ त्वकं त्वमेव त्वकं भवान् ॥ वीरप्रथमगणनाम् वीरेषु शूरेषु प्रथमामाद्याम् गणनां सङ्ख्याम् ॥ आप्तुकामः आप्तुमिच्छन् ॥ चेत् यदि भवेः । "पक्षान्तरे चेद्यदि च" इत्यमरः ॥ पूर्वप्रीत्या कमठमरुभूतिभवप्रेम्णा ॥ मे मम । "ते मयावेकत्वे" इति अस्मदो मे इत्यादेशः ॥ प्रार्थनां याचनाम् ॥ सफलां फलसहिताम् ॥ विधत्स्व कुरुष्व । "डुधाञ् धारणे" च लेट्[1] ॥ तथा हि । अधिगुणे अधिकगुणे पुरुषे ॥ याच्ञा प्रार्थना मोघा निरर्थकापि । "मोघं निरर्थकम्" इत्यमरः ॥ वरं सम्यक् । "क्लीबं तु कुंकुमे श्रेष्ठे त्रिष्वेतेष्वव्ययं वरम्" इति भास्करः ॥ अधमे निकृष्टे ॥ लब्धकामा प्राप्ताभिलाषापि । "कामोऽभिलाषस्तर्षश्च" इत्यमरः ॥ न वरं न सम्यक् ॥ २४ ॥

जेतुं शक्तो यदि च समरे मामभीक प्रहृत्य
स्वर्गस्त्रीणामभयसुभगं भावुकत्वं निरस्यन् ।
पृथ्व्या भक्त्या चिरमिह वहन् राजयुद्धेतिरूढिं[2]
सन्तप्तानां त्वमसि शरणं तत्पयोदप्रियायाः ॥ २५ ॥

जेतुमिति ॥ अभीक न विद्यते भीर्भयं यस्येत्यभीकः तस्य सम्बो-

---

१ लेडिति लोटः नामांतरं जैनेंद्रादिव्याकरणेषु । २ पाठान्तरे 'राजयोद्धा' ।

धनं हे सप्तभयविप्रयुक्त । " अभीकः कामुके क्रूरे कवौ च भयवर्जिते ।" इति विश्वः ॥ समरे रणे । " अस्त्रियां समरानीकरणाः " इत्यमरः ॥ मां यक्षम् ॥ प्रहृत्य घातयित्वा । जेतुं जयनाय ॥ यदि च शक्तः त्वं समर्थोसि चेत् । " यत्तद्यतस्ततो हेतौ " इत्यमरः ॥ इह अस्मिन् जगति ॥ राजयुध्वा राजानं योधितवानिति राजयुद्धा राजसहा " कृत्र्यादिभ्यामिति क्वनिप् । " कवौ युगे मृगाङ्के च शक्रे राजा विभावितः " इत्यभिधानात् ॥ " यक्षंयोधकः " इत्यमरः ॥ इति एवम् ॥ रूढिं प्रसिद्धिम् ॥ वहन् धरन् ॥ सन्तप्तानां विरहसंज्वलितानाम् । " सन्तापः सञ्ज्वरः समौ " इत्यमरः ॥ स्वर्गस्त्रीणां देवस्त्रीणाम् ॥ अभयसुभगम् अभयेन त्वत्प्रापणधैर्येण सुभगं मनोरमं ॥ भावुकत्वं क्षेमत्वम् । " भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम् " इत्यमरः ॥ निरस्यन् निराकुर्वन् ॥ पयोदप्रियायाः पयोदस्य प्रिया तथोक्ता तस्याः पयोदनाम्नः स्वस्यासुरस्य कान्तायाः । " रमणी दयिता प्रिया " इति धनञ्जयः ॥ पृथ्व्या महत्या ॥ भक्त्या भजनं भक्तिः तया अनुरागेण ॥ चिरं बहुकालम् ॥ त्वं भवान् । शरणं रक्षकः । " शरणं गृहरक्षित्रोः " इत्यमरः ॥ असि भवसि ॥ मुनेर्जये मरणाभावादेव स्त्रीणामक्षेमता । यक्षस्य हतौ तत्प्रियाया मुनीन्द्रशरण्यता च भवतीति भावः ॥ २५ ॥

याचे देवं मदसिहतिभिः प्राप्य मृत्युं निकारान्–
मुक्तो वीरश्रियमनुभवन्स्वर्गलोकेऽप्सरोभिः ।
नैवं दाक्ष्यं यदि तव ततः प्रेष्यतामेत्य तूर्णीं
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ॥ २६ ॥

---

१ यदि मां जेष्यसि ते मरणाभावात्स्वर्गस्त्रीवरत्वाभावाय मत्प्रियायाः शरणं भविष्यसीति । २ धनपतिक्रोधविश्लेषितस्येत्यत्र कुबेरकर्तृकक्रोधविरहितस्येत्यर्थकरणेन कुबेरप्रसादलब्धैश्वर्यसमृद्धस्य मे इत्यर्थोपि भासते ।

याच इति ॥ देवं त्वाम् ॥ याचे प्रार्थये ॥ मद्रसिहतिभिः मम चन्द्रहासघातैः । " चन्द्रहासासिरिष्टयः " इत्यमरः ॥ मृत्युं मरणम् ॥ प्राप्य गत्वा ॥ निकारात् तिरस्कारात् । "निकारो विप्रकारः स्यात् " इत्यमरः ॥ मुक्तः त्यक्तस्सन् ॥ स्वर्गलोके देवलोके ॥ अप्सरोभिर्देवस्त्रीभिः सह । " स्त्रियां वहुष्वप्सरसः " इत्यमरः ॥ वीरश्रियं वीरलक्ष्मीम् ॥ अनुभवस्वर्गसुखं निर्विशेत्यर्थः ॥ अथवा तव ते ॥ एवम् इति ॥ दाक्ष्यं समर्थता ॥ यदि न न भवति चेत् ॥ ततः तस्मात् ॥ धनपतिक्रोधविश्लेषितस्य धनपतेः कुवेरस्य क्रोधेन कोपेन विश्लेषितस्य वनितया वियोजितस्य ॥ मे मम ॥ प्रेष्यतां भृत्यत्वम् । " नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः " इत्यमरः ॥ तूष्णीं जोषम् ॥ एत्य प्राप्य ॥ सन्देशं वार्ताम् ॥ हर नय । प्रियां प्रति प्रापयेत्यर्थः ॥ २६ ॥

आद्यः कल्पस्तव न सुकरो दुर्घटत्वान्न चान्त्यः
श्लाघ्यो दैन्यान्मुनिमत ततो मध्यकल्पाश्रयस्ते ।
श्रेयांस्तस्मिन्सुखमनुभवेरप्सरोभिस्तदुच्चै-
र्गन्तव्या ते वसतिरलका नाम यक्षेश्वराणाम् ॥ २७ ॥

प्राक् श्लोकत्रयेण विकल्पत्रयं प्रतिपाद्य तदेव क्रमेण विवृणोति—

आद्य इति ॥ मुनिमत मुनिभि स्तुत ॥ तव ते ॥ आद्यः आदौ भवः आद्यः प्रथमः ॥ कल्पः विकल्पः । " कल्पः स्यात्प्रलये न्याये शास्त्रे ब्रह्मदिने विधौ" इति विश्वः ॥ दुर्घटत्वात् दुःसाध्यत्वात् ॥ सुकरः सुखकार्यो न न भवति ॥ अन्त्यश्च चरमविकल्पश्च ॥ दैन्यात् दीनत्वात् । श्लाघ्यः पूज्यः न न भवति ॥ ततः तस्मात्कारणात् ॥ ते तव । " ते मयावेकत्वे " इति युष्मदस्ते इत्यादेशः ॥ मध्यकल्पाश्रयः मध्यकल्पाश्रयणं ॥ श्रेयान् योग्यः । " श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्सत्तमश्चातिशोभने" इत्यमरः ॥ तस्मिन् मध्यविकल्पे ॥

अप्सरोभिः देवस्त्रीभिः ॥ उच्चैः सुखं महासुखं ॥ अनुभवैः अनुभूयाः ॥ ततः तस्मात् कारणात् ॥ यक्षेश्वराणाम् धनदेन्द्राणाम् ॥ अलका नाम अलकेति प्रसिद्धा । अलकापुरीति "नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने" इत्यमरः ॥ वसतिः स्थानम् । "वसती रात्रिवेश्मनोः" इत्यमरः ॥ तव ते ॥ गन्तव्या यातव्या त्वया प्रापणीयेत्यर्थः ॥ २७ ॥

यस्यां रात्रेरपि च विगमे दम्पतीनां विधत्ते
प्रीतिं प्रातस्तननिधुवनग्लानिमुच्चैर्हरन्ती ।
दृष्टा सास्रं सततविरहोत्कण्ठितैश्चक्रवाकै-
र्वाह्योद्यानस्थितहरशिरश्चन्द्रिका धौतहर्म्या ॥ २८ ॥ ७ ॥

यस्यामिति ॥ यस्यामलकायां पुर्याम् ॥ सततविरहोत्कण्ठितैः सततमनवरतं विरहेण वियोगेन उत्कण्ठितैः उत्कलितैः । "सततानारताश्रान्तसन्ततानाविरतानिशम्"। "उत्कण्ठोत्कलिके समे" इत्युभयत्राप्यमरः । "वियोगो मदनावस्था विरहो यच्छकं विदुः" इति धनञ्जयः ॥ चक्रवाकैः रथाङ्गपक्षिभिः । "कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ।" इत्यमरः ॥ सास्रम् अश्रुपातेन सह । "रोदनं चास्रमश्रु च" इत्यमरः ॥ दृष्टा लक्षिता ॥ धौतहर्म्या धौतानि विमलीकृतानि हर्म्याणि यस्या सा तथोक्ता । "हर्म्यादि धनिनां वासः" इत्यमरः ॥ वाह्योद्यानस्थितहरशिरश्चन्द्रिका वहिर्भवं वाह्यं तच्च तदुद्यानं चेति कर्मधारयः । वाह्योद्याने तिष्ठति स वाह्योद्यानस्थितः स चासौ हरश्च तस्य ईशानदिगिन्द्रस्य शिरो मस्तकं तस्मिन् स्थिता चन्द्रिका ज्योत्स्ना । "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः ॥ रात्रेः निशायाः ॥ विगमेपि विरामेपि । किं पुना रात्रावित्यपि शब्दार्थः ॥ दम्पतीनां जायापतीनाम् । "दम्पती जम्पती जायापती भार्यापती च तौ" इत्यमरः ॥ प्रातस्तननिधुवनग्लानिं प्रातर्भवा

प्रातस्तना । " सायं चिरं प्राह्णे प्रगेऽव्ययात् " इति तनट् । निधुवनस्य रतस्य ग्लानिरायासः तथोक्तः । " निधुवनं रतम् " इत्यमरः । प्रातस्तना चासौ निधुवनग्लानिश्चेति कर्मधारयः । ताम् ॥ उच्चैः परं हरन्ती मोचयन्ती ॥ प्रीतिं प्रमोदम् । "मुत्प्रीतिः प्रमदो हर्षः प्रमोदामोदसम्मदाः " इत्यमरः ॥ विधत्ते करोति । धनदस्य त्र्यम्बकसखत्वात् चैत्ररथनामबाह्योद्यानस्यातिरमणीयत्वेन क्रीडाहेतोरागतस्य शशिशेखरस्य चरमदिक्पालकस्य तत्र वसतिरुपपन्नैव । तल्लाञ्छनात्मकस्य चन्द्रस्य चन्द्रिकया कोकदम्पतीविरहादिरुच्यते ॥ २८ ॥

मत्तो मृत्युं समधिगतवान्यास्यसीष्टां गतिं तां
यस्मिन्काले विधुतसकलोपप्लवस्त्वं सुखेन ।
द्रष्टारोऽधोनियमितदृशो दिव्ययोपास्सतोपा-
स्त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः ॥ २९ ॥

मत्त इति ॥ यस्मिन् काले समये ॥ त्वं भवान् ॥ मत्तः मत्सकाशात् ॥ मृत्युं मरणम् ॥ समधिगतवान् प्राप्तवान् ॥ विधुतसकलोपप्लवः विधुतो निराकृतः सकल उपप्लव उपद्रवो येन स तथोक्तः ॥ सुखेन आनन्देन । " शर्मशातसुखानि च " इत्यमरः ॥ इष्टाम् अभीष्टाम् । " इष्टं क्षेमाशुभाभावे " इत्यमरः ॥ तां गतिम् उत्तरगतिम् ॥ यास्यसि प्राप्स्यसि । " या प्रापणे " लृट् ॥ पवनपदवीं पवनस्य वायोः पदवीं मार्गम् आकाशम् " पन्थानः पदवी सृतिः " इत्यमरः ॥ आरूढम् आक्रान्तम् ॥ त्वां भवन्तम् ॥ दिव्ययोपाः देवस्त्रियः । " स्त्री योषिदबला योषा " इत्यमरः ॥ सतोपाः सन्तोषेण सहिताः ॥ उद्गृहीतालकान्ताः उद्धृतकुन्तलाग्राः । " अलकाश्चूर्णकुन्तलाः " इत्यमरः ॥ अधोनियमितदृशः अधः अधोभागे नियमिते निश्चलीकृते दृशौ याभिस्ताः तथोक्ताः सत्यः द्रष्टारः । दृशेर्लुट् । प्रेक्षमाणाः भविष्यन्ति ॥ त्वां लब्धुमुत्सुका द्रक्ष्यन्तीत्यर्थः ॥ २९ ॥

दिव्ये याने त्रिदिववनितालिङ्गितं व्योममार्गे
सन्माणिक्याभरणकिरणद्योतिताङ्गं तदानीम् ।
गां गच्छन्तं नवजलधराशङ्कयाऽधः स्थितास्त्वां
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसन्त्यः ॥ ३० ॥

दिव्य इति ॥ तदानीं गमनावसरे । "तदा तदानीम्" इत्यमरः ॥ व्योममार्गे नभोवर्त्मनि । "व्योम पुष्करमम्बरम्" इत्यमरः ॥ दिव्ये दिवि स्वर्गे भवं दिव्यं तस्मिन् ॥ याने विमाने ॥ त्रिदिववनितालिङ्गितं देवस्त्रीभिरालिङ्गितम् ॥ सन्माणिक्याभरणकिरणद्योतिताङ्गं माणिक्यैः रत्नैः कृतान्याभरणानि माणिक्याभरणानि सन्ति च तानि तानि चेति कर्मधारयः । "सत्ये साधौ विद्यमाने प्रशस्तेऽभ्यर्हितेऽपि सन्" "अलङ्कारस्त्वाभरणम्" इत्युभयत्राप्यमरः । तेषां किरणैः मयूखैः द्योतितानि प्रकाशितान्यङ्गान्यवयवा यस्य तम् ॥ गां दिवम् । "स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौः" इत्यमरः ॥ गच्छन्तं प्रस्थितं भवन्तम् ॥ नवजलधराशङ्कया नूतनजलधरसन्देहेन ॥ अधः स्थिताः भूमिष्ठाः ॥ पथिकवनिताः पन्थानं गच्छन्तः पथिकास्तेषां वनिताः । "पदष्ठद्" इति ठट् । "पान्थः पथिक इत्यपि" "वनिता महिला तथा" इत्युभयत्राप्यमरः ॥ प्रत्ययात् प्रियागमनविश्वासात् । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः ॥ आश्वसन्त्यः आङ्पूर्वकस्य श्वस्धातोः शतृत्यः । प्रीणन्त्यः सत्यः ॥ प्रेक्षिष्यन्ते द्रक्ष्यन्ति ॥ ३० ॥

स्यादाकूतं मम न पुरतः स्वस्थवीराग्रणीर्य-
स्तिष्ठेदेकं क्षणमिति न तं साम्प्रतं हन्तुमीशः ।
नन्वेषोऽहं वद भटमतः कीर्तिलक्ष्मीप्रियो वा
कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायाम् ॥ ३१ ॥

स्यादाकूतमिति॥मम यक्षस्य॥पुरतः अग्रतः॥यः कश्चन पुरुषः॥ स्वस्थवीराग्रणीः वीराणामग्रणीस्तथोक्तः भटाग्रेसरः। स्वस्थः परानपेक्षी स चासौ वीराग्रणीश्चेति कर्मधारयः। सङ्ग्रामरसिकः सन्। एकं क्षणम् एकक्षणपर्यन्तम्॥ न तिष्ठेत् न वसेत्॥ तं तं पुरुषम्॥ साम्प्रतम् इदानीम्। "एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः॥ हन्तुं हननाय॥ नेशः अहं कमठचरः न समर्थः॥ इत्याकूतं एतावानभिप्रायः। "आकूतं स्यादभिप्रायः" इति व्याडिः॥ स्यात् तर्हि॥ एषोऽहं प्रत्यक्षभूतो यक्षः॥ भटमतः भटंमन्यते स भटमतः वीरवर्यः। वा अथवा। "उपमायां विकल्पे वा" इत्यमरः॥ कीर्त्तिलक्ष्मीप्रियः कीर्तिश्च लक्ष्मीश्च तयोः प्रियो वल्लभः तथोक्तः॥ ननु न किम्। "प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु" इत्यमरः॥ वद त्वं ब्रूहि॥ त्वयि भवति॥ सन्नद्धे सज्जीकृते सति। "सन्नद्धो वर्मितः सज्जः" इत्यमरः॥ विरहविधुरां विरहेण विधुरां विवशाम्। "विधुरं तु प्रविश्लेषे" इत्यमरः॥ जायां कान्ताम्। "भार्या जाया" इत्यमरः॥ कः उपेक्षेत काकुः। न कोप्युपेक्षां कुर्यादित्यर्थः॥३१॥

श्रुत्वाप्येवं बहु निगदितं जोषमेवायमास्ते
योगी योगान्न चलतितरां पश्य धीरत्वमस्य।
स्त्रीमन्यो वा भयपरवशः सोऽयमास्ते धिगस्तु
न स्यादन्योऽप्ययमिव[1] जनो यः पराधीनवृत्तिः[2]॥३२॥८॥

श्रुत्वापीति॥ एवम् उक्तप्रकारेण। बहुनिगदितं बहुना भाषितम्। श्रुत्वापि श्रुतिविषयं कृत्वापि। अयं योगी एष मुनिः। जोषं तूष्णीम्। "तूष्णीमर्थे सुखे जोषम्" इत्यमरः। आस्ते वर्तते॥ योगात्

१ अहमिवेत्यपि पाठः॥ २ पराधीनवृत्तित्वमस्य योगायत्तत्वम् अत एव निंदाप्येषा अंतर्मुखो महानयं न किंचिदपि चलतीति स्तुत्यां पर्यवस्यतीति हृदयम्।

ध्यानात् । न चलतितराम् न कम्पतेतराम् । "द्वयोर्विभज्ये च तरप्" इति तरप्। "आद्ययोत्किंतिजोसत्वेतयाजोम्" इति जाम्त्यश्च । अस्य मुनेः । धीरत्वं धैर्यम् । पश्य प्रेक्षस्व । वा अथवा ॥ सोऽयं स एव मुनिः । स्त्रीमन्यः आत्मानं स्त्रियं मन्यते इति स्त्रीमन्यः । भयपरवशः भयाधीनः । आस्ते वर्तते ॥ धिगस्तु निन्द्योऽस्तु । "क्कु धिङ्निर्भर्त्सननिन्दयोः" इत्यमरः । यः जनः यः कश्चन पुरुषः । पराधीनवृत्तिः परेषामधीना वृत्तिर्वर्तनं यस्य तथोक्तः । "परतन्त्रः पराधीनः परवान्नाथवानपि।" "वृत्तिर्वर्तनजीवने" इत्युभयत्राप्यमरः । सः अन्योऽपि जनः इतरोऽपि पुरुषः । अयमिव एतन्मुनिरिव । न स्यात् न भवेत् ॥ पराधीनजीवितेषु अयमत्यन्तपराधीन इति तात्पर्यम् ॥ ३२ ॥

वित्तानिघ्नः स्मरपरवशां वल्लभां कांचिदेकां
ध्यानव्याजात्स्मरति रमणीं कामुको नूनमेषः ।
अज्ञातं वा स्मरति सुदती या मया दूषिताऽसी-
त्तां चावश्यं दिवसगणनातत्परामेकपत्नीम् ॥ ३३ ॥

वित्तानिघ्न इति ॥ एषः अयं मुनिः । वित्तानिघ्नः आसमन्तात् निघ्नः आनिघ्नः वित्तेषु द्रव्येष्वानिघ्नस्तथोक्तः । "द्रव्यं वित्तं स्वापतेयम्" "अधीनो निघ्न आयत्तः" इत्युभयत्राप्यमरः । "आङीषदर्थेऽभिव्याप्तौ" इति च । कामुकः विषयाभिलाषुकः सन् । "कामुकं कमितानुकः" इत्यमरः । ध्यानव्याजात् ध्यानच्छलात् । "व्याजोपदेशः" इत्यमरः । स्मरपरवशां कामार्त्ताम् । वल्लभां प्रियाम् "वल्लभा प्रेयसी प्रेष्ठा" इति धनञ्जयः । रमणीं सुन्दराङ्गीम् । "सुन्दरी रमणी रामा" इत्यमरः । काञ्चिदेकां कामप्येकां स्त्रियम् । नूनं निश्चयेन । "नूनं तर्केऽर्थनिश्चये" इत्यमरः । स्मरति चिन्तयति ॥ वा अथवा । मया कमठेन । या सुदती शोभना

दन्ता यस्या इति सुदती। "स्त्रियां नाम्नि" इति दन्तस्य दतादेशः। " नृदुग् " इति ङी। वसुन्धराभिधा कान्ता । दूपिता निन्दिता। आसीत् अभवत्॥ तां च प्रियां दिवसगणनातत्पराम्। अवशिष्ट-दिवसानां गणनायां सङ्ख्याने तत्परामासक्ताम् । " तत्परे प्रसिता-सक्तौ " इत्यमरः। अरविन्दकृतशापकलिते वत्सरे अवशिष्टदिना-नामत्यये पतिरागमिष्यतीति चिन्तयन्तीत्यर्थः ॥ एकपत्नीम् एकः पतिर्यस्याः सा तथोक्ता तां पतिव्रताम्। " सती पतिव्रता साध्वी पति-वत्न्येकपत्न्यपि " इति धनञ्जयः। अवश्यं निश्चयेन । " अवश्यं निश्चये द्वयम् " इत्यमरः। अज्ञातं परैरबुद्धं यथा भवति तथा । स्मरति ध्यायति ॥ ३३ ॥

जानासि त्वं प्रथमवयसि स्वीकृतां तां नवोढां
त्यक्त्वा यास्यस्यवनिपतिना साकमेकाकिनीं यत्।
प्रत्यावृत्तः कथमपि सतीं जीवितं धारयन्ती-
मव्यापन्नामविहतगतिर्द्रक्ष्यसि भ्रातृजायाम् ॥ ३४ ॥

जानीसीति ॥ यत् यस्मात् कारणात्। त्वं भवान् । प्रथमवयसि बाल्यावस्थायाम्। " खगबाल्यादिनोर्वयः " इत्यमरः । स्वीकृतां प्रागस्वा इदानीं स्वा कृता स्वीकृता तां नवोढाम् । उह्यते स्म ऊढा नवाचासौ ऊढा च तथोक्ता ताम्। एकाकिनीम् असहायाम्। " एकाकी त्वेक एककः " इत्यमरः । तां वसुन्धराम् । त्यक्त्वा मुक्त्वा। अवनिपतिना अरविन्दभूपतिना। साकं सह। "साकं सत्रा समं सह" इत्यमरः। यास्यसि अगमः। अविहतगतिः सफलगमनः सन्। सादितवज्रवीर्यरिपुनृपस्सन् इत्यर्थः। प्रत्यावृत्तः पुनरागतः। कथमपि केनापि प्रकारेण। जीवितम् आयुष्यम्। "आयुर्जीवितकालो ना" इत्यमरः। धारयन्तीं धारयतीति धारयन्ती ताम्। शतृत्यः। उगिदचः " इति नम् । "नृदुगिति " ङी । प्रियागमनप्रत्याशया

जीवन्तीमित्यर्थः ॥ अव्यापन्नाम् अनाप्तविपदम् । "आपन्न आपत्प्राप्तः स्यात्" इत्यमरः । अप्राप्तमूर्च्छाद्यवस्थामित्यर्थः । सतीं पतिव्रताम् । "सती साध्वी पतिव्रता" इत्यमरः । भ्रातुर्जायां भ्रातुर्मम जाया प्रिया कमठस्याप्यनुकूलेत्याशयः । ताम् ॥ अथवा—भ्रातृजायां पुत्रवतीम् । "प्रजावती भ्रातृजाया" इत्यमरः । तां वसुन्धराम् । द्रक्ष्यसि अपश्यः । जानासि मन्यसे । तत्पूर्वभवप्रपञ्चं स्मरेत्यर्थः ॥ अत्र यास्यसि द्रक्ष्यसीति धातुद्वयस्य स्मृत्यर्थे "यदि लृट्" इति भूतार्थस्मरणविषये । स्मृत्यर्थधातोर्जानातेरुपपदत्वेन लृट् ॥ ३४ ॥

चित्रं तन्मे यदुपयमनानन्तरं विप्रयुक्ता
त्वत्तः साध्वी सुरतरसिका सा तदा जीवति स्म ।
मन्ये रक्षत्यसुनिरसनाद्धातुमापद्गताना-
माशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानाम् ॥ ३५ ॥

चित्रमिति ॥ यत् । तदा तद्भवे । उपयमनानन्तरं विवाहानन्तरम् । "विवाहोपयमौ समौ" इत्यमरः । त्वत्तः भवतः । विप्रयुक्ता वियुक्ता । सुरतरसिका निधुवनप्रीता । साध्वी पतिव्रता । सा वसुन्धरा । जीवति स्म अजीवत् ॥ तत् तदेतत् । मे मम । चित्रम् आश्चर्यम् । "विस्मयोऽद्भुतमाश्चर्यं चित्रम्" इत्यमरः । अवभासत इति शेषः ॥ तथाहि । आपद्गतानाम् आपदं गच्छन्ति स्म तथोक्तास्तेषाम् । "विपत्त्यां विपदापदौ" इत्यमरः । अङ्गनानां नारीणाम् । आशाबन्धः बध्यते अनेनेति बन्धः बन्धनमिति यावत् । आशैव बन्धस्तथोक्तः । प्रायशः प्रायेण । प्रायशो बहुशः परम् । कुसुमसदृशमपि कुसुमसुकुमारमपि अतिकोमलमित्यर्थः । धातुं प्राणधातुम् । "शब्दादौ हरितालादौ वातश्लेष्मादिकेऽपि च । मनःशिला हिरण्यादौ

---

१ साध्वीत्यत्र व्यतिरेकलक्षणया असाध्व्येव तथापि अजीवदिति यत्तत् चित्रं जीवने बीजं निधुवनलालस्यमेवेति अरुंतुदवचनम् इति भासते ।

श्रोताद्ये भूतपञ्चके । भूवादिशब्दयोर्नां स्याद्धातू रक्तरसादिके ” इत्यभिधानात् । असुनिरसनात् असूनां प्राणानां निरसनं त्यजनं तस्मात् । “ पुंसि भूम्न्यसवः प्राणाः ” “ प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः ” इत्युभयत्राप्यमरः । रक्षति पालयति । “ अपायेऽवधौ ” इति पञ्चमी । प्राणान् गन्तुं न त्यजतीत्यर्थः । मन्ये एवमहं वेद्मीति यावत् ॥ ३५ ॥

तच्चाश्चर्यं यदहमभजं त्वद्वियोगेपि कामान्
प्राणैरार्तः किमनुकुरुते जीवलोको हताशः ।
पुंसां धैर्यं किमुत सुहृदां किं पुनः सङ्गमाशा
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ ३६ ॥ ९ ॥

तच्चेति ॥ यत् अहम् । त्वद्वियोगेपि भवद्विरहेपि । कामान् अभिलाषान् । “ कामोऽभिलाषस्तर्षश्च ” इत्यमरः। अभजं सेवे स्म। तच्च आश्चर्यम् अद्भुतम् । प्राणैः असुभिः । आर्तः दुःखितः । हताशः नष्टाभिलाषः । “ आशा तृष्णापि जायते” इत्यमरः । जीवलोकः संसारिजनः । किमनुकुरुते किं कार्यमनुकूलं विदधाति न किमपीत्यर्थः । प्राणभयात्कामानभजदिति भावः । किमुत अथवा । “आहो उताहो किमुत विकल्पे किं किमूत च ” इत्यर्थः । पुंसां पुरुषाणाम् । “ स्युः पुमांसः पञ्चजनाः ” इत्यमरः । धैर्यं धीरत्वम् । स्यादिति शेषः । तथाहि । सुहृदां मित्राणाम् । “ अथ मित्रं सखा सुहृद् ” इत्यमरः । विप्रयोगे विरहे । “ विप्रलम्भो विप्रयोगः ” इत्यमरः । सङ्गमाशा संसर्गाभिलाषा । सद्यःपाति सद्यः पतति इत्येवंशीलं तथोक्तम् । प्रणयि प्रेमयुक्तम् । “ प्रसादप्रणयौ समौ ” इत्यमरः । हृदयं जीवितम् । “ हृदयं जीविते चित्ते वाह्यस्याकूतजीवयोः ” इति शब्दार्णवः । किं पुनः रुणद्धि पुनः कथं स्तम्भयतीति प्रश्नः । “ किं

प्रच्छायां जुगुप्सने " इत्यमरः । मित्रवियोगे कामं विषयानुभवनं जीवितधारणं च धैर्यादेवेति तात्पर्यम् ॥ ३६ ॥

इत्युक्त्वाऽथो पुनरपि सुरः सामभेदौ व्यतानी-
द्योन्तःस्नेहस्त्वयि चिरमभूत्पूर्वबन्धोस्तदा मे ।
धिक्कारस्तं तिरयतितरां त्वत्कृतोऽस्मान्स हन्तुं
मन्दंमन्दं नुदति पवनश्चानुकूलो यथा त्वाम् ॥ ३७ ॥

इत्युक्त्वेति ॥ इत्युक्त्वा एवमभिधाय । अथो अनन्तरम् । पुनरपि भूयोपि । सुरः देवः । सामभेदौ सामभेदवचने । "सामदाने भेददण्डा-वित्युपायचतुष्टयम्" इत्यमरः ॥ व्यतानीत् विस्तारमकरोत् । पूर्वबन्धोः प्राग्भवभ्रातुः । मे मम । तदा तज्जन्मनि । त्वयि भवति । य अन्तः-स्नेहः । अन्तरङ्गे भवः स्नेहस्तथोक्तः । अन्तःप्रीतिः । चिरं स्थिरम् । अभूत् अभवत् । तं स्नेहम् । त्वत्कृतः भवता विहितः । धिक्कारः तिरस्कारः । तिरयतितराम् अत्यन्तं तिरस्करोति । पुनः अनुकूलः अनुरूपः । पवनः वायुः । " नभस्वद्वातपवन-" इत्यमरः । मेघ-मित्याशयः । यथा च नुदति यद्वत्प्रेरयति । यत्तदोर्नित्यसम्बद्ध-त्वात् । तद्वत्सः त्वत्कृतधिक्कारः । त्वां भवन्तम् । हन्तुं हननाय । मन्दंमन्दं शनैःशनैः अतिमन्दमित्यर्थः ॥ अत्र कथंचिद्वीप्सायां द्विरुक्तिः । अस्मान् नः । नुदयति प्रेरयति । प्राग्भवस्नेहसद्भावेपि त्वयाऽरविन्दनृपमुखेन कारितधिक्कारवशात् त्वं हन्तव्य इति ता-त्पर्यम् ॥ ३७ ॥

तस्माद्योगं शिथिलय मुने देहि युद्धक्षणं मे
दानादन्यन्न खलु सुकृतं देहिनां श्लाघ्यमस्ति ।

---

१ शंवरः ।

शंसन्तीदं ननु वनगजा दानशीलास्तथाब्दा
वामश्चायं नुदति मधुरं चातकस्ते सगन्धः ॥ ३८ ॥

तस्मादिति ॥ तस्मात् कारणात् । मुने भो योगिन् । योगं ध्यानम् । शिथिलय शिथिलं कुरु । मे मम । युद्धक्षणं सङ्ग्रामोत्सवम् " अथ क्षण उद्धर्षो मह उद्धव उत्सवः " इत्यमरः । देहि वितर । देहिना जीवानाम् । दानात् त्यागात् । अन्यत् भिन्नम् । श्लाघ्यं पूज्यम् । सुकृतं पुण्यम् । न खलु नास्ति हि । तथाहि । दानशीलाः । "दानं गजमदे त्यागे शुद्धिखण्डनयोरपि " इति नानार्थमालायाम् । दानं गजजलं त्यागो वा तदेव शीलं स्वभावो येषामिति बहुव्रीहिः ॥ " शीलं स्वभावे सद्वृत्ते " इत्यमरः । वनगजाः कान्तारमातङ्गाः तथा वनगजवत् । अब्दा आपो ददति इत्यब्दाः मेघाश्च । इदं दानमेव श्लाघ्यमित्येतत् । शंसन्ति ननु स्तुवन्ति खलु । ते तव । सगन्धः सबन्धुरिति केचित् । " गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः " इति विश्वः । वामः वामभागस्थः । " वामस्तु रुचके रम्ये सव्ये वामस्थितेऽपि च " इति शब्दार्णवः । अयं चातकश्च पक्षिविशेषोपि । " अथ सारङ्गस्तोककश्चातकः समाः " इत्यमरः । मधुरं श्राव्यं यथा तथा । नुदति प्रेरयति । वामभागे चातकध्वनिः शुभनिमित्तमित्यर्थः ॥ ३८ ॥

युद्धे शौण्डो यदि च भगवान्वीरशय्यां श्रितः स्याः
स्वर्गस्त्रीणामहमहमिकां संविधास्यंस्तदा त्वाम् ।
विद्याधर्यो नभसि वृणते पुण्यपाकाद्दिनङ्ख्य-
द्गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः ॥ ३९ ॥

युद्धे चेति ॥ यदि च यदा । भगवान् महात्मा त्वम् । युद्धे साम्पराये । शौण्डः आसक्तः । " मत्ते शौण्डोत्कटक्षीवाः " इत्य-

मरः । स्वर्गस्त्रीणां त्रिदिववनितानाम् । अहमहमिकाम् अहमधिकाऽहमधिकोऽत्यहंकारोऽत्रास्ति तथोक्ता ताम् परस्पराहङ्कारम् । "अहमहमिका तु सा स्यात्परस्परं यो भवत्यहङ्कारः" इत्यमरः । संविधास्यन् सम्यक् करिष्यन् सन् । वीरशय्यां वीरशयनीयं श्रितः आश्रितः । "श्रितादिभिः" इति द्वितीयातत्पुरुषः । स्याः भवेः । तदा तत्समये । नभसि आकाशे । आवद्धमालाः विरचितपङ्क्तयः । विद्याधर्यः खेचरसीमन्तिन्यः । पुण्यपाकात् सुकर्मपाकात् । विनङ्क्ष्यत् गर्भाधानक्षणपरिचयात् गर्भः कुक्षिस्थजन्तुः । "गर्भे पञ्चकके नभ्रे सुते पवनसङ्कटे । कुक्षौ कुक्षिस्थजन्तौ च" इति यादवः । विनङ्क्ष्यंश्चासौ गर्भश्च तथोक्तः तस्याधानमुपादानं तदेव क्षणः उत्सवः । "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः । तस्मिन्परिचयादभ्यासात् । "पुण्यपाकाविनङ्क्ष्यद्गर्भाधानक्षणपरिचयात्" इति पाठः सम्यक् । तत्पक्षे—विनङ्क्ष्यतीति विनङ्क्ष्यन् । "नश अदर्शने" लृट् । "तास्यौ लुलृटोः" इति स्यः । "नसरजसोर्नम्" इति नम् । न विनङ्क्ष्यन्नविनङ्क्ष्यन् पुण्यपाकेनाविनङ्क्ष्यन् पुण्यपाकाविनङ्क्ष्यन् । अन्यत्र पूर्ववदेव स्थिरतरगर्भस्वीकारादित्यर्थः । नूनं निश्चयेन । त्वां भवंतम् । वृणते सेवन्ते ॥३९॥

मूर्च्छासुप्तं त्रिदशनिहिताम्लानमन्दारमालं
तूर्यध्वानस्तनितमुखरं दिव्ययानाधिरूढम् ।
द्यामुद्यन्तं सजलजलदाशङ्कया बद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥४०॥ १०॥

मूर्च्छेति ॥ मूर्च्छासुप्तं मूर्च्छया शयितम् । त्रिदशनिहिताऽम्लानमन्दारमालं त्रिदशैर्निर्जरैः निहिता निक्षिप्ता तथोक्ता मन्दारस्य कल्पवृक्षस्य माला स्रक् तथोक्ता । "मन्दारः पारिजातकः । सन्तानः कल्पवृक्षश्च" इति "माल्यं मालास्रजौ" इति चामरः । अम्लाना

चासौ मन्दारमाला च तथोक्ता त्रिदशनिहिता अम्लानमन्दारमाला यस्य सः तम् । तूर्यध्वानस्तनितमुखरं तूर्याणां नृत्यगीतवाद्यानाम् " तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् " इत्यमरः । स्तनितं पयोधरस्वनः । " स्तनितं गर्जितं मेघनिर्घोषे " इत्यमरः । तेन मुखरः आवद्धमुखः तथोक्तस्तम् । " दुर्मुखे मुखरावद्धमुखौ " इत्यमरः । तं दिव्ययानाधिरूढम् । दिव्यं च तत् यानं च दिव्ययानं तदधिरूढम् । द्यां दिवम् । " द्योदिवौ द्वे स्त्रियाम् " इत्यमरः । उद्यन्तम् उद्गच्छन्तम् । नयनसुभगं नयनानां नेत्राणाम् । " लोचनं नयनं नेत्रम् " इत्यमरः । प्रीतिसुभगम् आनन्दकरं । भवन्तं त्वाम् । खे आकाशे । " अनन्तं सुरवर्त्म खम् " इत्यमरः । वद्धमालाः विहितश्रेणयः । वलाकाः पक्षिविशेषाः । " वलाका विसकण्ठिका " इत्यमरः । सजलजलदाशङ्कया जलसहितमेघाशङ्कया । सेविष्यन्ते भजिष्यंते ॥ ४० ॥

योगिन्पश्यंस्त्वदतुलधृतेर्भङ्गहेतून्पयोदां-
स्तद्गम्भीरध्वनितमपि च श्रोतुमर्हस्यकाले ।
केकोद्ग्रीवाञ्शिखरिषु चिरं नर्तयेद्यन्मयूरान्
कर्तुं यच्च प्रसवति महीमुच्छिलीन्ध्रामवन्ध्याम् ॥ ४१ ॥

योगिन्निति ॥ योगिन् भो यते । अकाले अनवसरे । त्वदतुलधृतेः तव अतुला असमाना धृतिर्धीरता तथोक्ता । " धृतिर्धारणधैर्ययोः " इत्यमरः । भङ्गहेतून् पराजयकारणभूतान् । पयोदान् स्तनयित्नून् । पश्यन् प्रेक्षमाणः सन् । शिखरिषु भूधरेषु । " महीध्रे शिखरिक्ष्माभृत् " इत्यमरः । केकोद्ग्रीवान् केकया स्वकीयवाण्या " केकावाणी मयूरस्य " इत्यमरः । उद्गता ग्रीवा येषां ते तथोक्ताः । " अथ ग्रीवायां शिरोधिः कन्धरेत्यपि " इत्यमरः । तान् मयूरान् नीलकण्ठान् । चिरं नर्तयेत् नाटयेत् । यच्च महीं भुवम् । अवन्ध्यां

सफलाम् । " वन्ध्योफलोवकेशी च " इत्यमरः । उच्छिलीन्ध्रां । " कन्दल्यामुच्छिलीन्ध्रा स्यात् " इति शब्दार्णवः । उद्गताः शिलीन्ध्राः अङ्कुरविशेषाः यस्याः सा तथोक्ता ताम् । उत्पन्नसस्याङ्कुरामित्यर्थः । कर्तुं विधातुम् । प्रभवति समर्थ भवति । तच्च गम्भीरस्तनितमपि श्रोतुं श्रवणाय अर्हसि योग्यो भवसि । इदं गर्जितं शृण्वित्यर्थः ॥ ४१ ॥

पश्योत्रस्ता धवलितदिशो मन्दमन्दं प्रयान्तो
दृश्यन्तेऽमी गगनमभितो मन्दसानाः स्वनन्तः ।
बद्धोत्कण्ठोद्विगलितमदाः प्रावृषेण्याम्बुदानां
तच्छ्रुत्वा ते श्रवणसुभगं गर्जितं मानसोत्काः ॥ ४२ ॥

पश्येति ॥ प्रावृषेण्याम्बुदानां प्रावृषि भवाः प्रावृषेण्याः " प्रावृषेण्यः " इति साधुः । " स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः " इत्यमरः । वर्षाकालोद्भूत इत्यर्थः । ते च ते अम्बुदाश्च तेषाम् । श्रवणसुभगं श्रोत्रप्रियम् । तत् गर्जितं स्तनितं श्रुत्वा उत्रस्ताः भीताः । बद्धोत्कण्ठोद्विगलितमदाः बद्धा उत्कण्ठा वियोगदुःखम " उत्कण्ठोत्कलिके समे " इत्यमरः । तेन उद्गलितः शिथिलितो मदो हर्षो येषां ते तथोक्ताः । स्वनन्तः ध्वनन्तः । मानसोत्काः मानसे मानसाभिधाने उत्तरदिक्स्थिते सरसि उत्काः उन्मनसः । प्राप्तुमिच्छन्त इत्यर्थः । " स्यादुत्क उन्मनाः " इत्यमरः । धवलितदिशः शुभ्रीकृतककुभः । "वलक्षो धवलोऽर्जुनः।" "दिशस्तु ककुभः काष्ठाः" इत्युभयत्राप्यमरः । धवलवर्णा इत्यर्थः । गगनं व्योम । अभितः समन्तात् । मन्दमन्दं शनैःशनैः । प्रयान्तः गच्छन्तः । तेऽमी मन्दसानाः । ते एते हंसाः दृश्यन्ते प्रेक्ष्यन्ते पश्य अवलोकय ॥ ४२ ॥

ते चावश्यं नवजलधरैरुन्मनीभूय हंसा
मत्प्रामाण्यात्तव जिगमिषोर्धाम यक्षेश्वराणाम् ।

सङ्गच्छन्ते पथि जलमुचामापतन्तः समन्ता-
द्वाकैलासाद्बिसकिसलयच्छेदपाथेयवन्तः ॥ ४३ ॥

ते चेति ॥ मत्प्रामाण्यात् प्रमाणस्वभावः प्रामाण्यं "प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु" इत्यमरः । अहमेव प्रामाण्यं मत्प्रामाण्यं तस्मात् । मद्वचनप्राधान्यात् । यक्षेश्वराणां गुह्यकानाम् । धाम स्थानम् । "गृहदेहत्विट्प्रभावा धामानि" इत्यमरः । जिगमिषोः गन्तुमिच्छतीति जिगमिषुः तस्य । तत्र ते । जलमुचां तडित्वताम् । पथि वर्त्मनि व्योम्नीत्यर्थः । आकैलासात् "मर्यादायामाङ्" इति पञ्चमी । "आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे" इत्यमरः । कैलासनामपर्वतपर्यन्तम् । समन्तात् सर्वतः । आपतन्तः गच्छन्तः । बिसकिसलयच्छेदपाथेयवन्तः बिसकिसलयानां मृणालाग्राणाम् "नालो नालमथास्त्रियाम् । मृणालं बिसम्" इति "पल्लवोऽस्त्री किसलयम्" इत्यप्यमरः । छेदः शकलं स एव पथि साधु पाथेयम् । "पथ्यादेर्ढण्" इति ढणः । तदस्त्येषामिति बिसकिसलयच्छेदपाथेयवन्तः । ते च हंसाः मरालाः । नवजलधरैः नूतनाम्बुधरैः । उन्मनीभूय प्रागनुन्मनसः इदानीम् उन्मनसो भवनम् उन्मनीभवनम् तत्पूर्वं पश्चात्किञ्चिदित्युन्मनीभूय क्लेशिनो भूत्वेत्यर्थः । अवश्यं निश्चयेन । सङ्गच्छन्ते सङ्गता भवन्ति । "संविप्रावात्" इति तङ् ॥ ४३ ॥

स्फीतोत्कण्ठा विगलितमदा मन्दमन्दायमाना
मूकीभूताः स्खलितगतयोऽनुन्मुखास्सन्तताशाः ।
त्वामन्वेते पवनपदवीमाश्रयन्तोऽनुरूपाः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ४४ ॥ ११ ॥

स्फीतेति ॥ स्फीतोत्कण्ठाः प्रवृद्धक्लेशाः । विगलितमदाः कृशी-

भूततोषाः । मन्दमन्दायमानाः मन्दमन्दमाचरन्तीति तथोक्ताः । मूकीभूताः प्रागमूकाः इदानीं मूका भवन्ति स्मेति तथोक्ताः । "अ-वाचि मूकः" इत्यमरः । स्खलितगतयः कम्पितगमनाः । अनु-न्मुखाः उद्गतं मुखं येषां ते उन्मुखाः न उन्मुखाः अनुन्मुखाः अधोमुखा इत्यर्थः । सन्तताशाः सन्तता विस्तृता आशा अभिलाषो दिग्वा येषां यैर्वेति बहुव्रीहिः । "विस्तृतं ततम् ।" "आशा तृ-ष्णापि चायता" इत्युभयत्राप्यमरः । भवतः तव । अनुरूपाः अनुकूलाः । एते राजहंसाः हंसविशेषाः । "राजहंसास्तु ते चञ्चुच-रणैर्लोहितैः सिताः" इत्यमरः । त्वामनु भवन्तं परि । "भागिनी च प्रतिपर्यनुभिः" इति द्वितीया । "पश्चात्सादृश्ययोरनु" इत्य-मरः । पवनपदवीम् अम्बरम् । आश्रयन्तः प्राप्नुवन्तः । नभसि खे । भवतः ते । सहायाः सयात्राः । "सहायस्तु सयात्रे स्यात्" इति शब्दार्णवे । सम्पत्स्यन्ते लप्स्यन्ते ॥ ४४ ॥

भोक्तुं दिव्यश्रियमभिमतां यातुकामो द्युलोकं
कालक्षेपादुपरम रणे मङ्क्षु सन्नह्य भिक्षो ।
येनामुत्र स्पृहयसि [२]दिवे यश्च संरक्षति त्वा-
मापृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलम् ॥ ४५ ॥

भोक्तुमिति ॥ भिक्षो हे वाचंयम । अभिमताम् अभिलषिताम् । दिव्यश्रियं देवसम्पत्तिम् । "सम्पत्तिः श्रीश्च लक्ष्मीश्च" इत्यमरः । भोक्तुम् अनुभवनाय । द्युलोकं त्रिदिवम् । यातुकामः यातुं गन्तुं कामयते इति तथोक्तः सन् । येन अमुत्र भवान्तरे । "प्रेत्यामुत्र भवान्तरे" इत्यमरः । दिवे स्वर्गाय । "सुरलोको द्योदिवौ द्वे"

---

१ 'तुं काममनसोरपीत्यनुशासनात्' तुमनोमकारलोपः । २ 'स्पृहेर्वा' इतिसूत्रात् द्वितीया ।

इत्यमरः। स्पृहयसि वाञ्छसि। यत्तदोर्नित्यसम्बन्धादिति। तस्मिन्रणे। संग्रामनिमित्तहेतौ। "हेत्वर्थैः सर्वाः प्रायः" इति सप्तमी। मङ्क्षु शीघ्रेण। सन्नह्य सज्जीकृत्य। कालक्षेपात् समययापनात्। उपरम अपेहि कालविलम्बनं मा कुर्वित्यर्थः। यः त्वां भवन्तम्। संरक्षति पालयति आश्रयो भवतीत्यर्थः। तं तुङ्गम् उन्नतम्। प्रियसखं प्रियमित्रम् "राजन् सखेः" इत्यट् समासान्तः। अमुं शैलम् एतच्चित्रकूटाह्वं पर्वतम्। आलिङ्ग्य आश्लिष्य। आपृच्छस्व साधयामि न वेति। सभाजय "अथ द्वे आनन्दनसभाजने। आपृच्छनम्" इत्यमरः॥ "नुदाङ् पृच्छः" इत्यात्मनेपदम्॥४५॥

भूयश्चानुस्मर सिषिधुपः कार्यसिद्ध्यै प्रयत्य
प्रायेणेष्टा महति विधुरे देवताऽनुस्मृतिर्नः।
सिद्धिक्षेत्रं शरणमथवा गच्छ तं रामशैलं
वन्द्ये पुंसां रघुपतिपदैरङ्कितं मेखलासु॥ ४६॥

भूयश्चेति॥ कार्यसिद्ध्यै संग्रामविजयनिष्पत्तये। प्रयत्य प्रयत्नं कृत्वा। सिषिधुपः सिद्धा देवताविशेषाः। भूयश्च मुहुरपि। अनुस्मर अनुचिन्तय। नः अस्माकम्। महति विधुरे महद्विपदि। देवतानुस्मृतिः जिनेन्द्रस्मरणम्। प्रायेण बाहुल्येन। इष्टा अभिमता। स्यादिति शेषः। अथ वा नो चेत्। पुंसां वन्द्यैः। "वानाकः" इति षष्ठी। सत्पुरुषस्तुत्यैरित्यर्थः। रघुपतिपदैः रामस्य पादन्यासैः। मेखलासु कटकेषु। "मेखला श्रोणिकटके कटिबन्धनिबन्धने" इति यादवः। अङ्कितम्। सिद्धिक्षेत्रं श्रेयःस्थानम्। तं रामशैलम्। रामगिर्यपराभिधानं चित्रकूटम्। शरणं शरण्यम्। गच्छ याहि। संग्रामभीरुश्चेत्तत्पृष्ठगतो भवेत्यर्थः॥ ४६॥

---

१ 'जुगुप्साविराम' इत्यादिना पंचमी। २ जिनपतिं पाठांतरं।

स्नातो धौताम्बरनिवसनो दिव्यगन्धानुलिप्तः
स्रग्वी दन्तच्छदविरचितारक्तताम्बूलरागः ।
खड्गी युद्धे कृतपरिकरः क्षालितागःपरागः
काले काले भवति भवतो यस्य संयोगमेत्य ॥ ४७ ॥

स्नात इति ॥ यस्य युद्धस्य । संयोगं सम्बन्धम् । एत्य प्राप्य । काले-काले समयेसमये । भवतः तव । कृतः । परिकरः प्राभवम् येन सः । " वृन्दप्राभवयोश्चैव पर्यङ्कपरिवारयोः । आरम्भे च परिस्तारे भवेत्परिकरस्तथा " इत्यभिधानात् ॥ गुणगण इति वा पाठः ॥ गुणगणः गुणसमूहः । क्षालितागःपरागः आगः दोषः । " आगोऽपराधः " इत्यमरः । तदेव परागः रजः । " चन्दने पुष्परजसि धूलिस्नानीयचूर्णयोः ॥ उपरागेऽस्त्रशैले च परागः परिकथ्यते " इत्यभिधानात् । क्षालितः परिशोधितः आगःपरागो यस्यासौ तथोक्तः । भवति ॥ तस्मिन् युद्धे संग्रामनिमित्तम् । स्नातः कृतमङ्गलमज्जनः । धौताम्बरनिवसनः परिशुद्धवस्त्राच्छादनः । " अम्बरं वाससि व्योम्नि कार्पासे च सुगन्धके । " " वसनं छादनेंऽशुके " इत्युभयत्रापि विश्वः । दिव्यगन्धानुलिप्तः मलयजकल्केनानुचर्चितः । स्रग्वी स्रगस्यास्तीति स्रग्वी मालावान् । " माल्यं मालास्रजौ " इत्यमरः । दन्तच्छदविरचितारक्तताम्बूलरागः दन्तच्छदयोरोष्ठाधरयोः " ओष्ठाधरौ तु रदनच्छदौ " इत्यमरः । विरचितः विहितः आरक्तः ताम्बूलस्य रागो यस्यासौ तथोक्तः । खड्गी खड्गोऽस्यास्तीति । भवत्वम् युद्धसन्नद्धो भवेत्यर्थः ॥ ४७ ॥

पश्चात्तापाद्युपरतिमहो मय्यपि प्रीतिमेहि
भ्रातः प्रौढप्रणयपुलको मां निगूह स्वदोर्भ्याम् ।
तत्ते स्निग्धे मयकि जनिता श्लाघनीया जनैः स्तात्
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥ ४८ ॥ १२ ॥

पश्चात्तापादिति ॥ अहो भोः । भ्रातः सहोदर । पश्चात्तापात् व्युपरतिं विगमम् । अपादाने पञ्चमी । मयि भ्रातरि । प्रीतिमपि स्नेहं च । एहि गच्छ । प्रौढप्रणयपुलकः प्रौढेन प्रणयेन जातः पुलकः रोमाञ्चो यस्याऽसौ तथोक्तः सन् । स्वदोर्भ्यां निजभुजाभ्याम् । मां ज्येष्ठभ्रातरं निगूह "गुहौञ् संवरणे" लटि "गोहोचेतूत्यू" आश्लेपय । तत् तस्माद्धेतोः । चिरविरहजं वहुकालवियोगसम्भवम् । उष्णम् ऊष्माणम् । बाष्पं नेत्रजलम् । "बाष्पं नेत्रजलोष्मणोः" इत्यभिधानात् । मुञ्चतः पातयतः । ते तव । स्निग्धे विश्वस्ते वन्धौ मयकि । "तिङ् सर्वादेरक्ष्यन्त्यात्पूर्वोगित्सकृत्यः" । जनिता उत्पन्ना । स्नेहव्यक्तिः प्रेमाविर्भावः । जनैः लोकैः । श्लाघनीया श्लाघितुं योग्या कीर्तनीयेत्यर्थः । स्यात् अस्तु । स्निग्धानां हि चिरविरहात्सङ्गतानां बाष्पपातादिर्भवतीति भावः ॥ ४८ ॥

सम्प्रति तस्य गन्तव्यपदानां वक्तुमुपक्रमते—

किं वा वैरीन्धनदहि मयि प्रौढमानस्त्वमेत-
न्नाभिप्रेयाः किमपरमहो नो विलम्बेन तिष्ठ ।
त्वामद्यैवान्तकमुखविलं प्रापयामि त्वकं मे
मार्गं मत्तः शृणु कथयतस्त्वत्प्रयाणानुरूपम् ॥ ४९ ॥

किं वेति ॥ वैरीन्धनदहि वैरिण एव इन्धनानि काष्ठानि "काष्ठं दार्विन्धनम्" इत्यमरः । तद्दहतीति वैरीन्धनधक् तस्मिन् । मयि यक्षेन्द्रे । त्वं भवान् । प्रौढमानः प्रवृद्धगर्वः सन् । "मानश्चित्तसमुन्नतिः" इत्यमरः । एतत् एतावदुदितं सर्वम् । किं वा नाभिप्रेयाः किमिति नाभिजानीयाः । अहो भो मुने । अपरं किम् अन्यत् किम् वक्तव्यमस्ति । विलम्बेन कालहरणेन नो तिष्ठ न वस ।

---

१ 'मार्गं तावच्छृणु' इत्यपि पाठः ।

त्वां भवन्तम् । अद्यैव इदानीमेव । अन्तकमुखविलं कृतान्तस्य वक्त्रविवरम् । प्रापयामि नयामि । प्रयाणानुरूपं तव गमनानुकूलम् । यथा तथा । कथयतः ब्रुवतः । मत्तः मत्सकाशात् । त्वकं निन्दितस्त्वं त्वकम् । मे मार्गं मम पन्थानम् । " मार्गो मृगवधे मासे सौम्यर्क्षेऽन्वेषणेऽध्वनि " इति यादवः ॥ शृणु श्रुतिविषयं विधेहि ॥ ४९ ॥

श्रेयोमार्गान्नहि जिनमताद्भ्रंशितस्यैक एव
मार्गोऽसह्यादसुखविषधेर्नारकात्तारको यः ।
तं मुक्त्वा ते श्रुतिसुखपदं वच्मि यत्र प्रियायाः
संदेशं मे तदनु जलद श्रोप्यसि श्रव्यबन्धम् ॥ ५० ॥

श्रेय इति ॥ जलद भो पयोद योगिन् । जिनमतात् मन्यते स्म मतः जिनेन अर्हता मतः जिनमतस्तस्मात् । श्रेयोमार्गात् रत्नत्रयात्मकात् मोक्षमार्गात् । भ्रंशितस्य ध्वंसितस्य । मिथ्यादृष्टेरित्यर्थः । मार्गः स्वाभिप्रेतप्रदेशप्राप्तेरुपायः । एक एव नहि न भवति हि । यः मार्गः । असह्यात् दुःसहात् । नारकात् नरकस्यायं नारकस्तस्मात् । असुखविषधेः न सुखम् असुखम् दुःखविषाणि जलानि " नीरं जीवनमब्विषम् " इति धनञ्जयः । तानि धीयन्तेऽस्मिन्निति विषधिः विषधिरिव विषधिः असुखमेव विषधिस्तस्मात् । तारकः उत्तरणहेतुः । भवेदिति शेषः । तं मार्गं मुक्त्वा विमुच्य । ते तव । श्रुतिसुखपदं श्रोत्रानन्दास्पदम् । यथा तथा । वच्मि ब्रवीमि । तदनु पश्चात् । यत्र सन्मार्गे । मे मम । प्रियायाः कान्तायाः । श्रव्यबन्धं श्रव्यः श्रवणीयो बन्धः शब्दरचना यस्येति तथोक्तस्तम् । संदेशं वाचिकम् । " संदेशवाग्वाचिकं स्यात् " इत्यमरः । श्रोप्यसि श्रवणविषयं करिष्यसि । स्वस्य मिथ्यादृक्त्वात् स्वयोग्यं भुवनत्रयमार्गं ब्रवीतीति तात्पर्यम् ॥ ५० ॥

---

१ ' श्रोत्रपेयम् ' इत्यपि पाठः ।

तत्राप्येकोऽनृजुरृजुरतः कोपि पन्थास्तयोर्यो
वक्रोऽपि त्वा नयति सुखतस्तं शृणु प्रोच्यमानम् ।
नानापुष्पद्रुमसुमनसां सौरभेणाततेषु
खिन्नःखिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र ॥ ५१ ॥

तत्रापीति ॥ तत्रापि तन्मार्गेऽपि । एकः पन्था: । अनृजुः वक्रः । कोपि पन्थाः। अतः अस्मात् । ऋजुः सरलः । भवतीति शेषः । तयोः तदध्वनोः । यः मार्गः । वक्रोपि असरलोपि । त्वा त्वाम् । "त्वामौ द्वितीयायाः" इति त्वादेशः । सुखतः अनायासेन । नयति प्रापयति । प्रोच्यमानं वक्तुमुपक्रान्तम् । तं पन्थानं शृणु । यत्र नानापुष्पद्रुमसुमनसां नानाविधानि पुष्पाणि येषां द्रुमाणां तथोक्तास्तेषाम्। सुमनसः कुसुमानि । "स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं सुमम्" इत्यमरः । तासां सौभरेण सुरभिरेव सौरभं "सुरभिर्घ्राणतर्पणः" इत्यमरः । तेन आततेषु निचितेषु । शिखरिषु पर्वतेषु । खिन्नःखिन्नः क्षीणबलः सन् क्षीणबलः सन् । वीप्सायां द्विर्भावः । पदं पादम् । न्यस्य निक्षिप्य । गन्तासि गमिष्यसि । "तास्यौ लुत्रोः" इति लुट् तन्यास् ॥ ५१ ॥

यस्मिन्रम्याः कृतकगिरयः सेव्यसानुप्रदेशा
नानावीरुद्विततिसुभगाः पुष्पशय्याचितान्ताः ।
तेन व्रज्या तव सुखकरे तत्र यायाः सुखेन
क्षीणःक्षीणः परिलघुपयः स्रोतसां चोपभुज्य ॥५२॥ १३ ॥

यस्मिन्निति ॥ यस्मिन्मार्गे । सेव्यसानुप्रदेशाः सेव्याः सेवितुं योग्याः सानूनां तटानां प्रदेशा येषां ते तथोक्ताः । नानावीरुद्विततिसुभगाः विविधाः वीरुधः गुल्माः "लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि" इत्यमरः । तासां विततिः सङ्घातः "सङ्घातः

समितिस्तति: " इति धनञ्जयः। तया सुभगाः रुचिराः तयोक्ताः। पुष्पशय्याचितान्ताः पुष्पैः कृताः शय्याः शयनतल्पानि ताभिराचिताः प्रसारिताः अन्ताः अन्तर्भागाः येषां ते तथोक्ताः। "मृतावसिते रम्ये समाप्तावन्ते" इति शब्दार्णवे। "अन्तौ व्यवसिते मृत्यौ स्वरूपे निश्चयेन्तके" इति वैजयन्ती। रम्याः रन्तुं योग्याः मनोहरा इत्यर्थः। कृतकगिरयः क्रीडाद्रयः। सन्तीति शेषः॥ तेन पथा। व्रज्या गतिः। "व्रज्याटाट्यापर्यटनम्" इत्यमरः। तव ते। सुखकरी सौख्यकारिणी स्यात्। स्रोतसां प्रवाहाणाम्। "स्रोतोऽम्बुसरणं स्वतः" इत्यमरः। परिलघु गुरुत्वदोषरहितम्। उपलास्फालनकेलित्वात् पथ्यमित्यर्थः। पयः पानीयम्। उपभुज्य उपयोगं कृत्वा। सुखेन अश्रमेण। यायाः गच्छेः। "या प्रापणे" लिङ्॥५२॥

> कामं यायाः पथि निगदिते कामगत्या विमानं
> प्रीत्यारूढः प्रथितमहिमा वारिवाहीव वन्धो।
> दृष्टोद्योगो नभसि विहरन् खेचरीभिस्त्वमुच्चै-
> रद्रेः शृङ्गं हरति पवनः किंस्विदित्युन्मुखीभिः॥ ५३॥

काममिति॥ वन्धो अहो भ्रातः। पवनः त्वत्सहचरो वायुः। अद्रेः चित्रकूटस्य। उच्चैः तुङ्गम्। शृङ्गम् शिखरम्। "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः। हरति किंस्वित् उत्पाटयति किम्। "किं पृच्छायां जुगुप्सने।" स्वित्प्रश्ने च वितर्के च" इत्युभयत्राप्यमरः। इति एवम्। शङ्कयेति शेषः। उन्मुखीभिः उद्गतं मुखं यासां तास्तथोक्तास्ताभिः उन्नमितवक्त्राभिः। खेचरीभिः विद्याधरवनिताभिः। दृष्टोद्योगः ईक्षितव्यापारः। नभसि आकाशे विहरन्। विमानं व्योमयानम्। प्रीत्या प्रमोदेन। आरूढः आरूढवान्। प्रथितमहिमा प्रसिद्धसामर्थ्यः। त्वम्। "प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः" इत्यमरः॥ वारिवाहीव मेघवत्। निगदिते मया

कथिते । पथि मार्गे । कामगत्या अभीष्टगमनेन । " इच्छामनोभवौ कामौ " इत्यमरः । कामं स्वैरम् । " कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् " इत्यमरः । यायाः गच्छेः ॥ ५३ ॥

मय्यामुक्तस्फुरितकवचे नीलमेघायमाने
मन्ये युक्तं मदनुकृतये वारिवाहायितं ते ।
मेघीभूतो व्रज लघु ततः पातशङ्काकुलाभिः
दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः ॥ ५४ ॥

मयीति ॥ आमुक्तस्फुरितकवचे आमुक्तः सन्नद्धः स्फुरितः प्रस्फुरन् कवचो यस्य तस्मिन् । " आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् " इत्यमरः । सन्नद्धः । " उरच्छदः कङ्कटकोऽजगरः कवचोऽस्त्रियाम् " इत्यमरः । मयि यक्षे । नीलमेघायमाने नीलश्चासौ मेघश्च स इवाचरतीति नीलमेघायमानस्तस्मिन्सति। मदनुकृतये मम स्वरूपानुसरणाय । ते तव । वारिवाहायितं वारिवाह इवाचरतीति वारिवाहायते वारिवाहायते स्म तथोक्तम् । युक्तं योग्यम् । मन्ये जाने । ततः तस्मात् । मेघीभूतः पयोदरूपं वहन् । पातशङ्काकुलाभिः पतनसन्देहव्याकुलितात्मभिः । मुग्धसिद्धाङ्गनाभिः मुग्धाः मूढाः सिद्धानां देवविशेषाणाम् अङ्गनास्ताभिः । " मुग्धः सुन्दरमूढयोः " इत्यभिधानात् । चकितचकितं भयचकितप्रकारं यथा तथा । " द्विगुणः सदृशेन " इति द्विर्भावः । दृष्टोत्साह अवलोकितस्वारम्भः सन् । दृष्टोद्योग इति वा । " उत्साहोध्यवसायः स्यात्सवीर्यमतिशक्तिभाक् " इत्यमरः । लघु शीघ्रम् । व्रज गच्छ ॥ ५४ ॥

तस्माद्विद्युत्प्रसवसमये प्राप्य सिद्धिं वधूनां
सद्यः कृत्वा समुचितमदो दिव्यजीमूतरूपम् ।
दिव्यान्भोगान्समनुभवितुं कामुकः कामचारे
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खम् ॥ ५५ ॥

तस्मादिति ॥ तस्मात् ततः । विद्युत्प्रसवसमये तडिदुत्पत्त्यवसरे । वधूनां योषिताम् । सिद्धिं साधनं सिद्धिस्तं मनोविजयम् । प्राप्य लब्ध्वा । विद्युदुत्पत्तिर्योषिन्मनोविकारहेतुत्वादित्यर्थः । अदः एतत् । समुचितं सुयोग्यम् । दिव्यजीमूतरूपं दिव्यमेघाकृतिम् । सद्यः तदैव । " सद्यः सपदि तत्क्षणे " इत्यमरः । कृत्वा विधाय । दिव्यान् दिविभवान् । भोगान् विषयान् । " भोगः सुखं स्त्र्यादिभृतावहेश्च फणकाययोः । " इत्यमरः । खं व्योम । उत्पत उद्गच्छ । अलकापुर्या उदीच्यत्वादुत्तरमुखो भूत्वा गच्छेति भावः ॥ ५५ ॥

दिग्भ्योऽबिभ्यत्कथमिव पुमान्भीलुकस्तत्र गच्छे-
दुल्लङ्घ्याद्रीन्विषमसरितो दुर्गमांश्च प्रदेशान् ।
तन्मारोदीर्व्रज सुनिपुणं व्योममार्गानुसारी
दिङ्नागानां पथि परिहरन्स्थूलहस्तावलेपान् ॥ ५६ ॥ १४ ॥

दिग्भ्य इति ॥ तत्र मार्गे । भीलुकः "भयः कुकुककुकत्यः" "भीरुभीरुकभीलुकाः" इत्यमरः । पुमान् पुरुषः । दिग्भ्यः ककुब्भ्यः । अबिभ्यत् भीतिमगच्छत् । अद्रीन् पर्वतान् । विषमसरितः वैषम्ययुक्ता नदीः । दुर्गमान् गन्तुमशक्यान् । प्रदेशांश्च कान्तारादिस्थानान्यपि । उल्लङ्घ्य अतीत्य । कथमिव केन प्रकारेण । इवशब्दो वाक्याऽलङ्कारे । गच्छेत् व्रजेत् । तत् तस्मात्कारणात् । मा रोदीः रोदनं मा कुरु । पथि मार्गे । दिङ्नागानां दिग्गजानाम् । स्थूलहस्तावलेपान् पीवराणां शुण्डानां दर्पान् । " अवलेपस्तु गर्वः स्याल्लेपने दूषणेऽपि च " इति विश्वः । परिहरन् दूरीकुर्वन् । व्योममार्गानुसारी आकाशमार्गानुयायी सन् । सुनिपुणं सुष्ठु चतुरो यथा भवति तथा । व्रज गच्छ । तन्मार्गे पुमान्भीरुश्चेद्गन्तुं न समर्थः । तस्माद्धीरो भवन् युक्त्या व्रजेति तात्पर्यम् ॥ ५६ ॥

प्रस्थाने ते विरचितमितस्तोरणं नूनमुच्चैः
काञ्चीदाम श्लथितमथवा स्वर्गलक्ष्म्याः किमेतत् ।
वर्णोपघ्नं धनुरुत समाविर्भवत्यत्युदग्रं
रत्नच्छायव्यतिकर इव प्रेक्ष्यमेतत्पुरस्तात् ॥ ५७ ॥

नूनं भूम्यान्तरितविसरं भोगिमूर्द्धन्यरत्न-
ज्योतिश्चक्रं वियति किमितो दृश्यते भूमिरन्ध्रात् ।
प्रायेणेदं दिनकरकराश्लिष्टमेघाश्रितं यद्-
वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ॥ ५८ ॥

प्रस्थान इति ॥ वल्मीकाग्रात् वामलूरविवरात् । "वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्" इत्यमरः । प्रायेण बाहुल्येन । "प्रायो भूम्न्यन्तगमने" इत्यमरः। दिनकरकराश्लिष्टमेघाश्रितं सूर्यकिरणसमाक्रान्तवारिवाहाश्रितम् । यदिदं यदेतत् । आखण्डलस्य इन्द्रस्य । धनुःखण्डं चापदण्डम् । प्रभवति आविर्भवति । एतत् इन्द्रधनुःखण्डम् । ते तव । प्रस्थाने प्रयाणे । "प्रस्थानं गमनं गमः" इत्यमरः । इतः पुरः । विरचितम् आरचितम् । उच्चैः महत् । नूनं निश्चयेन । तोरणं भवतीति शेषः । अथवा न चेत् । स्वर्गलक्ष्म्याः स्वःश्रियः । श्लथितम् आस्रस्तम् । काञ्चीदाम रशना । किं भवेत् किमिति प्रश्नः । उत अथवा । "विकल्पे किं किमूत च" इत्यमरः । एतत् इन्द्रधनुः । रत्नच्छायव्यतिकरे रत्नानां छायाः रत्नच्छायाः "अनञ् तत्पुरुषे सेनाछायाशालासुरानिशा" इति वैजयन्तीस्त्रीनपुंसकशेषः। रत्नच्छायानां पद्मरागादिमणिकिरणानाम्। "छाया सूर्यप्रिया

---

१ स्वर्गलक्ष्मीः तवागमनमालक्ष्य त्वदीयपरिरंभणाव्यवहितोत्तरक्षण एवासमशरकेलिरारंभणीयेति कांचीदाम श्लथयित्वा वर्तत इव भाति अतस्त्वया लघु गन्तव्यमिति प्रेरणाकृतेत्याशयः ।

कान्तिः प्रतिबिम्बमनातपे " इत्यमरः। व्यतिकरो मिश्रणं तस्मात्। अत्युदग्रम् अत्युन्नतम्। " उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे " इत्यमरः। वर्णोपन्नं " स्यादुपघ्नोन्तिकाश्रयः " इत्यमरः। धनुः चापः। समाविर्भवतीव प्रादुर्भवतीव। पुरस्तात् पुरोभागे। " प्राच्यां पुरस्तात्प्रथमे " इत्यमरः। प्रेक्ष्यं दर्शनीयं स्यात्। इतः तद्धनुः। भूमिरन्ध्रात् एतस्माद्भूबिलात्। भूम्या भूवलेन। अन्तरितविसरम् अन्तरितः व्यवहितः विसरः प्रसारणं यस्य तत्। भोगिमूर्द्धन्यरत्नज्योतिश्चक्रम् नागेन्द्रस्य मस्तकस्थरत्नानां कान्तिवृन्दम्। मूर्द्धनि भवानि मूर्द्धन्यानि। " दिगादिभ्यो यत् " इति यत्। " ज्योतिस्ताराग्निभाज्वालादृक्पुत्रार्थाध्वरात्मसु" "चक्रं सैन्ये बलावर्ते रथाङ्गे चयराष्ट्रयोः " इत्युभयत्रापि वैजयन्ती। व्योम्नि। नूनं निश्चयेन दृश्यते किम् अवलोक्यते किमित्युत्प्रेक्षा॥ ५७॥ ५८॥ युग्मम्

खड्गस्यैकं कथमपि दृढं मे सहस्व प्रहारं
वक्षोभागे कुलिशकठिने प्रोच्छलद्रक्तधारम्।
विद्युद्दण्डस्फुरितरुचिना वारिदस्येव भूयो
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते॥ ५९॥

खड्गस्येति॥ विद्युद्दण्डस्फुरितरुचिना विद्युद्यष्टिवत् प्रज्वलितकान्तिना। येन खड्गेन। वारिदस्येव मेघस्येव। ते तव। श्यामं नीलहरितम्। वपुः तनुः। भूयः पुनरपि। अतितराम् प्रकृष्टाम्। कान्तिं शोभाम्। " शोभा कान्तिर्द्युतिश्छविः " इत्यमरः। आपत्स्यते प्राप्स्यति। मे मम। खड्गस्य करवालस्य। दृढं निष्ठुरम्। " कठोरं निष्ठुरं दृढम् " इत्यमरः। एकं प्रहारं घातम्। कुलिशकठिने वज्र-

---

१ भवदीयं वपुर्निसर्गतः जलधरनिभत्वात् नैल्यवदत एवासुंदरं खड्गरूपविद्युत्संपर्केणापि सुषमा भूयात् किं च वारिधरे विद्युतोवस्थानं युक्तं मेघसदृक्षे त्वद्वक्षसि प्रहरणद्वारा खड्गरूपविद्युतोऽवस्थानं न्याय्यमित्याशयः॥

कर्कशे। "ह्लादिनी वज्रमस्त्री स्यात् कुलिशं भिदुरं पविः" इत्यमरः। वक्षोभागे वक्षःस्थले। "उरो वत्सं च वक्षश्च" इत्यमरः। प्रोच्चलद्रक्तधारं प्रोच्चलन्ती रक्तस्य धारा यथा भवति तथा। कथमपि महता कष्टेनापि। सहस्व क्षमस्व ॥ ५९ ॥

शङ्कोरेवं प्रहृतमथवा धत्स्व शूराग्रणीर्मे
पिच्छोपाग्रप्रतितिरुचिरं येन शोभाऽधिका ते।
क्रीडाहेतोर्विरचिततनोरिन्द्रनीलत्विषः स्या-
द्बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः ॥६०॥१५॥

शङ्कोरिति॥ अथवा। क्रीडाहेतोः लीलानिमित्तम्। विरचिततनोः निर्मितशरीरस्य। इन्द्रनीलत्विषः इन्द्रनीलरत्नस्येव त्विट् कान्तिर्यस्य तस्य। गोपवेषस्य गोपालवेषवतः। विष्णोः कृष्णस्य। स्फुरितरुचिना प्रोच्चलद्युतिना। बर्हेणेव पिच्छेनेव। "पिच्छबर्हे नपुंसके" इत्यमरः। येन शङ्कुना। ते तव। अधिका उत्कृष्टा। शोभा कान्तिः। स्यात् भवेत्। शूराग्रणीः भो वीराग्रेसर। त्वं मे मम। शङ्कोः नाराचस्य। "वा पुंसि शल्यं शङ्कुर्ना" इत्यमरः। प्रहृतं प्रहारम्। पिच्छोपाग्रप्रतितिरुचिरं पिच्छस्य शल्याग्रस्थितबर्हस्य अग्रस्य समीपमुपाग्रं तस्य प्रततिः प्रतानम् "प्रततिर्विस्तृतौ वल्ल्याम्" इति विश्वः। तया रुचिरं सुपमं यथा भवति तथा। एवं दृश्यमानप्रकारेण धत्स्व धेहि ॥ ६० ॥

आस्तां तावत्प्रहरणकथा स्वर्ययाऽर्ज्यं तवाऽयं
मार्गः स्वर्जो वियदभिपतेः प्रागमुष्मात्प्रदेशात्।
जीमूतत्वं दधदनुगतः क्षेत्रिणां दृष्टिपातै-
स्त्वय्यायत्तं कृषिफलमिति भ्रूविकाराऽनभिज्ञैः[1] ॥ ६१ ॥

---

१ भ्रूविलासानभिज्ञैरित्यपि पाठः॥

आस्तामिति ॥ यया कथया स्वः स्वर्गः " स्वर्गे परे च लोके स्वः " इत्यमरः । अर्थ्यं सम्पद्यं भवति सा प्रहरणकथा प्रघातोक्तिः । अथ वा । प्रहरणकथा आयुधवार्ता । " आयुधं तु प्रहरणम् " इत्यमरः । तावदास्तां तदा तिष्ठतु । तव ते । अयं दृश्यमानः । स्वर्जः स्वर् स्वर्गे जायते इति तथोक्तः । स्वर्गप्रापक इत्यर्थः । मार्गः पन्थाः भवति । जीमूतत्वं मेघस्वरूपम् । दधत् वहन् । कृपेर्हलकर्मणः फलं सस्यम् । त्वयि भवति । अधिकरणविवक्षायां सप्तमी । आयत्तं "अधीनो निघ्न आयत्तः" इत्यमरः । इति अस्मात् हेतोः । " इति हेतुप्रकरणप्रकाशादिसमाप्तिषु " इत्यमरः । क्षेत्रिणां कृषीवलानाम् । भ्रूविकारानभिज्ञैः भ्रूविकाराणां भ्रुवोर्विलासानाम् अनभिज्ञैः प्रज्ञाविकलैः । पामरत्वादिति यावत् । दृष्टिपातैः दृग्व्यापारैः । अनुगतः अनुयातः सन् । अमुष्मात् प्रदेशात् एतत्स्थानात् । प्राक् पूर्वम् । वियत् व्योम । अभिपतेः अभिगच्छेः ॥ ६१ ॥

विद्युन्मालाकृतपरिकरो भास्वदिन्द्रायुधश्री-
रुद्यन्मन्द्रस्तनितसुभगः स्निग्धनीलाञ्जनाभः ।
शीघ्रं यायाः कृतकजलद त्वत्पयोबिन्दुपात-
प्रीतिस्निग्धैर्जनपदवधूलोचनैः पीयमानः ॥ ६२ ॥

विद्युन्मालेति ॥ कृतकजलद भो विकल्पितमेघ । त्वां विद्युन्मालाकृतपरिकरः सौदामिनीभिः कृतपरिवारः । " तडित्सौदामिनीविद्युत् " " परिकरः पर्यङ्कपरिवारयोः " इत्युभयत्राप्यमरः । भास्वदिन्द्रायुधश्रीः भास्वन्ती इन्द्रायुधस्य श्रीर्यस्य सः । " इन्द्रायुधं शक्रधनुः " उद्यन्मन्द्रस्तनितसुभगः मन्द्रं च तत्स्तनितं च उद्यद्भवच्च तत् मन्द्रस्तनितं च तेन सुभगः रुचिरः । स्निग्धनीलाञ्जनाभः स्निग्धं

१ 'पत्लृ गतौ' विधिलिङ् प्रहरणस्य दुस्सहत्वे मेघरूपं कृत्वा वा पलायनं कुर्विति भावः ॥

मसृणं तच्च तन्नीलाञ्जनं च तदिव आभा यस्येति तथोक्तः ।"चिक्कणं मसृणं स्निग्धम्" इत्यमरः । त्वत्पयोबिन्दुपातप्रीतिस्निग्धैः तव जलबिन्दुपतनेन जातप्रमोदेन विश्वस्तैः । जनपदवधूलोचनैः देशस्त्रीणां नेत्रैः । " राष्ट्रं जनपदो निर्गो जनान्तो विषयः " इति धनञ्जयः । पीयमानः पीयते इति पीयमानः अतितृष्णया निरीक्ष्यमाणः सन्नित्यर्थः । शीघ्रं त्वरितम् । यायाः गच्छेः ॥ ६२ ॥

दृश्यान्देशाञ्जलद सकलान्प्रेक्ष्य सिंहावलोका-
त्तत्रत्यानां जनपदभुवां तापमाहृत्य पश्चात् ।
प्रत्यासन्नं जनपदमिमं लङ्घयाऽलं विलम्ब्य
सद्यः सीरोत्कषणसुरभि क्षेत्रमारुह्य मालम् ॥ ६३ ॥

दृश्यानिति ॥ जलद मेघ । दृश्यान् द्रष्टुं योग्यान् । सकलान् देशान् सर्वविषयान् । सिंहावलोकात् सिंहवदवलोकनात् । प्रेक्ष्य दृष्ट्वा । तत्रत्यानां तत्रभवास्तत्रत्यास्तेषाम् । " क्वेहामुतस्त्रात्यच् " जनपदभुवां जनपदे भवन्तीति जनपदभुवस्तेषांजनानाम् । तापं सन्तापम् । आहृत्य परिहृत्य । पश्चात् अनन्तरे । विलम्ब्य कालयापनं कृत्वा । अलं पर्याप्तम् । " अलं भूषणपर्याप्तिशक्तिवारणवाचकम् । " इत्यमरः । कालक्षेपो मा भूदित्यर्थः । मालं शैलवदुन्नतस्थलम् । " मालमुन्नतक्षेत्रम् " इत्युत्पलः । "मालमुन्नतभूः " इति नानार्थरत्नमालायाम् । क्षेत्रं भूप्रदेशम् । " क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः " इति विश्वः । सद्यः तत्क्षण एव । सीरोत्कषणसुरभि सीरैर्हलैरुत्कषणेन सुरभि घ्राणतर्पणः यथा भवति तथा । ईषद्वृष्टिं वितन्वन्निति भावः । आरुह्य उत्प्लुत्य । प्रीत्या प्रमोदेन आसन्नं समीपगतम् । इमं जनपदम् एतद्देशम् । " नीवृज्जनपदो देशविषयौ " इत्यमरः । लङ्घय अत्येहि ॥ ६३ ॥

यद्यौत्सुक्यं तव जनपदप्रेक्षणे दीर्घकालं
प्रत्यावृत्तस्वविषयरतेरस्ति भिक्षा कदाचित् ।
तत्पेपीयस्व परिसरितं दक्षिणाशां भ्रमित्वा
किञ्चित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ ६४ ॥ १६ ॥

यदीति ॥ तव भवतः । दीर्घकालं बहुकालपर्यन्तम् । जनपदप्रेक्षणे देशदर्शने । औत्सुक्यं लाम्पट्यम् । यदि भवति चेत्तर्हि । प्रत्यावृत्तस्वविषयरतेः प्रत्यावृत्ता पुनरागता स्वविषयरतिश्चक्षुरादीन्द्रियासक्तिस्तस्य इति कर्मधारयः । सारतिर्यस्येति बहुव्रीहिर्वा । कदाचित् कचित्काले । भिक्षा प्राप्तिः अस्ति । तत् तस्मात् । पश्चात् पुनः । किञ्चित् कियत् । दक्षिणाशाम् अवाचीदिशम् । भ्रमित्वा चलित्वा । परिसरितं सरितं सरितं परि तथोक्तम् । पेपीयस्व अत्यर्थं पानं विधेहि । " पीन् पाने " इति धातोः यङि लिट् । भूयः पुनश्च । उत्तरेणैव उत्तरमार्गेणैव । लघुगतिः प्राक् तत्र निर्वृष्टत्वात् क्षिप्रगमनः सन् । " लघु क्षिप्रमरं द्रुतम् " इत्यमरः । व्रज गच्छ ॥ ६४ ॥

वक्ष्यत्युच्चैःपथगतपरिश्रान्तितान्तं नितान्तं
तुङ्गोऽद्रिः स्वैर्बहुविलसितैर्निर्झरैरात्तकान्तिः ।
प्रत्युद्यातो धुततटवनोपान्तदेशैर्मरुद्भिः
त्वामासारप्रशमितवनोपद्रवं साधु मूर्ध्ना ॥ ६५ ॥

वक्ष्यतीति ॥ उच्चैःपथगतिपरिश्रान्तितान्तम् उच्चैःपथगत्या व्योमगमनेन जाता परिश्रान्तिः परिश्रमः तया तान्तः खिन्नस्तम् । आसारप्रशमितवनोपद्रवम् आसारेण वेगवद्वर्षणेन " आसारो वेगवद्वर्षम् " इत्यमरः । प्रशमितो वनोपद्रवो वनाग्निर्येन तं कृतोपकारमित्यर्थः । त्वां भवन्तम् । तुङ्गः उन्नतः । अद्रिः भूभृत् । कोप्यद्रि-

१ सर्वज्ञखैरिति पाठांतरम् २ उपप्लवमिति पुस्तकांतरे ।

रिति वा पाठः । स्वैः स्वकीयैः । वहुविलसितैः वहुधा निर्मितैः । निर्झरैः जलप्रवाहैः । " प्रवाहो निर्झरो झरः " इत्यमरः । आत्तकान्तिः धृतद्युतिः । धुततटवनोपान्तदेशैः धुताः कम्पिताः तटवनस्य उपान्तदेशा यैस्तैः । मरुद्भिः वायुभिः । प्रत्युद्यातः प्रत्युद्गतः सन् । नितान्तं गाढम् । " तीव्रैकान्तनितान्तानि गाढवाढदृढानि च " इत्यमरः । साधु सम्यक् । मूर्ध्ना शिरसा । वक्ष्यति उद्धरिष्यति । " वहि प्रापणे " लट् । दत्तपाद्यः कृताऽभ्यागतप्रतिपत्तिः सन् मानयिष्यतीति तात्पर्यम् ॥ ६५ ॥

त्वय्यासन्ने विरलविरलान्प्रावृषेण्योदविन्दून्
वस्त्रक्नोपं विसृजति तथाऽप्यश्मवेश्मोदरीषु ।
सिद्धद्वन्द्वं सुरतरसिकं प्रान्तपर्यस्तवीणं
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ॥ ६६ ॥

त्वयीति ॥ आसन्ने समीपगते । त्वयि भवति । विरलविरलान् सान्तरसान्तरान् । वीप्सायां द्विः । प्रावृषेण्योदविन्दून् प्रावृट्कालभवजलकणान् । वस्त्रक्नोपं यावता वस्त्रं क्नोपितमार्द्रं भवति तावत् । विसृजति वर्षति सति । " चेलार्थात् क्नोपीः " इति विकल्पितीणम् । तथापि आम्रकूटः आम्राश्चूताः कूटेषु शिखरेषु यस्य सः । आम्रकूटो नाम सानुमान्पर्वतः । अश्मवेश्मोदरीषु शिलासद्मसध्येषु । गुहास्वित्यर्थः । सुरतरसिकं निधुवनप्रीतम् । प्रान्तपर्यस्तवीणं प्रान्ते समीपे पर्यस्ता विसृष्टा वीणा यस्य तत् । अध्वश्रमपरिगतं प्राप्तम् । सिद्धद्वन्द्वं देवविशेषमिथुनम् । वक्ष्यति भणिष्यति । मेघागमनस्य रतिहेतुत्वात् सुरतप्रियं सिद्धमिथुनं सूचयतीति भावः ॥ ६६ ॥

त्वामुत्तुङ्गैः शिखरतरुभिः सङ्ग्रहीष्यत्यवश्यं
विश्रान्त्यर्थं प्रियमुपगतं सोऽचलस्तुङ्गवृत्तिः ।

प्राप्ते काले प्रणयिनमहो कर्तुमर्हत्यपार्शं
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय ॥ ६७ ॥

त्वामिति ॥ तुङ्गवृत्तिः तुङ्गा वृत्तिर्यस्य सोऽचलः स आम्रकूटः। विश्रान्त्यर्थं विश्रमणाय। उपगतं समीपगतम्। प्रियं मित्रम्। त्वां भवन्तम्। उत्तुङ्गैः उन्नतैः। शिखरतरुभिः कूटस्थवृक्षैः। अवश्यं निश्चयेन। सङ्ग्रहीष्यति सम्मानं करिष्यति। तथाहि। काले समये। संश्रयाय आश्रयाय। प्राप्तम् आगतम्। प्रणयिनं विश्वस्तम्। क्षुद्रोऽपि कृपणोऽपि "क्षुद्रो दरिद्रे कृपणे नृशंसे" इति यादवः। किं पुनरुदार इत्यपिशब्दार्थः। प्रथमसुकृतापेक्षया पूर्वोपकारपर्यालोचनया। अपार्शं निष्फलाभिलापम्। कर्तुं विधातुम्। नार्हत्यहो योग्यो न भवति हि। किन्तु सम्मानयत्येवेति तात्पर्यम् ॥ ६७ ॥

मन्ये मैत्रीं गुरुभिरचलैर्वारिदानामहार्य्यां
यं प्रत्येते विदधति धृतिं तस्य ते वन्धुकृत्यम्।
कुर्य्यादद्रिर्भृशमसुहृदोऽप्युत्तमस्निग्धवृत्तिः
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥६८॥१७॥

मन्य इति ॥ वारिदानां मेघानाम्। गुरुभिः महद्भिः। अचलैः गिरिभिः। अहार्याम् अतिस्निग्धाम्। मैत्रीं मित्रत्वम्। मन्ये जाने। तथाहि। एते वारिदाः। यं प्रति यमुद्दिश्य। धृतिं सन्तोषम्। "योगान्तरे धारणे च सप्ततन्तौ सुखेपि च। धैर्यसन्तोषयोश्चैव धृतिशब्द उदाहृतः।" इत्यभिधानात्। विदधति कुर्वन्ति। ते अचलाः। तस्य वारिदैः सन्तोषितस्यैव[1]। वन्धुकृत्यम्। भृशम् अत्यन्तम्। "अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्" इत्यमरः। कुर्यात् विदध्यात्। तदा तेन प्रकारेण। उच्चैः महति। मित्रे सुहृदि।

---

१ साकमिति शेषः।

प्राप्ते आश्रिते सति। यः पुनः यः कश्चन। विमुखो भवति किम् पराङ्मुखो न भवत्येवेत्यर्थः ॥ ६८ ॥

सेव्यः सोऽद्रिः खचरवनिताध्यासितोदग्रशृङ्ग
स्त्वां विश्रान्त्यै त्वरयति पुरा रम्यसानुप्रदेशः।
सिद्धोपास्यः कुसुमितलतावीरुधां सन्निवेश्यः
छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रैः ॥ ६९ ॥

सेव्य इति ॥ खचरवनिताध्यासितोदग्रशृङ्गः विद्याधरस्त्रीभिरधिष्ठितमुन्नतशिखरं यस्य सः। रम्यसानुप्रदेशः रम्यः सानूनां प्रदेशो यस्य सः। सिद्धोपास्यः सिद्धदेवैराराध्यः। कुसुमितलतावीरुधां पुष्पितलतागुल्मानाम्। द्राक्षादयो लताभेदाः। वृन्ताकादयो गुल्मभेदा इति यावत्। सन्निवेश्यः आश्रयणीयः। परिणतफलद्योतिभिः परिणतैः परिपक्वैः फलैः द्योतन्त इति द्योतिनस्तैः। आषाढे च वनचूताः फलन्ति पच्यन्ते च मेघवातेनेत्याशयः। काननाम्रैः वनचूतैः। छन्नोपान्तः समावृतपार्श्वः। सेव्यः सेवितुं योग्यः। सोद्रिः आम्रकूटाचलः। पुरा अग्रतः। "निकटागामिके पुरा" इत्यमरः। विश्रान्त्यै विश्रमणाय। त्वां भवन्तम्। त्वरयति सम्भ्रमयति ॥६९॥

कृष्णाहिः किं वलयिततनुर्मध्यमस्याधिशेते
आ॰ किं वा नीलोत्पलविरचितं शेखरं भूभृतः स्यात्।
गुहासि॰ त्याशङ्कां ज[illegible]सिव[illegible]ते पुरा मुग्धविद्याधरीणां
समीपे प॰ [illegible]ष्टा वी॰
सिद्धद्वन्द्वं दे॰ त्वय्यारू[illegible] रमचलः [illegible]ग्धवेणीसवर्णे ॥ ७० ॥
मिथुन॰
रतिहेतुत्वात् सुरेति[illegible]यं सिद्धुग्धवेणीसवर्णे मसृणकेशबन्धनसच्छाये।
न केशबन्धने। जलसृतौ" इति यादवः।

त्वामुत्तुङ्गैः शिखरतरुभिः
विश्रान्त्यर्थं प्रियमुपगतं र

रमपि मुक्त्वा विहरणायागतैस्सिद्धदेवैराश्र-

त्वयि भवति । शिखरं शृङ्गम् । आरूढे सति । " यद्भावो भावलक्षणम् " इति सप्तमी । अचलः सोद्रिः । मुग्धविद्याधरीणां मुग्धानां विद्याधरयोषितां । वलयिततनुः मंडलितकायः । कृष्णाहिः कृष्णसर्पः । अस्य पर्वतस्य । मध्यमस्याधिशेते किं मध्ये तिष्ठति किम् । "शीङ्स्थासोधिराधारः " इत्याधारे द्वितीया । अथवा भूभृतः गिरेः । नीलोत्पलविरचितं कुवलयघटितम् । शेखरं माल्यम् । " शिखास्वापीडशेखराः " इत्यमरः । स्यात्किम् । इत्याशङ्कां एवम् आशंकाम् । पुरा अग्रे । जनयति उत्पादयति ॥ ७० ॥

अध्यासीनः क्षणमिव भवानस्य शैलस्य कुञ्जं
लक्ष्मीं रम्यां मुहुरुपहरन्निन्द्रनीलोपलस्य ।
खेनोन्मुक्तो भुवमिव गतः श्लक्ष्णनिर्मोकखण्डो
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थाम् ॥ ७१ ॥

अध्यासीन इति ॥ भवान् त्वम् । अस्य शैलस्य आम्रकूटस्य । कुञ्जं निकुञ्जम् । क्षणमिव । इवशब्दो वाक्याऽलङ्कारे । अध्यासीनः । " शीङ्स्थासोः " इति द्वितीया । निकुञ्जनिविष्टः सन् इत्यर्थः । मुहुः पुनः । इन्द्रनीलोपलस्य इन्द्रनीलमणेः । रम्यां लक्ष्मीं शोभां तुलामित्यर्थः । उपहरन् उपवहन् । खेन गगनेन । " अनन्तं सुरवर्त्म खम् " इत्यमरः । उन्मुक्तः त्यक्तः सन् । भुवं भूमिम् । गतः प्राप्तः । श्लक्ष्णनिर्मोकखण्ड इव दभ्रकञ्चुकलेशवत् । "श्लक्ष्णं दभ्रं कृशं तनु" "समौ कञ्चुकनिर्मोकौ" इत्यमरः । अमरमिथुनप्रेक्षणीयां देवमिथुनैर्दर्शनीयाम् । अवस्थां दशाम् । नूनम् अवश्यम् । यास्यति गमिष्यति । भवच्छब्दप्रयोगात् प्रथमपुरुषः ॥ ७१ ॥

त्वय्यानीलत्विपि गिरिरसौ शेखरत्वं दधाने
शोभामेष्यत्यमरमिथुनश्लाघनीयां तदानीम् ।

नानापुष्पद्रुमशबलितोपत्यकः सोऽतिमात्रं
मध्येश्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥ ७२ ॥ १८ ॥

त्वयीति ॥ तदानीं तत्समये । आनीलत्विषि नीलद्युतौ । त्वयि भवति । शेखरत्वं शेखरताम् । " शिखास्वापीडशेखरौ " इत्यमरः । दधाने वहमाने सति पर्वतस्य शिखरोपमे सतीत्यर्थः । नानापुष्पद्रुमशबलितोपत्यकः नानाविधानि पुष्पाणि येषां ते ते च ते द्रुमाश्च तैः शबलिता मिश्रिता " चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे " इत्यमरः । उपत्यका नगासन्नभूमिर्यस्य सः । " उपत्यकाद्रेरासन्ना भूमिः " इत्यमरः । मध्येश्यामः मध्ये शिखरे श्यामः कृष्णवर्णः । ' अलुक्समासः । ' शेषविस्तारपाण्डुः मध्यादन्यत्र विस्तारे परितः प्रदेशो "विस्तारो विग्रहो व्यासः" इत्यमरः । पाण्डुः हरिणवर्णः । " हरिणः पाण्डुरः पाण्डुः " इत्यमरः । असौ गिरिः एष आम्रकूटः । भुवः वसुन्धरादेव्याः । स्तन इव पयोधर इव । अमरमिथुनश्लाघनीयां निर्जरद्वन्द्वैः स्तुत्याम् । शोभां छविम् । " शोभा कान्तिर्द्युतिश्छविः " इत्यमरः । अतिमात्रं निर्भरम् । " अतिमात्रोद्गाढनिर्भरम् " इत्यमरः । एष्यति यास्यति ॥ ७२ ॥

रम्यश्रोणीर्विकटदशनाः प्रोथिनीर्दीर्घघोणाः
पीनोत्तुङ्गस्तनतटभरान्मन्दमन्दं प्रयान्तीः ।
ग्रावक्षुण्णप्रशिथिलनखा वाजिवक्त्राः प्रपश्ये-
स्तस्मिन्स्थित्वा वनचरवधूभुक्तकुञ्जे मुहूर्तम् ॥ ७३ ॥

रम्यश्रोणीति ॥ वनचरवधूभुक्तकुञ्जे वने चरन्तीति वनचरास्तेषां

---

१ आङः अभिव्याप्त्यर्थकत्वमत अतोधिकनीलकांतिमतीत्यर्थः । २ भूशब्दस्य लक्षितलक्षणया वसुंधरेत्यर्थकरणेन भवदभिमतायाः भूतपूर्वभवेनुभुक्तायाः मदीयपत्न्याः स्तन इवाम्रकूटगिरिरयं भासते कीलेति मर्मतोदकवचनम् । ३ 'स्थित्वा तस्मिन्' इत्यपि पाठः ।

वधूभिः भुक्तः अनुभूतः कुञ्जः लतालयो यत्र तस्मिन् । एतेन तत्र विनोदोऽस्तीत्यर्थः। तस्मिन्नाम्रकूटे। मुहूर्तं स्वल्पकालम्। न तु चिरकालं स्वकार्यविरोधादिति भावः। "मुहूर्तः स्वल्पकाले स्याद्घटिकाद्वितयेऽपि च" इति शब्दार्णवे। स्थित्वा विश्रम्य । रम्यश्रोणीः रम्या मनोहरा श्रोणिः कटिर्यासां ताः। " कटिर्नितम्बः श्रोणिश्च जघनम् " इति धनञ्जयः। विकटदशनाः विकटाः असदृशाः दशना रदना यासां ताः। " रदना दशना दन्ताः " इत्यमरः। ओष्ठिनीः ओष्ठोऽस्त्यासामिति तयोक्तास्ताः लम्बोष्ठीः। दीर्घघोणाः दीर्घनासाः। " घोणा नासा च नासिका " इत्यमरः। पीनोत्तुङ्गस्तनतटभरात् उत्तुङ्गौ च तौ स्तनौ च तयोक्तौ पीनौ च तावुत्तुङ्गस्तनौ च तथोक्तौ "पीनपीव्नी तु स्थूलपीवरे" इत्यमरः "उच्चैरुन्नावचं तुङ्गमुच्चमुन्नतमुच्छ्रितम्" इति धनञ्जयः। तयोस्तटं प्रदेशस्तस्य भरो भारस्तस्मात्। " भरोऽतिशयभारयोः " इति भास्करः । मन्दमन्दं शनैःशनैः। प्रयान्तीः गच्छन्तीः । ग्रावक्षुण्णप्रशिथिलनखाः ग्राव्णा शिलया क्षुण्णाः कर्पिता अत एव प्रशिथिलाः अदृढाः नखाः नखरा यासां ताः। वाजिवक्त्राः वाजिन इव वक्त्रं यासां ताः खुरविशेषकान्ताः। प्रपश्येः प्रेक्षस्व ॥ ७३ ॥

तस्मादद्रेः कथमपि भवान्मुक्तकुञ्जः प्रयायाद्
रम्यस्थानं त्यजति न मनो दुर्विधानं प्रतीहि ।
कालक्षेपं विसृज गरिमालम्बनं याहि सद्य-
स्तोयोत्सर्गद्रुततरगतिस्तत्परं वर्त्म तीर्णः ॥ ७४ ॥

तस्मादिति ॥ तस्मादद्रेः आम्रकूटात् । भवान् त्वम् । कथमपि कष्टेनापि । मुक्तकुञ्जः मुक्तः कुञ्जो येन सः सन् । प्रयायात् गच्छेत् । मनः चित्तम् । दुर्विधानं कर्तुमशक्यम् । लब्धुमशक्यमित्यर्थः। रम्यस्थानं मनोहरप्रदेशम् । न त्यजति न जहाति । इति प्रतीहि

जानीहि । " इण् गतौ " लेट् । कालक्षेपं वेलाविलम्बनम् । विसृज त्यज । तोयोत्सर्गद्रुततरगतिः जलमोचनेन शीघ्रगमनः सन् । लघुभूत इति भावः । तत्परम् आम्रकूटादुत्तरम् । वर्त्म अध्वानम् । तीर्णः प्रस्थितः । गरिमालम्बनं गुरोर्भावो गरिमा । " पृथ्व्यादेर्वेमन् " इति भावे इमन् । " प्रियस्थिर–" इत्यादिना गुरुशब्दस्य गरादेशः । गरिम्णः आलम्बनम् आश्रयो यथा तथा । तोयोत्सर्गेण लघुत्वेपि माहात्म्यमनुत्सर्जनीयमित्याशयः । सद्यः तत्क्षण एव । याहि गच्छ ॥ ७४ ॥

गत्वोदीचीं भुव इव पृथुं हारयष्टिं विभक्तां
वन्येभानां रदनहतिभिर्भिन्नपर्यन्तवप्राम् ।
वीनां वृन्दैर्मधुरविरुतैरात्ततीरोपसेवां
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णाम् ॥ ७५ ॥

गत्वेति ॥ उदीचीं कौवेरीं दिशम् । " उत्तरा दिगुदीची स्यात् " इत्यमरः । गत्वा । भुवः भूदेव्याः । विभक्तां विहितचिताम्? पृथुं महतीम् । हारयष्टिमिव हारलतावत् । उपलविषमे उपलैः पाषाणैः " पाषाणप्रस्तरग्रावोपलाश्मानः" इत्यमरः । विषमे विकटे । विन्ध्यपादे विन्ध्यनाम्नोऽद्रेः पादे प्रत्यन्तपर्वते । " पादाः प्रत्यन्तपर्वताः " इत्यमरः । विशीर्णां समन्ततो विस्तृताम् । एतेन कस्याश्चित्कामुक्याः प्रियतमचरणे पातोपि ध्वन्यते । वन्येभानां कान्तारमतङ्गजानाम् । रदनहतिभिः दन्तघातैः । भिन्नपर्यन्तवप्रां स्फुटितसमीपकूलाम् । मधुरविरुतैः श्रुतिसुभगध्वनियुतैः । वीनां पक्षिणाम् । " विः पक्षिपरमात्मनोः " इत्यभिधानात् । वृन्दैः निकरैः । " स्त्रियां तु संहति-

---

१ 'समासोक्तिः परिस्फूर्तिः प्रस्तुते अस्तुतस्य चेत्' इति लक्षणात् रेवा विंध्यवर्णनप्रस्तावे तद्गतस्त्रीपुंल्लिंगस्वारस्याच्च पादविशीर्णपदयोः चरणपतनार्थकरणेन चाप्रस्तुतपूर्वार्थो गम्यते ।

धून्दम् " इत्यमरः । आत्ततीरोपसेवां व्याप्ततीरप्रदेशाम् । रेवां नर्मदां नदीम् । " रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका " इत्यमरः । द्रक्ष्यसि प्रेक्ष्यसि ॥ ७५ ॥

तां तस्याद्रेरुपतटवनं विप्रकीर्णप्रवाहां
तीरोपान्तस्खलनविषमोद्भूत्तफेनां समीनाम् ।
पश्य प्रीत्या गिरितटगजक्षोभभिन्नोर्मिमालां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ ७६ ॥ १९ ॥

तामिति ॥ तस्याद्रेः विन्ध्यस्याचलस्य । उपतटवनं तटवनस्य समीपम् उपतटवनम् तस्मिन् । " अदन्ताव्ययीभावत्वात्सप्तम्याः " इति अम् । तटवननिकटे इत्यर्थः । विप्रकीर्णप्रवाहाम् अतिविस्तृतनिर्झराम् । "प्रवाहो निर्झरो झरः " इत्यमरः । तीरोपान्तस्खलनविषमोद्भूत्तफेनां तीरसमीपे गतिवैषम्येण उद्भूतडिण्डीरपिण्डाम् । " डिण्डीरोऽब्धिकफः फेनः " इत्यमरः । समीनां मीनैर्मत्स्यैः सह वर्तत इति ताम् । गिरितटगजक्षोभभिन्नोर्मिमालाम् । गिरेः नगस्य तटस्य गजानां च क्षोभेण सङ्घट्टनेन भिन्ना विदारिता ऊर्मिमाला तरङ्गपङ्क्तिर्यस्यास्ताम् । तां नर्मदाम् । गजस्य नागस्य । अङ्गे शरीरे । भक्तिच्छेदैः भक्त्यो रचना रेखा इति यावत् " भक्तिर्निषवणे भागे रचनायाम्" इति शब्दार्णवे । तासां छेदैः भङ्गिभिः । विरचितां भूतिमिव शृङ्गारमिव भस्मेव वा । " भूतिर्मातङ्गशृङ्गारे जातौ भस्मनि सम्पदि " इति विश्वः । प्रीत्या तोषेण । पश्य प्रेक्षस्व ॥७६॥

दत्तं वन्यैरिव कलभकैः पुष्करेणोत्क्षिपद्भिः
प्रायोग्यं ते मुनिमत चिरं वासनावासितस्य ।
ग्रावक्षुण्णोच्चलितमथवा त्वं हरेर्वार्यवार्यं
तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टिः ॥ ७७ ॥

दत्तमिति ॥ मुनिमत भो मुनिभिः सम्मत । चिरं बहुकालेन । वासनावासितस्य वासनया संस्कारेण साम्यतयेति यावत् । वासितस्य संस्कृतस्य । ते तव । प्रायोग्यमिव प्रयोगयोग्यमिव । पुष्करेण पुष्कराग्रेण । " पुष्करं करिहस्ताग्रे वाद्यभाण्डे मखे जले " इत्यमरः । उत्क्षिपद्भिः उपरिसेचयद्भिः । जलमित्यभिज्ञायते । वन्यैः वने जातैः । कलभकैः कलभा एव कलभकास्तैः । स्वार्थे कः । हस्तिपोतैः । " कलभः करिशावकः " इत्यमरः । दत्तं वितीर्णम् । अथवा न चेत् । ग्रावक्षुण्णोच्चलितं ग्राव्णि उपले क्षुण्णम् आस्फालितं तच्च तदुच्चलितमुद्गतं च तथोक्तम् । तिक्तैः सुगन्धिभिः तिक्तरसवद्भिश्च " तिक्तो रसे सुगन्धौ च " इति विश्वः । वनगजमदैः वन्येभमदजलैः । वासितं सुरभीकृतम् । " भावितं वासितं त्रिपु " इत्यमरः । अवार्यं परैरहार्यम् । तस्याः नर्मदानद्याः । वारि अम्भः । त्वं भवान् । वान्तवृष्टिः उद्गीर्णवर्षः सन् । प्राक्तनं जलं परिहरन्नित्यर्थः । अनेन श्रमो व्यज्यते । हरेः स्वीकुरु । लिङ् । प्रकारान्तरेणाप्यन्वयः क्रियते । मुनिमत भो यतीन्द्र । चिरं बहुकालम् । वासनावासितस्य संस्कारेण संस्कृतस्य । ते तव । प्रायोग्यं प्रयोगोचितम् । पुष्करेण निजकराग्रेण । उत्क्षिपद्भिः उत्सेचयद्भिः । वन्यैः कलभकैः वनकरिशावकैः । दत्तमिव वितीर्णवत् । ग्रावक्षुण्णोच्चलितं शिलास्फालितोद्गतम् । अत्र साम्यं लक्ष्यते । अथ वा न चेत् । तिक्तैः सुगन्धिभिः तिक्तरसप्रधानैश्च । वनगजमदैः विपिनकरिमदजलैः । वासितं भावितम् । अवार्यं निरुपद्रवम् । तस्याः नर्मदायाः । वारि उदकम् । त्वं भवान् । वान्तवृष्टिः उद्गीर्णवर्षः सन् । हरेः गृहाण । उभयत्रापि प्रासुकत्वं व्यज्यते ॥ ७७ ॥

---

१ सुक्कं तत्तं पक्कं आमललवणेन मिस्सियं दव्वं । जंदेण पीडियं वा तस्सव्वं पासुअं भणिअं । इति परमागमे प्रतिपादितत्वात् शिलास्फालनाच्छुद्धं जलं मुनेर्भवत उपादेयमित्यभिप्रायः ।

तत्स्वादीयः सुरभि शिशिरं प्रार्थनीयं मुनीनां
निर्ज्जन्तुत्वादुपलनिपतन्निर्झराम्भःप्रकाशम् ।
तस्याः क्षुण्णं वनकरिकराघट्टनैरप्यजस्रं
जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ॥ ७८ ॥

तदिति ॥ स्वादीयः प्रकृष्टं स्वादु । "त्रिष्विष्टं मधुरं स्वादु" इत्यमरः । सुरभि सुगन्धि । शिशिरं शीतलम् । "सुषीमः शिशिरो जडः" इत्यमरः । उपलनिपतन्निर्झराम्भःप्रकाशम् उपले दृषदि निपततीति निपतत् निर्झरस्य प्रवाहस्याम्भः जलम् उपलनिपतच्च तत् निर्झराम्भश्च तस्य प्रकाशो व्यक्तिर्यस्य तत् । वनकरिकराघट्टनैः विपिनद्विरदकरास्फालनैः । अजस्रम् अनवरतम् । "नित्यानवरताजस्रम्" इत्यमरः । क्षुण्णं मार्दितम् । जम्बूकुञ्जप्रतिहतरयं जम्बूनां जम्बूवृक्षाणां कुञ्जैः प्रतिहतः प्रतिवद्धो रयो वेगो यस्य तत् । "रंहस्तरसी तु रयः स्यदः" इत्यमरः । सुखवेगमित्यर्थः । अनेन लघुत्वं कषायभावना च व्यज्यते[1] । निर्जन्तुत्वात् निर्गता जन्तवः प्राणिनो यस्मात् तत् तथोक्तम् तस्यभावो निर्जन्तुत्वं तस्मात् प्रासुकत्वात् । मुनीनां यतीनाम् । प्रार्थनीयं प्रार्थितुं योग्यम् । तस्याः नर्मदानद्याः । तत्तोयं नीरम् । "अम्भोर्णस्तोयपानीयनीरक्षीराम्बुशम्बरम्" इत्यमरः । आदाय गृहीत्वा । गच्छेः यायाः ॥ ७८ ॥

हृत्वा तस्या रसमपहृताशेषमार्गश्रमस्त्वां
व्योमव्रज्यां पुनरविहतप्रक्रमां संदधीथाः ॥
प्राप्तस्थैर्यं सपदि जलवानप्यसौ यद्गरीयान-
न्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वाम् ॥ ७९ ॥

हृत्वेति ॥ घन हे मेघ । यत् यस्मात् । असावनिलः एष पवनः ।

---

[1] उपलास्फालनाल्लघुत्वं जंबूवृक्षसंसर्गात्कषायसंस्कार इत्यर्थः ।

गरीयान् बलवानपि बलिष्ठोपि। प्राप्तस्थैर्यं प्राप्तं स्थैर्यं स्थिरत्वं येन तम्। अन्तःसारं अन्तः सारं बलं यस्य तम्। त्वां भवन्तम्। तुलयितुं चलयितुम्। सपदि शीघ्रेण। "द्राग्मंक्षु सपदि द्रुते" इत्यमरः। न शक्ष्यति शक्तो न भविष्यति। "शक्लृ शक्तौ" लृट्। तस्मात् कारणात्। तस्या रेवायाः। रसं तोयम्। "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः। हृत्वा स्वीकृत्य। अपहृताशेषमार्गश्रमः मार्गे जातः श्रमस्तथोक्तः। अपहृतोऽपाकृतः अशेषो मार्गश्रमो येन सः। त्वं भवान्। पुनः पश्चात्। अविहतप्रक्रमाम् अविहतः अप्रतिबद्धः प्रक्रमः आरम्भो यस्यास्ताम्। "प्रक्रमः स्यादुपक्रमः" इत्यमरः। व्योमव्रज्याम् अम्बरगतिम्। "व्रज्याटाट्या पर्यटनम्" इत्यमरः। संदधीथाः सम्यक् धत्स्व। अयमत्रध्वनिः–आदौ वमनशोधितस्य नरस्य पश्चात् श्लेष्मणः शोषणाय लघुतिक्तकषायांबुपानाल्लब्धबलस्य वातप्रकोपोपि न स्यादिति भावः। यदाह वाग्भटः। "कषायाः। स्नेहमास्तस्य विशुद्धेः श्लेष्मणो हिताः। किमु तिक्ताः कषाया वा येन संगाः कषावहाः" इति। "कृतशुद्धेः क्रमाद्धितपेयादेः पथ्यभोजनः। वातादिभिर्निषिद्धः स्यादिन्द्रियैरिव योगिनः" इति ॥७९॥

> मार्गेमार्गे पुनरपि जलान्याहरेस्त्वं धुनीनां
> येन स्थेमा भवति भवतो वीर दूरं प्रयातः ॥
> उत्सृज्यालं लघिमघटितां रिक्ततामेधि पूर्णो
> रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥८०॥२०॥

मार्ग इति ॥ वीर भो शूर। दूरं प्रकृष्टदेशम्। प्रयातः प्रयातीति प्रयान् तस्य प्रयातः। भवतस्तव। येन स्थेमा। "प्रियस्थिर–" इत्यादिना स्थिरशब्दस्य स्थादेशः। "पृथ्व्यादेर्विमन्" इति विमन्त्यः। स्थिरत्वमित्यर्थः। भवति। तेन प्रकारेण। मार्गेमार्गे पथिपथि। "वीप्सायां द्विः" पुनरपि मुहुः। धुनीनां नदीनाम्।

" तटिनी ह्रादिनी धुनी " इत्यमरः। जलानि अपः। त्वम्। आहरेः स्वीकुर्याः। लघिमघटितां लघोर्भावः लघिमा घटितां रचिताम्। रिक्ततां दरिद्रत्वम्। उत्सृज्य त्यक्त्वा। अलं शक्त्या। " अलंभूपण-पर्याप्तिशक्तिवारणवाचकम् " इत्यमरः। पूर्णः पुष्टः। एधि भव। " अस भुवि " इति धातोर्लिटि । " साध्येधिजहि " इति निपातनादेधिभावः। मध्यमपुरुषैकवचनम् । रिक्तः अन्तःसारशून्यः। सर्वः। लघुः अगुरुः। भवति। प्रकम्प्यो भवतीत्यर्थः। पूर्णता सारवत्ता। गौरवाय अप्रकम्प्यत्वाय भवतीत्यर्थः॥ ८० ॥

कार्याल्लिङ्गात्स्वयमधिगतात्कारणस्यानुमानं
रूढं येषां तदियमभिमा युक्तरूपेति मन्ये।
त्वत्सान्निध्यं यदनुमिमते योपितः प्रोपितानां
नीपं दष्ट्वा हरितकपिशं केसरैरर्धरूढैः॥ ८१ ॥

कार्यादिति॥ यत् यस्मात् । अर्धरूढैः एकदेशोद्भवैः। केसरैः किञ्जल्कैः। " किञ्जल्कः केसरोऽस्त्रियाम् " इत्यमरः। हरितकपिशं

---

१ लोकेपि दग्धहस्तो दरिद्रः तिरस्कारविपयो भवति पूर्णकामो धनी मान्यो भवतिहि। २ दृष्ट्वेति पाठ एव साधीयान् अनुमानप्रकारस्य। उद्गान्मेघो नीपकुसुमदर्शनात् प्रसिद्धवर्पाकाल इव अयमेवांशः चतुरशीतितमे श्लोके स्फुटी भविष्यति। स्थितस्यैव दष्ट्वेतिपाठस्यैव गतेश्चितने कृते सिध्यत्येवं लोके हि कारणात् कार्यमनुमेयमित्येपा युक्तिर्वैरीवर्तते। तामुल्लंघ्य तार्किकैः कार्यात्कारणमनुमेयमिति यदंगीकृतं तत्प्रकृते सत्यापयमंशः (?) अनुमानप्रकारस्य अयं नीपकुसुमभक्षणजन्यमदाभाववान् असत्सान्निध्येपि मदनानुकूलचेष्टादर्शनात् प्रसिद्धपंढवत् अथवा अयं नीपकुसुमभक्षणोत्तरकालीनासत्सान्निध्यवान् मदनानुकूलचेष्टादर्शनात् इति सुंदरीभिरनुमीयते। अनुमानद्वयेनापि सान्निध्यरूपकार्यात्मकहेतोः कारणरूपसाध्यस्य नीपकुसुमभक्षणस्य गमकत्वं भवतीति यथाकथंचिन्निर्वाह्यम्। नीपकुसुमभक्षणेन मदस्य लोपो भवतीत्यायुर्वेदे प्रथितं प्रोपितांगनास्त्वदीयचेष्टादर्शनेन पंढस्त्वयमिति निश्चिन्वंतीति हृदयम्।

हरितं हरितवर्णं श्यावम् अरुणमिति भावः । "पालाशो हरितो हरित्" "श्यावः स्यात्कपिशः" इति चामरः । हरितं च तत्कपिशं च हरितकपिशम् । "वर्णैर्वर्णः" इति समासः । नीपं स्थलकदम्बकुसुमम् । "अथ स्थलकदम्बके । नीपः स्यात्पुलकः श्रीमान्प्रावृषेण्यो हरिप्रियः" इति शब्दार्णवे । दृष्ट्वा खादित्वा । प्रोषितानां योषितः नार्यः । त्वत्सान्निध्यं त्वत्सामीप्यम् । अनुमिमते अनुमानयन्ति निश्चिन्वन्तीर्थः । कारणस्य कारणरूपस्य साध्यस्य । अनुमानं परिज्ञानम् । रूढं प्रसिद्धम् । येषां तार्किकाणां स्वयं स्वेन अधिगतात् निश्चितात् कार्यलिंगात् कार्यरूपाल्लिंगात् कार्यहेतोरित्यर्थः । भवतीति शेषः । तत् तस्मात् । इयमभिमा अयमभिमानः । युक्तरूपेति विशिष्टेति मन्ये जाने ॥ ८१ ॥

मध्येविन्ध्यं वनभुवमिया यत्र दृष्ट्वा शिलीन्ध्रा-
नध्यारूढा ननु वनममी पर्वतीया मनुष्याः ।
त्वामायातं कलयितुमलं त्वत्पयोविन्दुपातै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम् ॥ ८२ ॥

मध्येविन्ध्यमिति ॥ यत्र पर्वते । अमी एते । पर्वतीयाः पर्वते भवास्तथोक्ताः । " पर्वतादन्नरः " इति छयः । मनुष्याः मानुषाः । " मनोर्याणषक् च " इति षगागमयुक्तो यप्रत्ययः । त्वत्पयोविन्दुपातैः तव तोयविन्दूनां पतनैः अनुवनम् वनंवनमनु तथोक्तम् । " भागिनी च प्रतिपर्यनुभिः " इति वीप्सायां द्वितीया । अध्यारूढान् उत्पन्नान् । शिलीन्ध्रान् अङ्कुरविशेषान् । " कन्दल्यामुच्छिलीन्ध्रा स्यात् " इति शब्दार्णवे । अनुकच्छम् कच्छेष्वनूपेष्वनु अनुकच्छम् । " दीर्घेनुः " इत्यव्ययीभावः । " जलप्रायमनूपं स्यात्पुंसि कच्छस्तथाविधः " इत्यमरः । आविर्भूतप्रथममुकुलाः आविर्भूताः प्रादुर्भूताः प्रथमाः प्रथमोत्पन्नाः मुकुला यासां ताः । " कुड्मलो मुकुलोऽ-

स्त्रियाम्" इत्यमरः । कन्दलीः भूकन्दलीरपि । "द्रोणिपर्णी स्निग्धकन्धी कन्दली भूकदल्यपि" इति शब्दार्णवे । दृष्ट्वा प्रेक्ष्य । आयातमागतम् । त्वां कलयितुं निश्चेतुम् । कल इति धातुः कवीनां कामधेनुरिति वचनात् प्रकृतार्थप्रदः । अलं समर्था भवति । तत्र मध्येविन्ध्यं विन्ध्यस्य मध्यं तथोक्तम् । "पारे मध्येन्तःषष्ठ्या:" इत्यव्ययीभावे एत्वनिपातः । वनभुवं वनभूमिम् इयाः । यायाः ॥ ८२॥

त्वामासन्नं सपदि पथिका ज्ञातुमर्हन्त्यकाले
श्रुत्वा केकाध्वनिमनुवनं केकिनामुन्मदानाम् ।
वर्हक्षेपं नटितमपि च प्रेक्ष्य तेषां सलीलं
दग्धारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः ॥ ८३ ॥

त्वामिति ॥ अनुवनम् अनुवनान्यनुवनम् अनुवनेषु । उन्मदानां संतुष्टानाम् । केकिनां मयूराणाम् । केकाध्वनिं केका इति ध्वनिस्तं केकारवम् । "केका वाणी मयूरस्य" इत्यमरः । श्रुत्वा तेषां मयूराणाम् । "सलीलं लीलया सह वर्तत इति तथोक्तं तत् । वर्हक्षेपं वर्हाणां क्षेपः प्रसारणं यस्मिन् तत् । नटितमपि नर्तनमपि । प्रेक्ष्य च दृष्ट्वा च । दग्धारण्येषु दग्धानि च तान्यरण्यानि च तेषु । उर्व्याः भुवः । अधिकसुरभिम् अधिकघ्राणतर्पणम् । गन्धं परिमलम् । आघ्राय च गृहीत्वा च । पथिकाः पान्थाः । "पान्थः पथिकः" इत्यमरः । अकाले अनवसरे । आसन्नं समीपगतम् । त्वां भवन्तम् । सपदि मङ्क्षु । ज्ञातुम् अर्हन्ति योग्या भवन्ति । जानन्तीत्यर्थः ॥ ८३ ॥

---

१ जरव्येत्यपि पाठः । २ वर्हितांडवेन भूसौरभेण च आकालिकम् मेघरूपभावत्कोदयं पांथा निश्चिन्वंतीत्यर्थः ।

पुष्पामोदैरविरलममी सम्पतन्तो वनान्ते
वर्द्धौत्सुक्यात्सरसविदलत्कन्दलैश्चानुकुञ्जम् ।
दग्धारण्यस्थलपरिमलैश्चानुकृष्टा यथास्वं
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम् ॥ ८४ ॥ २१ ॥

पुष्पामोदैरिति ॥ पुष्पाणामामोदैः परिमलैः । " आमोदः सोऽतिनिर्हारी " इत्यमरः । सरसविदलत्कन्दलैश्च सरसैः विदलद्भिः कन्दलैरङ्कुरविशेषैः । " कन्दलीवृक्षमदयोः कन्दलस्तु नवाङ्कुरे " इति नानार्थमालायाम् । दग्धारण्यस्थलपरिमलैः दग्धकाननप्रदेशगन्धैश्च । यथास्वं यथास्वरूपम् । अनुकृष्टाः आकृष्टाः । वर्द्धौत्सुक्यात् संवद्धलाम्पट्यात् । वनान्ते वनमध्ये । " अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेन्तरे " इति भास्करः । अनुकुञ्जं कुञ्जाननु अनुकुञ्जम् तेषु " दैर्घ्यानुः " इति समासः । " सप्तम्याः " इति वाम् । अविरलं निविडम् । " पेलवं विरलं तनु " इत्यमरः । सम्पतन्तः गच्छन्तः । अमी सारङ्गाः मातङ्गाः कुरङ्गा वा । " सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे " इति विश्वः । जललवमुचः जलस्य लवान् कणान् मुञ्चतीति जललवमुक् तस्य । ते तव । मार्गं पदवीम् । सूचयिष्यन्ति द्योतयिष्यन्ति । यत्रयत्र वृष्टिकार्यं नीपकुसुमादिकं तत्रतत्र वृष्टिरिति वृष्टिविद्भिरनुमीयत इति तात्पर्यम् ॥ ८४ ॥

गैम्भीरत्वं यदिदमधुना लक्ष्यते ध्यानहेतोः
संक्षोभाणां विरचनशतैरप्यदृश्यं मदीयैः ।
तदृष्ट्वाऽहं तव घनतया मान्द्यमेवातिधैर्या-
दुत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः ॥ ८५ ॥

---

1 विकारजनकहेतुसद्भावेप्यविचलत्वं गांभीर्यं । २ न कस्यापि दर्शनाविषयं लोकोत्तरमिति यावत् ।

गम्भीरत्वमिति ॥ सखे भो मित्र । अधुना इदानीम् । मदीयैः मया कृतैः । ध्यानहेतोः योगनिमित्तस्य । संक्षोभाणां संचलनानाम् । विरचनशतैः विरचनानां करणानां शतैरपि अनेकैरपि । अदृश्यम् । अगोचरम् । यदिदं गम्भीरत्वं गाम्भीर्यम् । लक्ष्यते दृश्यते । तत् गम्भीरत्वम् । दृष्ट्वा । मत्प्रियार्थं मद्वनितानिमित्तम् । द्रुतं शीघ्रम् । यियासोरपि यातुमिच्छोरपि । तव ते । अतिधैर्यात् बहुधीरत्वात् । घनतया जडतया । " घनो मेघे मूर्त्तिगुणे त्रिपु मूर्ते निरन्तरे " इत्यमरः । मान्द्यमेव मन्दत्वमेव । अहम् उत्पश्यामि अहं तर्कयामि ॥ ८५ ॥

भूयश्चाहं नवजलधराधौतसानुप्रदेशे
नृत्यत्केकिध्वनिमुखरिते स्वागतं तन्वतीव ।
पाद्यं चोच्चैर्वहति शिरसा निर्झराम्भोऽभिशङ्के
कालक्षेपं ककुभसुरभौ पर्वतेपर्वते ते ॥ ८६ ॥

भूय इति ॥ भूयश्च पुनरपि । नवजलधराधौतसानुप्रदेशे नववारिवाहेणाधौतः सानोर्वप्रस्य प्रदेशो यस्य तस्मिन् । नृत्यत्केकिध्वनिमुखरिते नृत्यन्मयूरारवेण मुखरिते वाचाटिते । निर्झराम्भः प्रवाहोदकम् । पाद्यं च पादोदकम् । " पाद्यं पादाय वारिणि " इत्यमरः । शिरसा मस्तकेन । उच्चैः परम् । वहति वहतीति वहन् तस्मिन् । ककुभसुरभौ अर्जुनवृक्षपरिमले । "रुद्रद्रुः ककुभोऽर्जुनः" इत्यमरः । स्वागतम् अभ्यागतप्रतिपत्तिम् । तन्वति तनोतीति तन्वन् तस्मिन् । इव यथा तथा । पर्वतेपर्वते गिरौगिरौ । ते तव । कालक्षेपं कालविलम्बनम् । अहम् अभिशङ्के आशङ्कां करोमि ॥ ८६ ॥

निःसङ्गोपि व्रजितुमनलं तत्रतत्र क्षितिध्रे
लब्धातिथ्यः प्रिय इव भवानुह्यमानः शिरोभिः ।

---

१ उत्प्रक्षा ।

अभ्युद्यातैस्त्वदुपगमनादुन्मनीभूय भूयः
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः ॥ ८७ ॥

निःसङ्ग इति ॥ भूयः पुनरपि । त्वदुपगमनात् तव समीपगतात् । अभ्युद्यातैः प्रत्यागतैः । सजलनयनैः वाष्पोदकसहितलोचनैः । शुक्लापाङ्गैः शुक्लोऽपाङ्गः कटाक्षो येषां तैः मयूरैः । केकाः तद्ध्वनीन् । स्वागतीकृत्य सुक्षेमागमनप्रश्नं कृत्वा । उन्मनीभूय उत्कीभूय । "स्यादुत्क उन्मनाः" इत्यमरः । शिरोभिः मस्तकैः । उह्यमानः उह्यत इति उह्यमानः वहेरानश् । ध्रियमाणः । भवान् त्वम् । निःसङ्गोपि निष्परिग्रहोपि । प्रिय इव सुहृदिव । तत्रतत्र क्षितिध्रे क्षितिं धरतीति क्षितिध्रस्तस्मिन् पर्वते । "महीध्रः शिखरिक्ष्माभृत्" इत्यमरः । लब्धातिथ्यः अतिथ्यर्थमातिथ्यं लब्धमातिथ्यं येन सः । "ण्यौ तिथेः" इति ण्यः । प्राप्तातिथिकार्यः सन् । "अतिथिर्ना गृहागते" "क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि" इत्यमरः । व्रजितुं गन्तुम् । अनलम् असमर्थः । लब्धोपचारत्वात् तत्रतत्र कालक्षेपो भविष्यतीति तात्पर्यम् ॥ ८७ ॥

तस्योत्कण्ठाविरुतिमुखरस्योत्पतिष्णोः कथञ्चित्
प्रत्यासन्नत्वदुपगमनस्यान्तरार्द्रस्वभावे ।
स्नेहव्यक्तिं त्वयि घनयतः केकिवृन्दस्य मन्ये
प्रत्युद्यातः कथमपि भवान्गन्तुमाशु व्यवस्येत् ॥ ८८ ॥ २२ ॥

तस्येति ॥ अन्तरार्द्रस्वभावे अन्तर्मार्दवस्वभावे । अन्तसार्द्रस्वभावे इति वा भवति । स्नेहव्यक्तिं प्रेमव्यक्तिम् । घनयतः घनं करोतीति घनयन् तस्य द्रढयतः । सार्द्रभावं वर्द्धयत इत्यर्थः । उत्कण्ठाविरुतिमुखरस्य दुःखारवेण वाचाटस्य । उत्पतिष्णोः उत्पतितुमिच्छुः उत्पतिष्णुः उत्पतनशीलस्य । कथंचित् केनचित्प्रकारेण । प्रत्यासन्नत्वदुपगमनस्य

तव उपगमनं तथोक्तम् । प्रत्यासन्नं समीपं त्वदुपगमनं यस्य तस्य । केकिवृन्दस्य मयूरनिकायस्य । प्रत्युद्यातः प्रत्यागतः । भवान् त्वम् । कथमपि केनापि प्रयुक्तेन । आशु शीघ्रेण । "अविलम्बितमाशु च" इत्यमरः । गन्तुं गमनाय । व्यवस्येत् निश्चिनुयात् । भवच्छब्दप्रयोगात् प्रथमपुरुष इति । मन्ये जाने ॥ ८८ ॥

विन्ध्योपान्तात्तव गतवतो नातिदूरे दशार्णा
रम्यारामा नयनविषये संपतिष्यन्ति सद्यः ।
त्वत्सान्निध्यात्कलुषितपयःपूर्णशालेयवप्राः
पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नैः ॥ ८९ ॥

विन्ध्योपान्तादिति ॥ विन्ध्योपान्तात् विन्ध्याचलसमीपात् । गतवतः यातवतः । तव भवतः । सूचिभिन्नैः सूच्या भिद्यन्ते स्म सूचिभिन्नानि तैः निविडभूतैरित्यर्थः । केतकैः केतककुसुमैः । पाण्डुच्छायोपवनवृतयः उपवनानां वृतयस्तथोक्ताः " प्रान्ततो वृतिः " इत्यमरः । पाण्डी छाया कान्तिः यासां तास्तथोक्ताः पाण्डुच्छाया उपवनवृतयो येषां ते तथोक्ताः । त्वत्सान्निध्यात् तव मेघस्य सामीप्यात् । कलुषितपयःपूर्णशालेयवप्राः कलुषितपयसा पङ्काविलोदकेन पूर्णाः शालीनामुद्भवोचिताः शालेयाः " व्रीहिशालेर्ढण् " ते च ते वप्राः केदाराश्च तथोक्तास्ते येषां ते कलुषितपयःपूर्णशालेयवप्राः । " कलुषोऽनच्छ आविलः " " क्षेत्रं व्रैहेयशालेयं व्रीहिशाल्युद्भवोचितम् ।" "पुंनपुंसकयोर्वप्रः क्षेत्रं केदार इत्यपि" इत्यमरः । रम्यारामाः रम्या आरामा उपवनानि येषां ते तथोक्ताः । " आरामः स्यादुपवनम् " इत्यमरः । दशार्णाः दशार्णाख्या देशाः । नातिदूरे समीपे । अलुक्समासः । नयनविषये नेत्रगोचरे । सद्यः तदैव । संपतिष्यन्ति संप्राप्स्यन्ति ॥ ८९ ॥

तेषामाविष्कृतजललवे त्वय्युपासन्नवृत्तौ
सीमोद्देशा नयनसुभगाः सामिसंरूढसस्याः ।
सञ्जायेरन्नवपरिकरा मूकपुंस्कोकिलाश्च
नीडारम्भैर्गृहवलिभुजामाकुलग्रामचैत्याः ॥ ९० ॥

तेषामिति ॥ तेषां दशार्णानाम् । आविष्कृतजललवे प्रकटीकृतजलकणयुक्ते । त्वयि भवति । उपासन्नवृत्तौ उपासन्ना वृत्तिर्यस्य तस्मिन् अत्यासन्नवृत्ते सति । सीमोद्देशाः सीम्नां प्रदेशाः । “ग्रमान्त उपशल्यं स्यात्सीमसीमे स्त्रियामुभे” इत्यमरः । नयनसुभगाः नेत्रगोचराः । सामिसंरूढसस्याः ईषत्समुत्पन्नसस्याङ्कुराः । मूकपुंस्कोकिलाः पुमांश्च ते कोकिलाश्च तथोक्ताः । “अवाचि मूकः” इत्यमरः । मूकाः पुंस्कोकिलाः येषां ते तथोक्ताः । वर्षाकाले कोकिलानां मूकभावत्वादित्यर्थः । गृहवलिभुजां गृहकाकानाम् । “वलिभुग्वायसा अपि” इत्यमरः । नीडारम्भैः कुलायप्रारम्भैः । “कुलायो नीडमस्त्रियाम्” इत्यमरः । आकुलग्रामचैत्याः आकुलाः कीर्णाः ग्रामाणां चैत्याः रथ्यावृक्षाः येषु ते तथोक्ताः । “चैत्यमायतने जैनबिंबे चोद्देशपादपे” इति विश्वः । नवपरिकराः नवः परिकरः प्रोक्तरूपः परिवारो येषां ते तथोक्ताः । “नवीनो नूतनो नवः ।” परिकरः । “पर्यङ्कपरिवारयोः” इत्युभयत्राप्यमरः । संजायेरन् संभवेयुः ॥ ९० ॥

भूयस्तेषामुपवनभुवस्तुङ्गशाखाग्रघृष्ट-
व्योमोत्सङ्गैर्निजतरुवरैरात्तशोभाः फलाढ्याः ।
सम्पद्येरन्विविधविहगैराकुला नीडकृद्भिः
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः ॥ ९१ ॥

भूय इति ॥ भूयः पुनः । तेषां दशार्णदेशानाम् । त्वयि भवति ।

आसन्ने समीपगते सति । "समीपे निकटासन्न" इत्यमरः । तुङ्गशाखाग्रघृष्टव्योमोत्सङ्गैः उन्नतशाखाग्रैः घृष्टः व्योमोत्सङ्गो गगनतलं येषां तैः । निजतरुवरैः स्वकीयवृक्षोत्तमैः । "देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये" इत्यमरः । आत्तशोभाः प्राप्तद्युतयः । फलाढ्याः फलभरिताः । उपवनभुवः आरामभूमयः । "आरामः स्यादुपवनम्" इत्यमरः । नीडकृद्भिः नीडं कुर्वन्तीति नीडकृतस्तैः । विविधविहगैः नानापक्षिभिः । "खगे विहङ्गविहगविहङ्गमविहायसः" इत्यमरः । आकुलाः सङ्कीर्णाः । परिणतफलश्यामजम्बूवनान्ताः परिणतैः परिपक्वैः फलैः श्यामानि यानि जम्बूवनानि तैरन्ता रम्याः । "मृताववसिते रम्ये समाप्तावन्ते" इति शब्दार्णवे । सम्पद्येरन भवेयुः ॥ ९१ ॥

> इत्यभ्यर्णे भवति विलसद्विद्युदुद्दामहासे
> मुक्तासारप्रकटितरवे केकिनामुन्मदानाम् ।
> नृत्यारम्भं घटयति मुहुर्नूनमुद्भूतपङ्काः
> सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ ९२ ॥ २३ ॥

इतीति ॥ विलसद्विद्युदुद्दामहासे विलसद्विद्युदुद्दामहासे विलसद्विद्युदेव उद्दामः उत्कटो हासो यस्य तस्मिन् । मुक्तासारप्रकटितरवे मुक्तः पातितः आसारो धारावृष्टिः तेन प्रकटितो रवो ध्वनिर्यस्य तस्मिन् । "आसारो वेगवद्वर्षम्" । "ध्वनिध्वानरवस्वनाः" इत्यप्यमरः । उन्मदानां सन्तुष्टानां । केकिनां मयूराणां । नृत्यारम्भं नर्तनव्यापारम् । "स्यादभ्यादानमुद्घात आरम्भः" इत्यमरः । मुहुः असकृत् । घटयति घटयतीति घटयन् तस्मिन् सम्बन्धं कुर्वति । भवति त्वयि । इति एवंप्रकारेण । अभ्यर्णे समीपगते । दशार्णाः देशाः । उद्भूतपङ्काः उत्पन्नकर्दमाः । "पङ्कोऽस्त्री शादकर्दमौ" इत्यमरः । कतिपयदिनस्थायिहंसाः कतिपयेष्विव दिनेषु स्थायिनो

वर्तनशीलाः हंसा येषां ते तथोक्ताः। "पोटायुवतिस्तोककतिपय" इत्यादिना कतिपयशब्दस्योत्तरत्रापि दिनशब्दस्योत्तरत्वमत्र शास्त्रस्य प्रायिकत्वात्। नूनं सत्यम्। सम्पत्स्यन्ते भविष्यन्ति ॥ ९२ ॥

गत्वा पश्येः पवनविचलत्केतुहस्तैरभीक्ष्णं
दूरादुच्चैर्भवनशिखरैराह्वयन्तीमिव त्वाम्।
सालोदग्रां श्रियमिव भुवो रूपिणीं नाभिभूतां
तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीम् ॥ ९३ ॥

गत्वेति ॥ पवनविचलत्केतुहस्तैः वायुना विचलत्केतव एव हस्ता येषां तैः। "ग्रहभेदे ध्वजे केतुः" इत्यमरः ॥ उच्चैर्भवनशिखरैः उन्नतागारशृङ्गैः। अभीक्ष्णम् अनवरतम्। दूरात् दविष्ठदेशतः। त्वां भवन्तम्। आह्वयन्तीमिव आकारयन्तीमिव। "ह्वेञ् स्पर्धायाम्" "वाचि धातोः" शतृत्यः। "नृदुग्" इति ङी। शप्सात् इति नम्। सालोदग्रां प्राकारोन्नतां। "प्राकारो वरणः सालः" इत्यमरः। रूपिणीं रूपमस्यास्तीति रूपिणी तां। मत्वर्थे इन्। "नृदुग्" इति ङी। भुवः भूमेः। रूपिणीं मूर्तां। श्रियमिव सम्पत्तिमिव। "सम्पत्तिः श्रीश्च लक्ष्मीश्च" इत्यमरः। तेषां दशार्णानाम्। नाभिभूतां नाभिर्भवति स्मेति तथोक्ता ताम् मध्यगतामित्यर्थः। दिक्षु आशासु। प्रथितविदिशालक्षणां प्रथितं प्रसिद्धं विदिशालक्षणं नामधेयं यस्यास्ताम्। "लक्षणं नाम्नि चिह्ने च" इति विश्वः। राजधानीं धीयते स्म धानी राज्ञां धानी तथोक्ता। करणाधारे चानट्। "टिड्ढण् ढे" इति ङी। कृद्योगाच्च षष्ठी। तां प्रधाननगरीम्। "प्रधाननगरी

---

१ केतुहस्तैरित्यत्र रूपकं। २ उत्प्रेक्षालंकारः आह्वयतीमिवेत्यत्र, श्रियमिवेत्यत्रापि च। ३ राजधानीशब्दस्य काकाक्षिगोलकन्यायेन गत्वेति त्वाप्रत्यये 'पश्येः' इत्यत्र च कर्मत्वेनान्वयः।

राज्ञां राजधानीति कथ्यते ” इति शब्दार्णवे । गत्वा प्राप्य । पश्येः अवलोकयेः ॥ ९३ ॥

सौधोत्सङ्गे क्षणमुपनिपत्तृष्ण तूष्णीं निषण्णो
जालोद्गीर्णैः सुरभिततनुर्धूपधूमैर्मनोज्ञैः ।
वारस्त्रीणां निधुवनरतिं प्रेक्षमाणस्त्वमेनां
गत्वा सद्यः फलमपि महत्कामुकत्वस्य लब्धा ॥ ९४ ॥

सौधोत्सङ्ग इति ॥ उपनिपत्तृष्ण उपनिपन्ती तृष्णा यस्यासौ तस्य सम्बोधनम् हे सम्भवमनोरथ । कौतुकार्थालोकनाभिलाषिन्नित्यर्थः । त्वं भवान् । एनां विदेशापुरीम् । गत्वा प्राप्य । सौधोत्सङ्गे राजभवनप्रदेशे । “ सौधोऽस्त्री राजसदनम् ” इत्यमरः । क्षणं क्षणपर्यन्तम् । “ कालाध्वनोर्व्याप्तौ ” इति द्वितीया । तूष्णीं जोषम् । निषण्णः निषीदति स्म निषण्णः उपविष्टः सन् । जालोद्गीर्णैः जालात् गवाक्षात् “ जालं समूह आनायो गवाक्षक्षारकेष्वपि ” इत्यमरः । उद्गीर्णैः निर्गतैः । मनोज्ञैः मनोहरैः । धूपधूमैः यक्षकर्दमधूमैः । सुरभिततनुः परिमलितशरीरः । “ संजातं तारकादिभ्यः ” इति इतस्यः । वारस्त्रीणां गणिकानाम् । “ वारस्त्री गणिका वेश्या ” इत्यमरः । निधुवनरतिं सुरतक्रीडाम् । प्रेक्षमाणः पश्यन् । कामुकत्वस्य विलासित्वस्य । “ विलासी कामुकः कामी स्त्रीपरो रतिलम्पटः । ” इति शब्दार्णवे । महत् फलमपि उच्चैः प्रयोजनमपि । सद्यः तत्काल एव । लब्धा प्राप्स्यसि । “ डुलभिष् प्राप्तौ ” लुट् ॥ ९४ ॥

विश्रान्तिस्ते सुभग विपुला तत्र यातस्य मन्ये
कह्लाराङ्कं सुरभि शिशिरं स्वच्छमुत्फुल्लपद्मम् ।

---

१ निष्ठ्यूतोद्गीर्णवांतादिगौणवृत्तिव्यपाश्रयं ॥ “ अतिसुंदरमन्यत्र ग्राम्यकक्षां विगाहते” इति दंडिन उक्तेर्न ग्राम्यवचनाशङ्का । २ फलमविकलम् ।

वाताकीर्णैः कुवलयदलैर्वासितं दीर्घिकाम्भ-
स्तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यत्र ॥ ९५ ॥

विश्रान्तिरिति ॥ सुभग भो मनोहराङ्ग । यत्र पुर्य्याम् । कह्लाराङ्कं कह्लाराण्येव अङ्कं चिह्नं यस्य तत् । " सौगन्धिकं तु कह्लारं हल्लकं रक्तसन्ध्यकम् । " "उत्सङ्गचिह्नयोरङ्कः" इत्युभयत्राप्यमरः । सुरभि घ्राणतर्पणम् । शिशिरं शीतलम् । " सुषीमः शिशिरो जडः । तुषारः शीतलः शीतो हिमः सप्तान्यलिङ्गकाः " इत्यमरः । स्वच्छं सुष्ठु अच्छं निर्मलम् । "त्रिष्वागाधात्प्रसन्नोऽच्छः" इत्यमरः । उत्फुल्लपद्मम् उत्फुल्लानि विकसितानि पद्मानि यस्मिन् तत् । वाताकीर्णैः मारुताकुलितैः । कुवलयदलैः । " दलं पर्णं छदः पुमान् " इत्यमरः । वासितं परिमलितम् । " भावितं वासितं त्रिपु " इत्यमरः । स्वादु मधुरम् । दीर्घिकाम्भः क्रीडासरःसलिलम् । "वापी तु दीर्घिका" इत्यमरः । तीरोपान्तस्तनितसुभगं कूलसमीपे स्तनितेन गर्जितेन सुभगं मनोहरं यथा भवति तथा । पास्यसि पानं करिष्यसि । तत्र विदिशापुर्य्याम् । यातस्य गतस्य । ते तव । विपुला महती । विश्रान्तिः विश्रामः । स्यादिति शेषः । मन्ये एवमहं जाने ॥ ९५ ॥

पातव्यं ते रसिक सुरसं प्राणयात्रानिमित्तं
तस्यां लीलास्फुरितशफराघट्टनैरात्तपङ्कम् ।
रोधःप्रान्ते विहगकलभैर्बद्धडिण्डीरपिण्डं
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्याः ॥ ९६ ॥ २४ ॥

पातव्यमिति ॥ रसिक भो सरस । तस्यां राजधान्याम् । चलोर्म्याः चला ऊर्मयो वीचयो यस्याः सा तथोक्ता तस्याः । " भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचिः " इत्यमरः । वेत्रवत्याः वेत्रवतीनाम-

१ स्वादु यस्मादित्यपि पाठः । २ चलोर्मीत्यपि पाठः ।

नद्याः। रोधःप्रान्ते तीरनिकटे। लीलास्फुरितशफराघट्टनैः लीलया स्फुरितैः प्रवृद्धैः शफराणां मत्स्यानामाघट्टनैः सङ्घर्षणैः। "शफरोऽनिमिषः स्तिमिः" इति धनञ्जयः। आत्तपङ्कं प्राप्तकर्दमम्। विहगकलभैः पक्षिपोतैः। बद्धडिण्डीरपिण्डं बद्धो रचितः डिण्डीराणां फेनानां पिण्डः यस्य तत्। "डिण्डीरोऽब्धिकफः फेनः" इत्यमरः। सुरसं सु शोभनो रसः स्वादु शृङ्गारादिर्वा यस्य तत्। पयः तोयम्। "पयः क्षीरं पयोऽम्बु च" इत्यमरः। सभ्रूभङ्गं भ्रुवोर्भङ्गेन रचनया सहितम्। मुखमिव आननवत्। ते तव। प्राणयात्रानिमित्तं प्राणरक्षार्थम्। पातव्यं पानार्हं भवतीति शेषः। कामिनामधरास्वादनं सुरतादतिरिच्यत इति तात्पर्यम्॥ ९६॥

पीत्वा तस्यां सलिलममलं जीविकां कृत्य किञ्चि-
न्नीत्वाऽहस्त्वं क्वचिदनुमते हर्म्यपृष्ठे निषण्णः।
दृष्ट्वा दृश्यं विलसितमदो नागराणां दिनान्ते
नीचैराख्यं गिरिमधिवसेस्तत्र विश्रान्तिहेतोः॥ ९७॥

पीत्वेति॥ तस्यां वेत्रवत्याम्। अमलं निर्मलम्। "मलोऽस्त्री पापपङ्कयोः" इत्यमरः। सलिलं जलम्। "सलिलं कमलं जलम्" इत्यमरः। पीत्वा पानं कृत्वा। किञ्चित् ईषत्। जीविकां कृत्य जीवनं कृत्वा। "जीविकोपनिषदौपम्ये" इति तिसञ्ज्ञा। "क्त्वो ल्यप्" इति ल्यादेशः। अनुमते सम्मते। क्वचित् कस्मिंश्चित्। हर्म्यपृष्ठे धनिनामावासपृष्ठभागे। "हर्म्यादि धनिनां वासः" इत्यमरः। निषण्णः उपविष्टः। अहः दिनम्। "दिवाऽहर्दिवसे" इति धनञ्जयः। नीत्वा यापयित्वा। नागराणां नगरे भवाः नागरास्तेषां नागरजनानाम्। दृश्यं द्रष्टुं योग्यम्। अदः एतत्। विलसितं वर्तनम्। दृष्ट्वा प्रेक्ष्य। दिनान्ते सायाह्ने। तत्र विदिशानगरीसमीपे। विश्रामहेतोः विश्रान्तिनिमित्तम्। "विश्रमो घञ्" इति वा दीर्घः। पथ-

श्रमापनयनार्थमित्यर्थः । नीचैराख्यं नीचैरिति आख्या यस्य तम् । गिरं अद्रिम् । त्वं भवान् । अधिवसेः " वसो नूपाध्याङ् " इति आधारे कर्म । गिरौ वसेत्यर्थः ॥ ९७ ॥

त्वं सेवेथाः शिखरिणममुं तां निशां मुक्तशङ्को
विद्युद्दामस्फुरितरुचिमद्दीपिकाद्योतिताशः ।
सिद्धस्त्रीणां रतिपरिमलैर्वासिताधित्यकान्तं
त्वत्सम्पर्कात्पुलकितमिव प्रौढपुष्पैः कदम्बैः ॥ ९८ ॥

त्वमिति ॥ विद्युद्दामस्फुरितरुचिमद्दीपिकाद्योतिताशः स्फुरिता चासौ रुचिश्च तथोक्ता सास्यास्तीति स्फुरितरुचिमती सा चासौ दीपिका च तथोक्ता विद्युतां तडितां दाम माला विद्युद्दामैव स्फुरितरुचिमद्दीपिकेति कर्मधारयः । तयोद्योतिताः प्रकाशिताः आशाः दिशो यस्येति बहुव्रीहिः । मुक्तशङ्कः मुक्ता त्यक्ता शङ्का आशङ्का येनासाविति बहुव्रीहिः । त्वं भवान् । त्वत्सम्पर्कात् भवत्सङ्गमात् । प्रौढपुष्पैः प्रवृद्धकुसुमैः । " प्रवृद्धं प्रौढमेधितम् " इत्यमरः । कदम्बैः नीपवृक्षैः । " नीपप्रियककदम्बास्तु हरिप्रियः " इत्यमरः । पुलकितमिव पुलकानि अस्य सञ्जातानीति पुलकितमिव सञ्जातपुलकवत् । सिद्धस्त्रीणां सुरयोषिताम् । रतिपरिमलैः भोगोचितगन्धद्रव्यवासनाभिः । " विमर्दोत्थे परिमलो गन्धे जनमनोहरे " इत्यमरः । वासिताधित्यकान्तम् अधित्यकायाः पर्वतोर्ध्वभूमेः अन्तोवसानस्तथोक्तः । " भूमिरूर्ध्वमधित्यका " इत्यमरः । " अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेन्तिकेऽन्तके " इति नानार्थमालायाम् । वासितोऽधित्यकान्तो यस्येति बहुव्रीहिः । अमुं शिखरिणम् । नीचैरभिधं भूधरम् । तां निशां रात्रिम् । " निशा निशीथिनी रात्रिः " इत्यमरः । सेवेथाः भजस्व ॥ ९८ ॥

---

1 मेघरूपिणो भवतस्संसर्गात्कदंबानां कुसुमितत्वमिति ध्येयं ।

सोऽसावद्रिर्भवतु नितरां प्रीतये ते समग्र-
ग्रावोपाग्रैर्ग्रहगणमिवोपग्रहीतुं खमुद्यन् ।
भोगोद्रेकं कथयति लतावेश्मकैः सोपहारै-
र्यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणाम् ॥ ९९ ॥

सोसाविति ॥ यः नीचैरभिख्यो गिरिः । पण्यस्त्रीरतिपरिमलोद्गारिभिः पण्यस्त्रियो वेश्याः “ वारस्त्री गणिका वेश्या पण्यस्त्री रूपजीविनी ” इति शब्दार्णवे । तासां रतिपरिमलो गन्धविशेषस्तं “ विमर्दोत्थे परिमलः ” इत्यमरः । उद्गिरन्त्याविर्भवन्तीति रतिपरिमलोद्गारीणि तैः । सोपहारैः पुष्पोपहारादियुतैः । लतावेश्मकैः लतामयानि वेश्मानि तथोक्तानि लतावेश्मान्येव लतावेश्मकानि तैः लतागृहैः । नागराणां नगरजनानाम् । भोगोद्रेकं भोगोत्कटत्वम् । कथयति ब्रवीति । सोऽसावद्रिः स एव नीचैरद्रिः । समग्रग्रावोपाग्रैः सम्पूर्णशैलाग्रभागैः । “ समग्रं सकलं पूर्णम् ” इत्यमरः । ग्रहगणं नवग्रहनिकायम् । उपग्रहीतुं स्वीकरणाय । खं व्योम । उद्यन् उद्गच्छन्निव । ते तव । प्रीतये प्रेम्णे । नितराम् अधिकम् । भवतु अत्युन्नतत्वात् प्रेमकरोऽस्त्विति तात्पर्यम् । अत्रोद्गारिशब्दस्य गौणार्थत्वात् न जुगुप्सावहत्वं प्रत्युत काव्यस्यार्थशोभाकरण एव । तदुक्तं दण्डिना- “ निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यां कक्षां विगाहते ” इति ॥ ९९ ॥

प्रेमामुष्मिंस्तव समुचितं विद्धि शैले शिलाग्रै-
र्व्योमोत्सङ्गं परिमृजति वा पुष्पशय्याचितान्तैः ।
स्रस्तस्रग्भिर्निधुवनविधौ क्रीडतां दम्पतीना-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ १०० ॥ २५ ॥

प्रेमेति ॥ शिलाग्रैः पाषाणाग्रैः । व्योमोत्सङ्गम् आकाशप्रदेशम् ।

१ हेतूत्प्रेक्षेयमतिशयोक्त्युज्जीविता ।

परिमृजति परिमार्ष्टीति परिमृजन् तस्मिन्। "मृजौ शुद्धौ" शतृत्यः। वा अथवा। क्रीडतां विहरताम्। दम्पतीनां स्त्रीपुरुषमिथुनानाम्। "दम्पती जम्पती जायापती" इत्यमरः। निधुवनविधौ सुरतविधाने। "निधुवनं रतम्" इति "विधिर्विधाने दैवे च" इत्यप्यमरः। स्रस्तस्रग्भिः स्रस्ताः शिथिलिताः स्रजो माला येषु तानि स्रस्तस्रञ्जि तैः। "स्रस्तं ध्वस्तं भ्रष्टं स्कन्नं पन्नं च्युतं गलितम्" इत्यमरः। पुष्पशय्याचितान्तैः पुष्पशय्याभिश्चितो निचितोन्तो मध्यप्रदेशो येषां तानीति बहुव्रीहिः। तैः शिलावेश्मभिः गुहाभिः। उद्दामानि उत्कटानि। "गृहभेदत्विट्प्रभावा धामानि" इत्यमरः। यौवनानि यूनां भावान्। प्रथयति प्रथयतीति प्रथयन् तस्मिन् प्रकटयति। अमुष्मिन् शैले। नीचैरगे। तव भवतः। प्रेम स्नेहः। समुचितं सुयोग्यमिवेति। विद्धि त्वं जानीहि। उत्कटयौवनाः कच्चिदनुरक्ता वाराङ्गना विश्रंभव्यवहारकाङ्क्षिण्यो मात्रादिभयात् निशीथसमये विविक्तसमयदेशमाश्रित्य रमत इति बहुलमस्ति प्रसिद्धिः ॥ १०० ॥

अथार्धवेष्टितानि—

रम्योत्सङ्गे शिखरनिपतन्निर्झरारावहृद्ये
पर्यारूढद्रुमपरिगतोपत्यके तत्र शैले।
विश्रान्तः सन्व्रज वननदीतीरजानां निषिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ॥ १०१ ॥

रम्योत्सङ्ग इति ॥ शिखरनिपतन्निर्झरारावहृद्ये शिखरान्निपतन्निति कासः[1]। स चासौ निर्झरश्चेति कर्मधारयः। तस्यारावो ध्वनिरिति तत्पुरुषः। हृदयस्य प्रियो हृद्यः "वश्यपथ्य" इत्यादिना यत्यः। "हृदयस्य हृल्लेखयदण्लासः" इति हृदादेशः। तेन हृद्य इति भासः[2]। तस्मिन्। पर्यारूढद्रुमपरिगतोपत्यके परितः आरूढाः प्रवृद्धास्ते च ते

---

1 कास इति पञ्चमीतत्पुरुषस्य संज्ञा। २ भास इतितृतीयातत्पुरुषस्यसंज्ञा।

द्रुमाश्च कर्मधारयः । तैः परिगता परिवृता उपत्यका उपरिभूमिर्यस्येति बहुव्रीहिः । तस्मिन् । रम्योत्सङ्गे रम्य उत्सङ्गः पार्श्वौ यस्येति बहुव्रीहिः । तस्मिन् । तत्र शैले नीचैरचले । विश्रान्तः सन् अध्वश्रमरहितः सन् । वननदीतीरजाना वने अरण्ये या नद्यः तासां तीरेषु जातानि रूढानि अतिक्रमेणेत्यर्थः । तेषाम् । उद्यानानाम् आरामाणाम् । यूथिकाजालकानि मागधीमुकुलानि । "अथ मागधी । गणिका यूथिकाम्बष्ठा" इत्यमरः । "कोरकजालककलिकाकुड्मलमुकुलानि तुल्यानि" इति हलायुधः । नवजलकणैः नूतनजलबिन्दुभिः । निषिञ्चन् आर्द्रीकुर्वन् । व्रज गच्छ ॥ १०१ ॥

अध्यारूढे तपति तपने पुष्पगुल्मावकीर्णां
तस्यास्तीरक्षितिमतिपतेर्नातिवेगाद्दयालुः ॥
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात्क्षणपरिचितः पुष्पलावीमुखानाम् ॥१०२॥२६॥

अध्यारूढ इति ॥ अध्यारूढे उपर्यारूढे । तपने सूर्ये । तपतीति तपन् तस्मिन् । इति शतृप्रत्ययः । गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानाम् गण्डयोः कपोलयोः स्वेदस्यापनयनेन प्रमार्जनेन या रुजा पीडा तया क्लान्तानि म्लानानि कर्णोत्पलानि येषां तेषाम् । पुष्पलावीमुखानां पुष्पाणि लुनन्तीति पुष्पलाव्यः पुष्पावचायिकाः स्त्रियः "कर्मणोऽण्" "टिड्ढाणञ्" इत्यादिना ङी । तासां मुखानि तेषाम् । छायादानात् अनातपस्य दानात् । कान्तिदानाच्चेति ध्वन्यते । "छाया त्वनातपे कान्तौ" इत्यमरः । कामुकदर्शनात्कामिनां मुखविकासो भवतीति भावः । क्षणपरिचितः क्षणं संसृष्टः । दयालुः कारुण्यशीलः सन् । "निद्रातन्द्रा-" इत्यादिना दयाशब्दादालुच् । तस्याः नद्याः । नद्या इत्येव वा पाठः । पुष्पगुल्मावकीर्णां पुष्पयुता गुल्मास्तैः लतासङ्घातैः अवकीर्णां विकीर्णाम् । तीरक्षितिं तटभुवम् । नातिवेगात् मन्दगमनात् । अतिपतेः गच्छ ॥ १०२ ॥

वक्रोऽप्यध्वा जगति स मतो यत्र लाभोऽस्त्यपूर्वो
यातुं शक्यं ननु वनपथात्कासिकाग्रार्जुनान्तात् ।
वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ॥ १०३ ॥

वक्र इति । यत्र मार्गे । अपूर्वः अलब्धपूर्वः । लाभः प्राप्तिः । अस्ति वर्तते । सः अध्वा मार्गः । वक्रोपि आर्जवरहितोपि । जगति लोके । मतः अङ्गीकृतो भवति । कासिकाग्रार्जुनान्तात् कासिका एव अग्रम् आदिर्यस्य कासिकाग्रः अर्जुन एव अन्तो यस्य अर्जुनान्तः कासिकाग्रश्चासावर्जुनान्तश्च तथोक्तस्तस्मात् मार्गविशेषात् । वनपथात् वनस्य पन्थाः वनपथस्तस्मात् "ऋक्पूपथ्यपोदित्यत्समासान्तः" कान्तारमार्गात् । यातुं गन्तुम् । ननु अवश्यम् । अलं भवतीति शेषः । उत्तराशां कौबेरीदिशम् । प्रस्थितस्य गन्तुमुद्यतस्य । भवतः तव । पन्थाः उज्जयिनीमार्गः । वक्रः अनृजुः । यदपि यद्यपि । भवति चेदपीत्यर्थः । उज्जयिन्याः विशालानगरस्य । "विशालोज्जयिनी समे" इत्यमरः । सौधोत्सङ्गप्रणयविमुखः सौधानामुत्सङ्गेषूपरिभागेषु प्रणयः परिचयः तस्य विमुखः पराङ्मुखः । मा स्म भूः न भवेत्यर्थः । "लट् च स्मे" इति धातोर्मास्मयोगेन लुङ् । "लङ् लुङ् च" इत्यादिना माङीत्यडागमनिषेधः । अलकां प्रस्थितस्य उज्जयिनीगमने मार्गो वक्रोपि उज्जयिन्यां प्रेक्षाकौतुकसम्भवादवश्यं गन्तव्यमेवेति भावः ॥ १०३ ॥

जैत्रैर्बाणैः कुसुमधनुषो दूरपातैरमोघै-
कै. र्मर्माविद्भिर्दृढपरिचितभ्रूधनुर्यष्टिमुक्तैः ।
तत्पुरु
" हृदय ममस्फुरितचकितैर्यत्र पौराङ्गनानां
न् । पर्याप्तमपि न रमसे लोचनैर्वञ्चितः स्याः ॥१०४॥२७॥

---

१ कास इति पञ्चमीतत्पु

जैत्रैरिति ॥ यत्र उज्जयिन्याम् । कुसुमधनुषः कुसुमान्येव धनुर्यस्य तस्य मन्मथस्य । " पुष्पधन्वा रतिपतिः " इत्यमरः । जैत्रैः जयनशीलैर्बाणैः । दूरपातैः दूरे पातः पतनं येषां तैः । अमोघैः न मोघाः अमोघास्तैः । " मोघं निरर्थकम् " इत्यमरः । सफलैरित्यर्थः । मर्माविद्भिः मर्मस्थानम् आसमन्ताद्भेदयद्भिः । दृढपरिचितभ्रूधनुर्यष्टिमुक्तैः दृढं गाढं परिचितमभ्यस्तं भ्रुवावेव धनुः दृढपरिचितं च तत् भ्रूधनुश्च तथोक्तं । तदेव वा यष्टिर्दण्डस्तस्या मुक्ताः तैः मदनावस्थोद्रेककरैरित्यर्थः । विद्युद्दामस्फुरितचकितैः विद्युद्दाम्नो विद्युन्मालायाः स्फुरितं स्फुरणं तेन चकितैः कम्पितैः । लोलापाङ्गैः लोलश्चञ्चलोऽपाङ्गो येषां तैः " लोलश्चलसतृष्णयोः " " अपाङ्गो नेत्रयोरन्ते " इत्युभयत्राप्यमरः । पौराङ्गनानां पुरे भवाः पौराः पौराणामङ्गनास्तथोक्ताः । पौराश्च ताः अङ्गनाश्चेति वा तासां । लोचनैः नयनैः । यदि न रमसे न क्रीडयसि । चेत्तर्हि । वञ्चितः प्रतारितः । स्याः भवेः । तदपाङ्गनिरीक्षणाभावे जन्मवैफल्यं भवेदिति तात्पर्यम् ॥ १०४ ॥

इदानीमुज्जयिनीं गच्छतस्तस्यान्तरे निर्विन्ध्यासरितः सम्बन्धमाह—

स्रोतः पश्यन्व्रज पथि लुठन्मीनलोलायताक्ष्या
निर्विन्ध्यायाः किमपिकिमपि व्यञ्जिताकूतवृत्तिः ।
वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्तनाभेः ॥ १०५ ॥

स्रोत इति ॥ पथि विशालापुरीमार्गे । लुठन्मीनलोलायताक्ष्याः लुठन्तः स्फुरन्तः मीना एव लोले चञ्चले आयते दीर्घे अक्षिणी यस्याः सा तस्याः । वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः वीचिक्षोभेण तरङ्गचलनेन जातं स्तनितं घोषणं विहगानां पक्षिणां श्रेणिः पङ्क्तिः " श्रेणी रेखास्तु राजयः " इत्यमरः । वीचिक्षोभस्तनितेन सहिता विहगश्रेणिस्तथोक्ता सैव काञ्चीगुणो रसनादाम

यस्यास्तस्याः । " स्त्रीकट्या मेखला काञ्ची सप्तकी रसना तथा " इत्यमरः । स्खलितसुभगं गमनस्खलनेन सुभगं यथा तथा । संसर्पन्त्याः गच्छन्त्याः । दर्शितावर्तनाभेः दर्शितः आवर्तोंभोभ्रमः स एव नाभिर्यस्याः सा " स्यादावर्तोंभसां भ्रमः " इत्यमरः । निर्विन्ध्यायाः विन्ध्यादचलात् निष्कान्ता निर्विन्ध्या नाम नदी । " गतादिषु प्रादयः " इति समासः । तस्याः स्रोतः । " स्रोतोम्बुसरणं स्वतः " इत्यमरः । प्रवाहमित्यर्थः । किमपिकिमपि वीप्सायां द्विः । यत्किमपि । व्यञ्जिताकूतवृत्तिः व्यञ्जिता प्रकटिता आकूतस्य अभिप्रायस्य वृत्तिर्वर्त्तनं यस्य तथोक्तः सन् । " आकूतं स्यादभिप्रायः " इति व्यालिः । पश्यन् अवलोकयन् । व्रज गच्छ ॥ १०५ ॥

त्वय्यौत्सुक्यं स्फुटमिव विनाप्यक्षरैर्व्यञ्जयन्त्याः
किञ्चिल्लज्जावलितमिव संदर्शिताप्तागमायाः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ १०६ ॥ २८ ॥

त्वयीति ॥ पथि उज्जयिनीमार्गे । त्वयि भवति । औत्सुक्यं लाम्पट्यम् । अक्षरैः वर्णैः । विनापि उच्चारणमन्तरेणापीत्यर्थः । "पृथग्विनान्तरेणर्त्ते हिरुङ् नाना च वर्जने " इत्यमरः । स्फुटं व्यक्तम् । " स्फुटं प्रव्यक्तमुल्बणम् " इत्यमरः । व्यञ्जयन्त्या इव व्यक्तीकुर्वन्त्या इव । किञ्चिल्लज्जावलितं किञ्चिदीषत् लज्जया ह्रिया आवलितं वक्रतनुत्वं यथा भवति तथा । संदर्शिताप्तागमायाः संदर्शितः व्यञ्जितः आप्तस्य प्रियस्य आगमः आगमनं ययेति बहुव्रीहिः । तस्या इव । एवं भासमानायाः निर्विन्ध्यायाः वनिताया इति ध्वन्यते । सन्निपत्य समीपं गत्वा । रसाभ्यन्तरः रसो जलं शृङ्गारादिर्वा अभ्यन्तरे यस्य

१ 'आकूतं तदत्र भावस्तोऽप्यभीष्टो विभाव्यते' इति लक्षणात् पेयत्वेन स्वाभिमतप्रकाशकहृद्विकारो वाकूतं ।

सः। "शृङ्गारादौ जले वीर्ये सुवर्णे विषशुक्लयोः। आस्वादे रसनं प्राहुः" इति शब्दार्णवे। भव सम्यक् तद्रसमनुभवेत्यर्थः। अत्रार्थान्तरन्यासमाह। स्त्रीणां प्रियेषु वल्लभेषु। विभ्रमो विलासः। "स्त्रीणां विलासविव्वोकविभ्रमाललितम्" इत्यमरः। स एवाद्यमादिमम्। प्रणयवचनं प्रियवाक्यम्। हि स्फुटम्। स्यादिति निर्देशः। विभ्रमैरेव रतिप्रकाशनं न तु वचनतः। विभ्रमश्चात्र नाभिसन्दर्शनादिरेवेति तात्पर्यम्॥ १०६॥

हंसश्रेणीकलविरुतिभिस्त्वामिवोपाह्वयन्ती
धृष्टा मार्गे शिथिलवसने वाङ्गना दृश्यते ते।
वेणीभूतप्रतनुसलिला तामतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः॥ १०७॥

हंसश्रेणीति॥ तां निर्विन्ध्यानदीम्। अतीतस्य अतिक्रान्तस्य। ते तव। मार्गे पथि। तटरुहतरुभ्रंशिभिः तटयोरुहन्तीति तटरुहाः "ज्ञाकृगृप्रिगुपान्त्यात्कः" इति कप्रत्ययः। तीरद्वयोद्भवास्तरवः तेभ्यः भ्रंशंतीत्येवंशीलानि भ्रंशीनि तैः पतनशीलैः। जीर्णपर्णैः शुष्कदलैः। पाण्डुच्छाया पाण्डुवर्णा विरहावस्थयेति ध्वन्यते। वेणीभूतप्रतनुसलिला प्रागवेणी इदानीं वेणी भवति स्मेति तथोक्तं वेण्याकारं चलितप्रवाहं प्रतनु प्रकर्षेण स्तोकं सलिलं यस्याः सा तथोक्ता। सिन्धुः सिन्धुनाम नदी। "नदे सिन्धुर्देशभेदे" इति वैजयन्ती। शिथिलवसना विश्लिष्टवस्त्रा। धृष्टा निर्लज्जेति यावत्। अङ्गनेव वनितावत्। हंसश्रेणीकलविरुतिभिः हंसानां श्रेण्याः राजेः कलाः "कलो मन्द्रस्तु गम्भीरे" इत्यमरः। विरुतयः शब्दास्ताभिः। त्वां भवन्तम्। उपाह्वयंतीव समीपमाकारयन्तीव। दृश्यते लक्ष्यते। अत्र स्वल्पजलत्वात् शिथिलवसनत्वमुत्प्रेक्ष्यते इति तात्पर्य्यम् १०७

---

१ सलिलासावतीतस्येत्यपि पाठः। २ अभूततद्भावे च्विः "च्वौ" इति दीर्घः

क्षामापाण्डुः प्रतनुसलिला वेणिकां धारयन्ती
हंसस्वानैरिव विदधती प्रार्थनाचाटुमेषा ।
सौभाग्यं ते सुभगविरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥१०८॥२९॥

क्षामेति ॥ हे सुभग मनोरमाङ्ग । क्षामा कृशाङ्गी । पाण्डुः पाण्डुरवर्णा । "हरिणः पाण्डुरः पाण्डुः" इत्यमरः । प्रतनुसलिला स्तोकतोया । वेणिकां वेण्याकारं धारयन्तीति वेणीकृतकेशपाशां वा । "वेणी च वेणीबन्धे जलस्रुतौ" इति वैजयन्ती । धारयन्ती हंसस्वानैः मन्दसानरवैः । प्रार्थनाचाटुं प्रार्थनाप्रियवचनम् । "अली चाटु चटु श्लाघा प्रेम्णा" इत्यमरः । विदधतीव विदधती । शतृत्यः । "नृदुग्" इति ङी । "अच्छो शतुः" इति नम् । कुर्वतीव विरहावस्थया यह्लकदशतया । "वियोगो मदनावस्था विरहो यह्लकं विदुः" इति धनञ्जयः । "दशावस्थानेकविधा" इत्यमरः । ते तव । सौभाग्यं सुभगत्वम् । "हृद्भगसिन्धोः" इति उभयपदस्यारैच् । व्यञ्जयन्ती प्रकाशयन्ती । एष सिन्धुः कामिनीति ध्वन्यते । येन विधिना येन विधानेन । "विधिर्विधाने दैवेपि" इत्यमरः । कार्श्यम् कृशत्वम् । त्यजति जहाति । सः विधिः । त्वयैव भवतैव । उपपाद्यः कर्तव्य इत्यर्थः । इयं पञ्चम्यवस्था स च विधिरेकत्र वृष्टिरन्यत्र सम्भोगः । तत्कार्श्यस्य तदभावनिबन्धनत्वादिति भावः ॥ १०८ ॥

सत्यप्येवं पथि बहुविधे संविधानानुपङ्गे
मुख्यस्वार्थप्रतिहतिभयादाशु गत्वाध्वशेषम् ।
प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामुपसर पुरीं श्रीविशालां विशालाम् ॥ १०९ ॥

१ 'दृग्मनस्संगसंकल्पा जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्छान्ता इत्यनंगदशा दश । २ मनुसरेत्यपि पाठः ।

सतीति ॥ पथि मार्गे । बहुविधे अनेकप्रकारके । एवं कथितरीत्या । संविधानानुषङ्गे अनुषञ्जनमनुषङ्गः सम्पर्कः संविधानस्य कार्यान्तरस्य अनुषङ्गस्तस्मिन् । सत्यपि तथापि । मुख्यस्वार्थप्रतिहतिभयात् प्रधानभूतस्वप्रयोजनभङ्गभीतेः । "अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः । अध्वशेषम् अवशिष्टमार्गम् । आशु शीघ्रम् । गत्वा । उदयनकथाकोविदग्रामवृद्धान् विन्दतीति विदाः "ज्ञाकृगृप्रीगुपान्त्यात्कः" इति कप्रत्ययः । ओकसो वेद्यस्थानस्य विदाः कोविदाः "पृषोदरादित्वादोकारो लुप्तः साधुः ।" उदयनस्य वत्सराजस्य कथानां वासवदत्तापहरणाद्युपाख्यानानां कोविदाः परिज्ञानिनः ग्रामेषु ये वृद्धाः दीर्घवयस्काः तथोक्ताः उदयनकथाकोविदाः ग्रामवृद्धाः येषु तान् । अवन्तीन् अवन्तीनामजनपदान् । प्राप्य गत्वा । पूर्वोद्दिष्टां प्रागुक्ताम् । श्रीविशालां सम्पद्विशालाम् । विशालां उज्जयिनीं पुरीम् । "विशालोज्जयिनी समा" इत्यभिधानात् । उपसर व्रज ॥ १०९ ॥

व्यावर्ण्यालं भुवनमहितां तां पुरीमुत्तमर्द्धि
लक्ष्म्याः शश्वन्निवसनभुवं सम्पदामेकसूतिम् ।
स्वल्पीभूते सुचरितफले स्वर्गिणां गांगतानां
शेषैः पुण्यैः कृतमिव[1] दिवः कान्तिमत्खण्डमेकम् ॥ ११० ॥ २० ॥

व्यावर्ण्येति ॥ स्वर्गिणां देवानाम् । सुचरितफले सच्चरितफले स्वर्गोपभोगलक्षणे । स्वल्पीभूते अल्पे सतीत्यर्थः । गां गतानाम् इलामितानाम् । पुनरपि भूलोकभाजामित्यर्थः । "गौरिला कुम्भिनी क्षमा" इत्यमरः । शेषैः स्वर्गोपभोगावशिष्टैः । पुण्यैः सुकृतैः । कृतं विहितम् । कान्तिमत् कान्तिरस्यास्तीति कान्तिमत् सारभूतमित्यर्थः । एकं मुख्यम् । "एके मुख्यान्यकेवलाः" इत्य-

1 हृतमिव दिवं इति पाठान्तरम् ।

मरः । दिवः स्वर्गस्य खण्डमिव भागमिवेत्युत्प्रेक्षा । प्रतिभासमाना-मिति शेषः । भुवनमहितां लोकपूजिताम् । उत्तमर्द्धिम् उत्तमा ऋद्धि-रैश्वर्यं यस्यास्ताम् । लक्ष्म्याः रमायाः । शश्वन्निवसनभुवम् अनवरत-निवासभूमिम् । सम्पदां सम्पत्तीनाम् । एकसूतिं मुख्यप्रसवस्थानम् । तां पुरीम् विशालाख्यनगरीम् । व्यावर्ण्य वर्णयित्वा । अलं पर्याप्तम् । अवाग्गोचरमहिमत्वात् निःशेषं वर्णयितुं न शक्येत्यर्थः ॥ ११० ॥

यस्यामुच्चैरुपवनतरून्नामयन्मातरिश्वा
वीचिक्षोभादधिकशिशिरः सञ्चरत्यप्कणौघैः ।
दीर्घीकुर्वन्पटुमदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ॥ १११ ॥

यस्यामिति ॥ यस्यां पुर्याम् । उच्चैः उदग्रान् । उपवनतरून् आरामद्रुमान् । मानयन् संश्लेषं वितन्वन् । आनमन्निति इति पाठे समंतात्संपतन् उच्चैर्नामयन् प्रह्वीकुर्वन् । वीचिक्षोभात् तरङ्गकम्प-नात् । अधिकशिशिरः अतीवशीतलः । सारसानां पक्षिविशेषाणाम् । "सारसी मैथुना कामी गोमी पुष्कहयः" इति यादवः । अथवा सारसानां हंसानाम् । "चक्रसारसयोर्हंसः" इति शब्दार्णवे । पटुमदकलं पटु प्रस्फुटं मदेनाव्यक्तमधुरम् । "ध्वनौ तु मधुरास्फुटे कलः" इत्यमरः । अप्कणौघैः जलबिन्दुनिचयैः । दीर्घीकुर्वन् सम्भावयन् । प्रत्यूषेषु प्रभातेषु । "प्रत्यूषोऽहर्मुखम्" इत्यमरः । स्फुटितकमलामोदमैत्रीकषायः स्फुटितानां विकसितानां कमलानाम् आमोदेन परिमलेन मैत्र्या संसर्गेण कषायः सुरभिः । "रागद्रव्ये कषायोऽस्त्री निर्यासे रसे" इति यादवः । "मातरिश्वा सदागतिः" इत्यमरः । सञ्चरति विहरति ॥ १११ ॥

कल्लोलान्तर्वलनशिशिरः शीकरासारवाही
धूतोद्यानो मदमधुलिहां व्यञ्जयन्सिञ्जितानि ।

यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥ ११२ ॥ ३१ ॥

कल्लोलान्तरिति ॥ यत्र पुर्य्याम् । कल्लोलान्तर्वलनशिशिरः तरङ्गमध्ये वलनेन भ्रमणेन शिशिरः शीतलः । शीकरासारवाही शीकराणामासारं वेगवद्वर्षं वहतीत्येवं शीलस्तथोक्तः । धूतोद्यानः कम्पितोद्यानवनः । मदमधुलिहां मत्तमधुकराणाम् । सिञ्जितानि अव्यक्तध्वनीन् । व्यञ्जयन् प्रकाशयन् । शिप्रावातः शिप्रानाम तत्पुरि काचित् समीपगता नदी तस्याः वातः । प्रार्थनाचाटुकारः प्रार्थना सुरतयाचना तत्र चाटूनि प्रियवचनानि करोतीति तथोक्तः । पुनः सुरतार्थं प्रियवचनयोजक इत्यर्थः । "कर्मणोऽण्" इत्यण् त्यः । प्रियतम इव वल्लभ इव । स्त्रीणाम् अङ्गनानाम् । अङ्गानुकूलः शरीरस्य सुखस्पर्शः । अन्यत्र गाढालिङ्गनस्पर्शसुखप्रद इत्यर्थः । सुरतग्लानिं प्राक्तननिधुवनखेदम् । हरति नुदति ॥ ११२ ॥

तीक्ष्णस्यारेस्स किल कलहे युद्धशौण्डो मुरुण्डः
प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञो
हासालापैरिति रमयति स्त्रीजनो यत्र बालान् ॥ ११३ ॥

तीक्ष्णस्येति ॥ अत्र दृश्यमानप्रदेशे । युद्धशौण्डः युद्धे मत्तः । "मत्ते शौण्डोत्कटक्षीवाः" इत्यमरः । मुरुण्डः सः वत्सराजः । 'वंशराजः' इत्यपि पाठान्तरम् । उदयनराज इत्यर्थः । कलहे रणे । प्रद्योतस्य प्रद्योतनाम्नः उज्जयिनीपतेः । तीक्ष्णस्य क्रूरस्य । अरेः शत्रोः । प्रियदुहितरं वासवदत्ताभिधां प्रियपुत्रीम् । जह्रे किल जहार किल । अत्र एतत्प्रदेशे । तस्यैव राज्ञः वत्सराजस्य । हैमं सुवर्ण-

१ नरेन्द्र इति पाठान्तरं ।

मयम् । "हेमादिभ्योऽञ्" इति अञ् त्यः । तालद्रुमवनं तालवृक्षारण्यम् । अभूत् अभवत् । इति एवमुपाख्यानेन । यत्र उज्जयिनी नगर्य्याम् । स्त्रीजनः । वालान् अर्भकान् । "वालस्तु स्यान्माणवकः" इत्यमरः । हासालापैः हास्यवचनैः । रमयति क्रीडयति ॥ ११३ ॥

शैलं शैलप्रतिमवपुषा पीडयन्नुन्मदिष्णू
न्निघ्नन्व्यालान्कुपितसमवर्तीव मेघं मरुद्वत् ।
अत्रोद्भ्रान्तः किल नलगिरिस्तम्भमुत्पाट्य दर्पा
दित्यागन्तून्रमयति जनो यत्र वन्धूनभिज्ञः ॥ ११४ ॥ ३२॥

शैलमिति ॥ अत्र स्थले । शैलप्रतिमवपुषा क्ष्माभृत्सदृशशरीरेण । वलवद्देहेनेत्यर्थः । शैलं गिरिम् । पीडयन् मर्दयन् । उन्मदिष्णून् उन्मदितुमिच्छव उन्मदिष्णवस्तान् । अतिमत्तानित्यर्थः । "उन्मदिष्णुस्तून्मदिता" इत्यमरः । व्यालान् दुष्टमृगान् । "व्यालः सर्पे दुष्टगजे श्वापदे ना शठे त्रिषु" इति नानार्थरत्नमालायाम् । कुपितसमवर्तीव कुपितान्तकवत् । "समवर्ती परेतराट्" इत्यमरः । निघ्नन् निर्हिंसन् । मेघं वारिवाहम् । मरुद्वत् वायुरिव नलगिरिस्तंभं नलगिरिनामशिलास्तंभं । दर्पात् वलवत्त्वाहंकारात् । उत्पाट्य आमूलादुद्धृत्य । उद्भ्रांतः किल उद्भ्रमति स्म किल । इति इत्थंभूताभिरुदयनकथाभिरिति शेषः । यत्र विशालापुर्य्याम् । अभिज्ञः कथाकोविदः । जनो लोकः । आगन्तून् आगम्यते हठादनेनागन्तुः । "स्यादावेशिक आगन्तुः" इत्यमरः । देशान्तरादागतान् । वन्धून् वान्धवान् । रमयति विनोदयति ॥ ११४ ॥

यस्यां विभ्रत्यवनिपपथा रत्नराशीनुदग्रान्
शूर्पोन्मेयाञ्जलधय इवापीततोया युगान्ते ।
हारांस्तारांस्तरलघुटिकान्कोटिशः शङ्खशुक्तीः
शष्पश्यामान्मरकतमणीनुन्मयूखप्ररोहान् ॥ ११५ ॥

यस्यामिति ॥ यस्याम् उज्जयिन्याम् । अवनिपपथाः राजमार्गाः । समासत्वाट्टच्पूः पथ्यपोदित्यदन्तत्वम् । युगान्ते कालावसाने । " यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिपु " इत्यमरः । पीततोयाः पीतं तोयं येपां ते शुष्कजला इत्यर्थः । जलधयः जलानि धीयन्ते येष्विति जलधयः समुद्राः । उदग्रान् उच्छ्रितान् । " उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे " इत्यमरः । शूर्पोन्मेयान् शूर्पैः प्रस्फोटनैः उन्मातुं योग्याः उन्मेयास्तान् प्रमाणार्हान् । " प्रस्फोटनं शूर्पमस्त्री " इत्यमरः । एकादिगणनया सङ्ख्यातुमशक्यानित्यर्थः । रत्नराशीन् मणिपुञ्जान् । " पुञ्जराशी तूत्करः " इत्यमरः । तारान् शुद्धान् । " तारो मुक्तादिसंशुद्धौ तरले शुद्धमौक्तिके " इति विश्वः । तरलघुटिकान् तरला घुटिका येपां तान् मध्यमणिभूतमहारत्नयुतान् । "तरलो हारमध्यगः" इत्यमरः । "पिण्डे मणौ महारत्ने घुटिकाबद्धवारणे " इति शब्दार्णवे । हारान् मुक्तावलीन् । कोटिशः अनेकशः । " कोटिः प्रकर्पचापाग्रसङ्ख्यापक्षान्तरेपु " इति भास्करः । शङ्खशुक्तीः शङ्खाश्च शुक्तयश्च तथोक्तास्ताः । उन्मयूखप्ररोहान् उद्गतकिरणाङ्कुरान् । शष्पश्यामान् शष्पवच्छ्यामवर्णान् । " शष्पं बालतृणं घासः " इत्यमरः । बिभ्रति धारयन्ति ॥ ११५ ॥

भूयो नानाभरणरचनायोग्यरत्नप्रवेकान्
ज्योतिर्लेखारचितरुचिमच्छक्रचापानुकारान् ।
दृष्ट्वा यस्यां विपणिरचितान्विद्रुमाणां च भङ्गान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेपाः ॥ ११६ ॥ ३२ ॥

भूय इति ॥ यस्यां विशालायाम् । भूयः पुनः । विपणिरचितान् विपणिपु पण्यवीथिकासु रचितान् प्रसारितान् । " विपणिः पण्यवीथिका " इत्यमरः । ज्योतिर्लेखारचितरुचिमच्छक्रचापानुकारान् ज्योतिर्लेखारचितं च तत् शक्रचापं च तथोक्तं तदनुकुर्वन्तीति तथो-

क्कास्तान् । "ज्योतिर्भिद्योतदृष्टिषु" इत्यमरः । नानाभरणरचनायोग्यरत्नप्रवेकान् नानाभरणानां विविधालङ्काराणां रचनाया निर्माणस्य योग्यानि तानि च तानि रत्नानि च तेषां प्रवेका उत्तमास्तान्। "प्रवेकानुत्तमोत्तमाः" इत्यमरः। विद्रुमाणां प्रवालानाम् । "अथ विद्रुमः पुंसि प्रवालं पुंनपुंसकम्" इत्यमरः। भङ्गांश्च खण्डानपि। दृष्ट्वा प्रेक्ष्य । तोयमात्रावशेषाः तोयमात्रेण अवशेषाः सहिताः । सलिलनिधयः समुद्राः । संलक्ष्यन्ते जनैरुपमीयन्ते रत्नसम्पद्भिः रत्नाकरादप्यतिरिच्यते इति भावः ॥ ११६ ॥

विश्रम्योच्चैर्वलभिषु पुरीं प्राप्य तामुत्तमार्द्धिं
स्वर्गावासप्रणयमुररीकृत्य सौधैस्तथाऽस्याः ।
जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-
र्वन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्तोपहारः ॥ ११७ ॥

विश्रम्येति ॥ उत्तमार्द्धिम् उत्तमा ऋद्धिर्यस्यास्तां प्रवृद्धसम्पत्तिम्। तां पुरीम् विशालाम्। प्राप्य गत्वा । वलभिषु भवनाच्छादनेषु। "आच्छादनं स्याद्वलभिर्गृहाणाम्" इति हलायुधः। उच्चैः परम्। विश्रम्य मार्गश्रममपनीय। सौधैः राजसदनैः। "सौधोऽस्त्री राजसदनम्" इत्यमरः। स्वर्गावासप्रणयं स्वर्गनिलयवत्प्रमोदम्। उररीकृत्य अङ्गीकृत्य। "ऊरर्यूरी चोररी च विस्तारेङ्गीकृते त्रयम्" इत्यमरः। तथा तद्वत्। जालोद्गीर्णैः गवाक्षमार्गनिर्गतैः । "जालं गवाक्षमानाये जालके च भटागणे" इति यादवः। केशसंस्कारधूपैः युवतिकेशवासनाप्रयुक्तधूपधूमैः। उपचितवपुः सञ्चितशरीरः। "निदिग्धोपचिते" इत्यमरः। भवनशिखिभिः गृहमयूरैः। "शिखावलः शिखी केकी" इत्यमरः। र्वन्धुप्रीत्या वन्धोः बन्धुरिति वा प्रीत्या बन्धुप्रीत्या। दत्तनृत्तोपहारः दत्तो नृत्तमेव उपहारो उपायनं

---

१ शुक्लापाङ्गसन्तोषकरत्वान्मेघस्य वन्धुत्वं युक्तं ।

यस्मै तथोक्तः । " उपायनमुपग्राह्यमुपहारस्तथोपदा " इत्यमरः । स्याः भवेः ॥ ११७ ॥

स्वःसौधेषु प्रणयमचिरात्संहरिष्यस्यवश्यं
मन्द्रातोद्यध्वनिषु सततारब्धसङ्गीतकेषु ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखिन्नान्तरात्मा
नीत्वा खेदं ललितवनितापादरागाङ्कितेषु ॥ ११८ ॥ ३४ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचितमेघदूतवेष्टितवेष्टिते पार्श्वाभ्युदये भगवत्कैवल्यवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

स्वःसौधेष्विति ॥ अस्याः उज्जयिन्याः । मन्द्रातोद्यध्वनिषु मन्द्रो गम्भीरः आतोद्यानां ध्वनिः शब्दो येषु तेषु । सततारब्धसङ्गीतकेषु सततमारब्धं सङ्गीतं येषु तेषु । कुसुमसुरभिषु सुमनःसुगन्धिषु । ललितवनितापादरागाङ्कितेषु ललितवनिताः सुन्दरस्त्रियः " ललितं सुन्दरम् " इति शब्दार्णवे । तासां पादरागेण लाक्षारसेन अङ्कितेषु चिह्नितेषु सौधेषु । अध्वखिन्नान्तरात्मा अध्वना मार्गेण खिन्नः अन्तरात्मा यस्य सः तथोक्तस्त्वम् । खेदं श्रमम् । नीत्वा अपनीय । स्वःसौधेषु स्वर्गहर्म्येषु । प्रणयं स्नेहम् । अचिरात् शीघ्रात् । अवश्यं निश्चयेन । संहरिष्यसि अपहरिष्यसि । स्वर्गसौधेभ्योपि विशालाहर्म्याणि परमोत्कृष्टानीति तात्पर्यम् ॥ ११८ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचितमेघदूतवेष्टितवेष्टिते पार्श्वाभ्युदये तद्व्याख्यायां च सुबोधिकाख्यायां भगवत्कैवल्यवर्णनं नाम प्रथमः सर्गः ॥ १ ॥

---

१ अध्वखेदं नयेथा इत्यपि पाठः । २ लक्ष्मीं पश्यन् इत्यादयोऽपि पाठाः ।

# अथ द्वितीयः सर्गः ।

इतः पादवेष्टितानि—

विश्रम्याथ क्षणमिव भवान्पर्यटेत्संदिदृक्षुः
शोभां तस्याः शतमखपुरीं ह्रेपयन्त्याः स्वभूत्या ।
स्निग्धश्यामं वपुरुपवहन्नागराणां फणाभृ-
द्भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः ॥ १ ॥

विश्रम्येति ॥ अथ उज्जयिनीगमनानन्तरे । भवान् त्वम् । क्षणमिव अल्पकालमिव । इवशब्दो वाक्याऽलङ्कारे । विश्रम्य श्रममपनीय । स्निग्धश्यामं मसृणश्यामलम् । वपुः गात्रम् । उपवहन् स्वीकुर्वन् । नागराणां नगरजनानाम् । गणैः समूहैः । "समवायश्चयो गणः" इत्यमरः । फणाभृद्भर्तुः फणां बिभ्रति ते फणाभृतस्तेषां भर्तुर्नाथस्य । कण्ठच्छविः कण्ठस्य गलस्य छविः कान्तिः । "भाश्छविद्युतिदीप्तयः" इत्यमरः । इति एवम् अभिप्रायेण । सादरम् । वीक्ष्यमाणः दृश्यमानः सन् । शतमखपुरीं शतमखस्य पुरीं नगरीममरावतीम् । "नगरी त्वमरावती" इत्यमरः । स्वभूत्या निजसम्पदा । भूतिर्भसितसम्पदि" इत्यमरः । ह्रेपयन्त्याः विडम्बयन्त्याः । तस्याः विशालायाः । शोभां कान्तिम् । संदिदृक्षुः संद्रष्टुमिच्छुः । पर्यटेत् परितः सञ्चरेत् । भवच्छब्दप्रयोगात्त्वं विहरेत्यर्थः ॥ १ ॥

पूर्वं तावद्धवलितनभोभागमभ्रंलिहाग्रं
कैलासाद्रिश्रियमिव हसन्मोहशत्रोर्निहन्तुः ।
कर्मारीणां विजितमदनस्यार्हतः संचिचीषुः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डेश्वरस्य॥ २ ॥

---

१ चण्डीश्वरस्येत्यपि पाठः ।

पूर्वमिति ॥ पूर्वं तावत् प्रथमं तावत्। तावच्छब्दो विधिवाचकः। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यभिधानात्। कर्मारीणां कर्माण्यष्टविधानि तान्येवारयः शत्रवस्तेषाम्। मोहशत्रोः मोहापरनामकं कर्मैव शत्रुस्तस्य। निहन्तुः विनाशयितुः। विजितमदनस्य विजितो मदनो मन्मथो येन तस्य। चण्डेश्वरस्य ईष्टे जगदुद्धरणे समर्थो भवतीतीश्वरः नायकः चंडः कार्यातीतकः तीक्ष्ण इत्यर्थः "चंडस्त्वत्यंतकोपनः" इत्यमरः। चण्डश्चासावीश्वरश्चेति कर्मधारयः। अथवा चण्डानाम् उग्रतपोदीप्ततपस्तप्ततपोघोरतपोमहातपःप्रभृतिनिरुपमतपःशूराणां महामुनीनामीश्वरः प्रभुस्तस्य। त्रिभुवनगुरोः त्रयाणां भुवनानां समाहारस्त्रिभुवनम्। "दिगधीति" सञ्ज्ञा तद्धितोत्तरपदसमासः। "पात्रेसमितादयः" इति स्त्रीत्वनिषेधः। त्रिभुवनगुरोस्त्रिलोकनाथस्य। अर्हतः सहजाद्यतिशयविशेषमनन्तचतुष्टयं च प्राप्तुमर्हतीत्यर्हन् शतृत्यस्तस्य जिनेन्द्रस्य। धवलितनभोभागं धवलितो नभस आकाशस्य भागो येन तत्। अभ्रंलिहाग्रम् अभ्रं लिहतीत्यभ्रंलिहम्। "वहाभ्रालिहः" इति खच्। अभ्रंलिहमग्रं यस्य तत्। कैलासाद्रिश्रियम् अष्टापदगिरिसम्पदम्। हसदिव उपहासं कुर्वदिव। धाम स्थानम्। चैत्यालयमित्यर्थः। पुण्यं सुकृतम्। "स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः" इत्यमरः। संचिचीषुः सञ्चेतुमिच्छुस्तथोक्तः। सम्पादनरतः सन्। यायाः गच्छेः। अत्रार्हतः कर्मारीणां निहन्तुरिति सामान्यविशेषणेन सिद्धमपि मोहाक्रान्तेश्वराद्यविषयं मोहशत्रुनिहन्तृत्वं पराजितेश्वरादेर्मदनस्य विजयमपि विशेषेण प्रकटीकर्तुं पुनर्विशेषणद्वयमाहेति भावः। कर्मारीणां मोहशत्रोश्च निहन्तुर्विजितमदनस्यार्हतः चण्डेश्वरत्वं न दुर्घटम्। तदुक्तं समन्तभद्रस्वामिभिः— "स्वदोषमूलं स्वसमाधितेजसा निनाय यो निर्दयभस्मसात्क्रियाम्। जगाद तत्त्वं जगतेऽर्थिनेऽञ्जसा बभूव च ब्रह्मपदामृतेश्वरः।" "यो न च याति विकारं युवतिजनकटाक्षबाणविद्धोऽपि। स त्वेव शूरशूरो रणशूरो नो भवेच्छूरः" इति ॥ २ ॥

तं सेवेथाः कृतपरिगतिर्व्याकिरन्पुष्पवर्षं
स्तोत्रीकुर्वन्स्तनितमभितो दुन्दुभिस्वानमन्द्रम् ।
वातोद्धूतैरनिभृततरैरुत्तरङ्गैः पयोभि-
र्धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्याः ॥ ३ ॥

तमिति ॥ कुवलयरजोगन्धिभिः उत्पलपरागगन्धवद्भिः । " वोपमानात् " इति इप्रत्ययः । वातोद्धूतैः वायुना कम्पितैः । अनिभृततरैः अदृढतरैः । उत्तरङ्गैः उन्नतस्तरङ्गो येषां तैः । गन्धवत्याः गन्धवतीनामनद्याः । पयोभिः वारिभिः । धूतोद्यानं धूतमुद्यानं यथा भवति तथा । कृतपरिगतिः परितो गमनं परिगतिः । प्रदक्षिणं कृता परिगतिर्येन सः । पुष्पवर्षं पुष्पाणां वर्षं पुष्पवद्वर्षं वा पुष्पवृष्टिम् । व्याकिरन् प्रकिरन् । अभितः सर्वतः । " समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः" इत्यमरः । दुन्दुभिस्वानमन्द्रं दुन्दुभीनां भेरीणां स्वान इव मन्द्रं गम्भीरम् । "भेरी स्त्री दुन्दुभिः पुमान्" इत्यमरः । स्तनितं गर्जितम् । स्तोत्रीकुर्वन् प्रागस्तोत्रम् इदानीं स्तोत्रं करोतीति स्तोत्रीकुर्वन् स्तुतिं दधानः सन् । तम् अर्हतम् । सेवेथाः भजेथाः ॥३॥

सत्यन्यस्मिन्सुरभिशिशिरस्वच्छतोयह्रदादौ
नानास्वादौ पयसि पविते पीतिनस्तद्विनोदः ।
व्याधूतैस्तैः कथमिव भवेद्वारिभिर्गन्धवत्या
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ४ ॥ ३५ ॥

सतीति ॥ अन्यस्मिन्नपरस्मिन् । सुरभिशिशिरस्वच्छतोयह्रदादौ सुरभि सुगन्धि शिशिरं शीतलं स्वच्छं निर्मलं सुरभि च तत् शिशिरं च सुरभिशिशिरं तच्च तत् स्वच्छं च सुरभिशिशिरस्वच्छं खंजकुंडादिवदन्यतरप्राधान्येन विशेषणं व्यभिचार्ये कार्यमिति कर्मधारयत्वं । तोयं यस्य स तथोक्तः ह्रद आदिर्यस्य स ह्रदादिः स चासौ ह्रदादि-

श्च तस्मिन् । नानास्वादौ नानाविधः स्वादुर्यस्य तस्मिन् । नानारस इत्यर्थः । पवित्ते पवित्रीभूते । पूङ् पवने । "श्र्युकः" इति द्विविकल्पः । पूतं पवितमिति द्विधा सिद्धमित्यर्थः । सति योग्ये । पयसि सलिले । पीतिनः पीतमनेन पूर्वं पीती पीतवानित्यर्थः । तस्यपीतिनस्तव । क्तिनोऽद्यो: सुपिति पयसः सप्तमी । तोयक्रीडानिरतयुवतिस्नानतिक्तैः तोयक्रीडासु निरतानाम् आसक्तानां युवतीनां स्नानं स्नानीयं चन्दनादिद्रव्यम् । "स्नानीयेऽभिषवे स्नानम्" इति यादवः । तेन तिक्तैः सुरभिभिः । "कटुतिक्तकषायाद्याः सुरभीति प्रकीर्तिताः" इति हलायुधः । मरुद्भिः पवनैः । व्याधूतैः आकम्पितैः । गन्धवत्याः सरितः । तैर्वारिभिः सलिलैः । तद्विनोदः जलक्रीडाविनोदः । कथमिव भवेत् किंवत्स्यात् । पश्येति शेषः ॥४॥

द्रष्टुं वाञ्छा यदि च भवति प्रेतगोष्ठीं विचित्रां
तिष्ठातिष्ठन्नुपरिनिपतद्गृध्रबद्धान्धकारे ।
दोषामन्येऽप्यहनि नितरां प्रेतगोष्ठीतिरात्रे-
रप्यन्यस्मिञ्जलधर महाकालमासाद्य काले ॥ ५ ॥

द्रष्टुमिति ॥ हे जलधर हे मेघ । विचित्रां विविधाम् । प्रेतगोष्ठीं परेतगोष्ठीम् । "परेतप्रेतसंस्थिताः । समज्यापरिषद्गोष्ठी" इत्युभयत्राप्यमरः । द्रष्टुम् अवलोकितुम् । भवतः तव । वाञ्छा अभिलाषः । यदि च भवति चेत् तर्हि । महाकालं महाकालाभिधानम् तत्पुरीसमीपगतमरण्यम् आसाद्य गत्वा । अन्यस्मिन्नपि काले अपरस्मिन्नपि समये । अतिष्ठन् अवसन् सन् । उपरिनिपतद्गृध्रबद्धान्धकारे उपरि निपतन्ति तथोक्ताः ते च ते गृध्राश्च तैर्बद्धो रचितोऽन्धकारो यस्मिन् तस्मिन् । नितराम् अत्यन्तम् । दोषामन्येऽपि रात्रिसदृशेऽपि । "कर्तुःखश्" इति खश्यः । शित्त्वात् श्यः । अनव्ययस्येति वचनान्न ममह्रस्वौ । अहनि दिवसे । "घस्रो दिनाहनी"

इत्यमरः । रात्रेः निशायाः । प्रेतगोष्टीति परेतगोष्टीति युद्धेति शेषः । तिष्ठ आस्स्व । निशाया अतिभयङ्करत्वात् तदा अवसन् दिवस एव स्थित्वा पश्येति भावः ॥ ५ ॥

तस्माज्जीर्णद्रुमशतबृहत्कोटरान्तःप्रवद्ध-
ध्वानोलूकप्रतिभयरवे प्रेतशोफातिरौद्रे ।
तस्योपान्ते परिणतशिवारब्धसांराविणोग्रे
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ॥ ६ ॥

तस्मादिति ॥ तस्मात् कारणात् । जीर्णद्रुमशतबृहत्कोटरान्तः-प्रवद्धध्वानोलूकप्रतिभयरवे जीर्णानां द्रुमाणां वृक्षाणाम् अनेकानां बृहतः पृथुलाः कोटराः निष्कुहास्तेषामन्तर्मध्यं तत्र प्रवद्धो ध्वानो येषामुलूकानां तेभ्यः प्रतिभयो भयङ्करो रवो ध्वनिर्यस्मिन् तस्मिन् । " निष्कुहः कोटरं वा ना । ' ' उलूकस्तु वायसारातिपेचकौ ।' भयङ्करं प्रतिभयम् " इत्यमरः । प्रेतशोफातिरौद्रे प्रेतानां शवानां शोफेन श्वयथुना " शोफस्तु श्वयथुः शोथः " इत्यमरः । अति रौद्रे " रौद्रं तूग्रम् " इत्यमरः । परिणतशिवारब्धसांराविणोग्रे शिवाभिः क्रोष्ट्रीभिः आवद्धं कृतं सांराविणं ध्वनिः । सपूर्वस्य रुशब्दस्य इति धातोः व्याप्तौ भावे नजिनिति जिन् ॥ "व्जिनोऽण्" इत्यण् । " ञ्णित्यस्या " इत्यात् ॥ " आरेचोस्वादेः " इत्यारैच् । " शिवा हरीतकी क्रोष्ट्री शमी नद्यामलक्युमा । शिवो घोरे पद्मरागे हरकीलं शिवं जले " इति वैजयन्ती । तस्य महाकालवनस्य । उपान्ते समीपे प्रेतवने । यावत् यावत्कालेन । भानुः सूर्यः । नयनविषयं दृष्टिगोचरम् । अत्येति अतिक्रमति अस्तं गच्छतीत्यर्थः । यत्तदोर्नित्यसम्बन्धात् । तावत् आसमयात् । " यावत्तावच्च साकल्येऽवधौ

---

१ परिणतं प्रवृद्धं वारब्धसांराविणं तेन उग्रं रौद्रं तस्मिन् ।

मानेवधारणे" इत्यमरः। ते स्थातव्यम्। वानाकर्त्तव्यप् प्राप्तेः कर्त्तुरिति विकल्पिता षष्ठी। त्वया स्थातव्यमित्यर्थः॥ ६॥

विद्यासिद्धिं प्रति नियमिनो धौतवस्त्रस्य मन्त्रै-
हुंफुंकारैः पितृवनमभिभ्राम्यतः स्वैर्विशब्दैः।
पूजामाप्तास्यनघमधुरैः साधकौघस्य तस्मिन्
कुर्वन्संध्याबलिपटहतां शूलिनः श्लाघनीयाम्॥ ७॥

विद्यासिद्धिमिति॥ तस्मिन् महाकाले। विद्यासिद्धिं मन्त्रादिसाधनम्। प्रति उद्दिश्य नियमिनः नियमोऽस्यास्तीति तस्य। "नियमो व्रतम्" इत्यमरः। धौतवस्त्रस्य धौतं वस्त्रं यस्य तस्य। हुंफुंकारैः एवंभूतबीजाक्षरयुतैः मन्त्रैः। पितृवनं श्मशानम्। अभिभ्राम्यतः परितश्चलतः। शूलिनः त्रिशूलवतः। "अस्त्री शूलं रुगायुधम्" इत्यमरः। साधकौघस्य मन्त्रसाधकसमुदायस्य कापालिकनिवहस्येत्यर्थः। अनघमधुरैः निरवद्यप्रियैः। स्वैः स्वकीयैः। विशब्दैः ध्वनिभिः। "क्षुब्धस्वान्तध्वान्त–" इत्यदिना ध्वनौ विशब्देति कान्ते साधुः। सन्ध्याबलिपटहतां सन्ध्यायां यो भूतबलिस्तैर्दीयते तस्य पटहतां भेरीनिनादरूपम्। कुर्वन् सम्पादयन्। श्लाघनीयां प्रशस्याम्। पूजां सम्मानम्। आप्तासि लब्धासि। "आप्‌ व्याप्तौ" लुट् मध्यमपुरुषः॥ ७॥

तत्रास्त्यन्तर्वणमपभियामासितं सन्मुनीनां
जैनं वेश्म स्तुतिकलकलादात्ततन्नामरूढि।
तं सेवित्वा स्तनितपटहैरुच्चरद्भिस्त्वमुच्चै-
रामन्द्राणां फलमविकलं लप्स्यते गर्जितानाम्॥ ८॥३६॥

तत्रेति॥ तत्र अन्तर्वणं महाकालवनस्य मध्यप्रदेशे। वनस्यान्तः

अन्तर्वणम् । " पारेमध्यान्तः षष्ठ्या: " इत्यव्ययीभावः । " प्रान्ताः–" इत्यादिना वनशब्दस्य णत्वं निपात्यते । अपभियाम् अपगता भीर्भयं येषां तेषाम् । " भीतिर्भीः साध्वसं भयम् " इत्यमरः । सन्मुनीनां सन्तश्च ते मुनयश्च तेषाम् । आसितम् । " क्तस्य सदाद्वारः " इति षष्ठी । मुनिभिः संश्रितमित्यर्थः । स्तुतिकलकलात् स्तोत्रकोलाहलात् । " स्तवः स्तोत्रं स्तुतिर्नुतिः । " कोलाहलः कलकलः " इत्युभयत्राप्यमरः । आत्ततन्नामरूढि आत्ता प्राप्ता तन्नाम्नः कलकलजिनालय इत्यभिधानस्य रूढिः प्रसिद्धिर्येन तत् । जैनं जिनस्येदं जैनम् अर्हदीश्वरसम्बद्धं । वेश्म आलयम् । अस्ति वर्तते । उच्चरद्भिः । ध्वनद्भिः । स्तनितपटहैः स्तनिता ये पटहास्तैः । तं जिनम् । सेवित्वा आराध्य । त्वं भवान् । आमन्द्राणाम् ईषद्गम्भीराणाम् । गर्जितानां स्तनितानाम् । अविकलम् अखण्डम् । फलम् इष्टप्राप्तिम् । उच्चैः स्फुटम् । लप्स्यसे प्राप्स्यसि । " डुलभिष् प्राप्तौ " इति धातोर्लृट् । " यरलाभ्यः " इतीण्निषेधः ॥ ८ ॥

सायाह्ने चेत्तदुपगतवान्धाम तत्कालपूजा-
सङ्गीतान्ते श्रमजलकणैराचिताङ्गीः सुकण्ठीः ।
मन्दं यान्तीश्चतुरगणिकाः शीकरैः सन्नयेस्त्वं
पादन्यासक्वणितरसनास्तत्र लीलावधूतैः ॥ ९ ॥

सायाह्न इति ॥ तत्र वने । सायाह्ने सायं च तत् अहश्च सायाह्नं तस्मिन् । " संख्याव्ययसर्वांशात् " इति अट् । अह्नादेशश्च । तद्धाम तज्जिनवेश्म । उपगतवान् गतश्चेत् यदि तर्हि । तत्कालपूजासङ्गीतान्ते स चासौ कालश्च तस्मिन् कृता या पूजा तस्याः सङ्गीतस्यान्ते सन्ध्यापूजावसाने । श्रमजलकणैः स्वेदजललवैः । आचिताङ्गीः आचितं व्याप्तमङ्गं यासां ताः । मन्दं शनैः । यान्तीः यान्तीति यान्त्यस्ताः । शतृत्यः । " नृदुगू " इति ङी । पादन्यासक्वणितरसनाः

पादन्यासैः चरणक्षेपैः क्वणिता रणिता रसना काञ्चीदाम यासां ताः। "स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा" इत्यमरः। क्वणन्तेरेतत्कर्मत्वात् "गत्यकर्मण्याधारे" इति कर्तरि क्तः। सुकण्ठीः चतुरगणिकाः प्रौढवेश्याः। त्वं भवान्। लीलावधूतैः विलासावकीर्णैः। "हेला लीलेत्यमी हावाः" इत्यमरः। शीकरैः अम्बुकणैः। सन्नयेः लालयेः॥ ९॥

तास्तत्राहर्मणिमयरणन्नूपुराः पण्ययोषाः
प्रोद्गायन्तीः सुललितपदन्यासमुद्भ्रूविलासाः।
पश्योत्पश्या नवजलकणद्वित्रसिक्ता विलोला
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः॥ १०॥

ता इति॥ तत्र जिनालये। अहः त्वद्गमनसमयो दिवा चेदित्यध्याह्रियते। मणिमयरणन्नूपुराः रणन्तश्च ते नूपुराश्च तथोक्ताः "मञ्जीरो नूपुरोऽस्त्रियाम्" इत्यमरः। मणिमया रणन्नूपुराः यासां ताः। सुललितपदन्यासं पदानां शब्दरूपाणां चरणानां वा। "पदं व्याजाङ्घ्रित्चिह्नत्राणलक्ष्मसु" इति भास्करः। न्यासः रचनाविशेषः तथोक्तः। सुललितः पदन्यासो यस्मिन्कर्मणि तत्। प्रोद्गायन्तीः गानं कुर्वन्तीः। उद्भ्रूविलासाः भ्रुवोर्विलासः भ्रूविलासः उद्गतो भ्रूविलासो यासां ताः। रत्नच्छायाखचितवलिभिः रत्नानां कङ्कणमणीनां छायया द्युत्या खचिता मिश्रिता वलयश्चामरदण्डा येषां तैः। "वलिश्चामरदण्डे चर्मणि" इति विश्वः। चामरैः प्रकीर्णकैः। "चामरं तु प्रकीर्णकम्" इत्यमरः। क्लान्तहस्ताः श्रान्तपाणयः। एतेन देशिकनर्तनं दर्शितम्। तदुक्तं नृत्यसर्वस्वे– "खड्गकन्दुकवस्त्रादिदण्डिकाचामरस्रजः। वीणादि धृत्वा यत्कुर्यान्नृत्यं तद्देशिकं भवेत्" इति। नवजलकणद्वित्रसिक्ताः नवीनसलिलशीकराणां द्वौ वा त्रयो वा द्वित्राः "सुज्वार्थः" इति समासः। "प्रमाणे

सङ्घ्यान्तः " इति डप्रत्ययः । " डित्यन्त्याजादेः " इत्यन्त्यादेर्लुक् । तैः सिक्ताः । त्वयेति शेषः । विलोलाः चञ्चलाः । उत्पश्याः उत्पश्यन्तीति तथोक्ताः । " पाघ्राध्मा–" इति पश्यादेशः । ताः पण्ययोषितः गणिकाः । पश्य अवलोकय ॥ १० ॥

त्वां तत्रार्हद्भवनवलभेरूर्ध्वभागे निपण्णं
सन्ध्यारागच्छुरितवपुषं विद्युदुद्भासिदण्डम् ।
द्रक्ष्यन्ते ता विरचितमिव व्योम्नि लीलावितानं
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रविन्दून् ॥ ११ ॥

त्वामिति ॥ तत्र जिनालये । त्वत्तः त्वत्सकाशात् । नखपदसुखान् नखपदेषु सुरतजनितनखक्षतेषु सुखान् सुखकरान् । " सुखहेतौ सुखकरः " इति शब्दार्णवे । वर्षाग्रविन्दून् वृष्टिप्रथमजलकणान् । प्राप्य लब्ध्वा । एताः वेश्याः पण्यस्त्रियः । अर्हद्भवनवलभेः जिनालयस्य वलभेः वक्रदारुणः । " गोपानसी तु वलभी छादने वक्रदारुणि " इत्यमरः । ऊर्ध्वभागे उपरिभागे । निपण्णम् उपविष्टम् । सन्ध्यारागच्छुरितवपुषं सन्ध्याया रागेण छुरितं मिश्रितं वपुः शरीरं यस्य तम् । विद्युद्भासिदण्डं विद्युदेवोद्भासी प्रभास्वरो दण्डो यस्य तम् । व्योम्नि आकाशे । विरचितं निर्मितम् । लीलावितानमिव विलासदूष्यमिव । " अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि " इत्यमरः । द्रक्ष्यन्ति प्रेक्षिष्यन्ति ॥ ११ ॥

भूयश्च त्वत्स्तनितचकिताः किंस्विदित्यात्तशङ्काः
किञ्चित्तिर्यग्वलितवदनास्तत्र पण्याङ्गनास्ताः ।
बद्धोत्कम्पस्तनतटलुठल्लोलहाराः सलीला-
नामोक्ष्यन्ति त्वयि मधुकरश्रेणिदीर्घान्कटाक्षान् ॥१२॥३७॥

---

1 खिप्रश्ने च वितर्के चेत्यमरः ।

भूय इति ॥ भूयश्च पश्चात् । तत्र जिनालये । त्वत्स्तनितचकिताः तव गर्जितेन कम्पिताः । किंस्विदिति किमिदमिति । आत्तशङ्काः आत्ता गृहीता शङ्का याभिस्ताः । किञ्चित् ईषत् । तिर्यग्वलितवदनाः तिर्यग्वलितं वक्रितं वदनं यासां ताः । बद्धोत्कम्पस्तनतटलुठल्लोलहाराः बद्धो रचित उत्कम्पो ययोस्तौ च तौ स्तनौ च तयोस्तटं तस्मिन् लुठन् विमृशन् लोलश्चलो हारो यासां ताः । "लोलश्चलसतृष्णयोः" इत्यमरः । सलीलाः लीलया सह वर्तन्त इति तथोक्तास्तान् । ताः पण्याङ्गनाः । त्वयि भवति । मधुकरश्रेणिदीर्घान् मधुकराणां भृङ्गाणां श्रेणिः मालेव दीर्घास्तान् । कटाक्षान् अपाङ्गान् । "अपाङ्गो नेत्रयोरन्ते कटाक्षोपाङ्गदर्शने" इत्यमरः । आमोक्ष्यन्ति आवर्जिष्यन्ति । परैरुपकृताः सत्यः सद्यः प्रत्युपकुर्वन्तीति भावः ॥ १२ ॥

इत्थं भक्तिप्रकटनपटुस्तत्र चातोद्यगोष्ठीं
कृत्वा मन्द्रस्तनितमुखरध्वानमाविर्वितन्वन् ।
वन्दारूणां शृणु सुनिभृतस्तोत्रपाठं मुनीनां
पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः ॥ १३ ॥

इत्थमिति ॥ इत्थम् अनेन प्रकारेण । तत्र चैत्यालये । भक्तिप्रकटनपटुः भक्तेर्गुणानुरागस्य प्रकटने प्रकाशे पटुश्चतुरः । मन्द्रस्तनितमुखध्वानं मन्द्रं स्तनितमेव मुखस्य मुरजस्य ध्वानं ध्वनिम् । आविर्वितन्वन् प्रादुःकुर्वन् । "प्रकाशे प्रादुराविः स्यात्" इत्यमरः । आतोद्यगोष्टीं च वाद्यगोष्टीमपि । कृत्वा विधाय । पश्चात् वाद्यगोष्ट्यनन्तरम् । उच्चैः महत् भुजतरुवनं भुजतरूणां वृक्षविशेषाणां वनं तदुपवनम् । मण्डलेन मण्डलाकारेण । अभिलीनः अभितो व्याप्तः सन् । कर्तरि क्तः । वन्दारूणां वन्दनशीलानाम् । "वन्दारुः"

इत्यारुः । मुनीनां यतीनाम् । सुनिभृतस्तोत्रपाठं सुनिश्चलस्तुतिपठनम् । शृणु श्रुतिविषयं विधेहि ॥ १३ ॥

तस्मिन्काले जलधरपथे स्वं वितत्य प्रहर्षा-
द्विद्युद्दीपैर्जिनमुपहरन्भक्तिभारावनम्रः ।
द्रष्टासि त्वं दधदिव मुहुः स्वामिसेवानुरागं
सान्ध्यं तेजः प्रतिनवजपापुष्परक्तं दधानः ॥ १४ ॥

तस्मिन्निति ॥ तस्मिन्काले स्तोत्रश्रवणसमये । जलधरपथे आकाशे । प्रहर्षात् सन्तोषात् । स्वं स्वरूपम् । वितत्य विस्तृत्य । भक्तिभारावनम्रः भक्त्यतिशयेनावनम्रः नमनशीलः । "नमूकम्यजस्कम्प–" इति रः । विद्युद्दीपैः विद्युत एव दीपास्तैः । जिनं जिनेश्वरम् । उपहरन् । पूजयन् । प्रतिनवजपापुष्परक्तं प्रत्यग्रजपाकुसुमारुणम् । सान्ध्यं संध्यायां भवं सान्ध्यम् । भर्तुः तेजो दीप्तिम् । "तेजः प्रभावे दीप्तौ च बले शुक्लेप्यतस्त्रिषु" इत्यमरः । दधानः वहन् । मुहुः पुनः । स्वामिसेवानुरागं स्वामिनः जिनेश्वरस्य सेवानुरागं प्रीतिम् । दधदिव दधातीति दधत् दधान इव । त्वं भवान् । द्रष्टासि द्रक्षिष्यसे । कर्मणि लुट् ॥ १४ ॥

भक्तिं कुर्वञ्शतमख इवाविर्भवद्दिव्यरूप-
श्चित्रां वृत्तिं स्वरसरचितां शैखिनीं वा मनोज्ञाम् ।
कण्ठच्छायां स्ववपुषि वहन्भासयन्साधुवादं
नृत्तारम्भे हर पशुपतेरार्द्रनागाजिनेच्छाम् ॥ १५ ॥

भक्तिमिति ॥ शतमख इव देवेन्द्र इव । आविर्भवद्दिव्यरूपः दिवि भवं दिव्यं तच्च तत् रूपं च तथोक्तम् आविर्भवतीति आविर्भवत् दिव्यरूपं यस्य सः तथोक्तः । भक्तिं गुणानुरागम् । कुर्वन् । स्वरसर-

चितां स्वसामर्थ्यंकृताम् । " शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः " इत्यमरः । चित्रां नानारत्नविशिष्टाम् । वृत्तिं वर्तनम् । वा अथवा । शैखिनी शिखिनो मयूरस्येयं शैखिनी ताम् । मनोज्ञां मनोहराम् । कण्ठच्छायां ग्रीवाद्युतिम् । केवलनीलकान्तिमित्यर्थः । स्ववपुषि निजशरीरे । वहन् धरन् । साधुवादं प्रेक्षकजनश्लाघनोक्तिम् । " जनोदाहरणं कीर्त्तिं साधुवादं यशो विदुः " इति धनञ्जयः । भासयन् अकुत्सयन् । पशुपतेः ईशानदिक्पतेः रुद्रस्य । नृत्तारम्भे जिनेन्द्रदर्शनान्तरकृते आनन्दनर्तनप्रारम्भे । आर्द्रनागाजिनेच्छाम् आर्द्रं शोणितार्द्रं यन्नागाजिनं गजचर्म । "अजिनं चर्म कृत्तिः स्त्री " इत्यमरः । तत्रेच्छां काङ्क्षाम् । हर निवर्त्तय मोचयेत्यर्थः । तत्कर्मसदृशस्त्वन् तस्य स्थाने त्वमेव भवेति तात्पर्यम् ॥ १५ ॥

नाट्यं तन्वन्सुरुचिरतनुर्नाटय व्योमरङ्गे
तारापुष्पप्रकररुचिरे सौम्यविद्युन्नटीं ताम् ।
नायं रौद्रो मृदुरिति चिरं साधुवादैः प्रियान्ते
शांतोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ १६ ॥ ३८ ॥

नाट्यमिति ॥ भवान्या भवस्य पत्न्या । " वरुणेन्द्रभव-" इत्यादिना ङी आनुचागमः । अयम् एषः । रौद्रः रुद्रसम्बन्धः । अथवा भयङ्करः । न न भवति । किन्तु । मृदुरिति मृदुल इति । " कोमलं मृदुलं मृदु " इत्यमरः । चिरं दीर्घकालम् । साधुवादैः श्लाघोक्तिभिः । प्रियान्ते प्रियस्येश्वरस्य दिगिन्द्रस्य अन्ते समीपे । शान्तोद्वेगस्तिमितनयनं शान्तः उद्वेगो गजाजिनदर्शनजं भयं ययोस्ते अत एव स्तिमिते निश्चिते नयने यस्मिन्कर्मणि तत् । " उद्वेगस्त्वरिते क्लेशे भये मन्थरगामिनि " इति शब्दार्णवे । भक्तिः पूज्येष्वनुरागः दृष्टा भक्तिर्यस्य सः । सुरुचिरतनुः सुरुचिरा मनोहरा तनुर्यस्यसः तथोक्तः सन् । तारापुष्पप्रकररुचिरे तारा एव पुष्पाणि

तेषां प्रकरः समूहस्तेनरुचिरं सुन्दरं तस्मिन् । अनेन प्राक् पुष्पाञ्ज- लिं विधायेति ध्वन्यते । व्योमरङ्गे व्योमैव रंगं नाट्यस्थालं तस्मिन्। " रङ्गं त्रपुणि रङ्गो ना रोगे नृत्तस्थले रणे " इति भास्करः । नाट्यं नर्तनम् । तन्वन् कुर्वन् । तां प्रसिद्धाम् । सौम्यविद्युन्नटीं सौम्या रम्या विद्युत् तडित् सैव नटी नर्तकी ताम् । तां नाटय नर्तय॥१६॥

आलोक्यैवं श्रियमथ महाकालदेवालयानां
कृत्वा सान्ध्यं समुचितविधिं चात्र भूयो नगर्याम् ।
लीलां पश्यन्विहर शनकै रात्रिसम्भोगहेतो-
र्गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तम् ॥ १७ ॥

आलोक्येति ॥ अथ आनन्दनर्तनानन्तरम् । एवमुक्तप्रकारेण । महाकालदेवालयानां महाकालवनस्थचैत्यालयानाम् । श्रियं सम्पत्ति- म् । आलोक्य प्रेक्ष्य । अत्र चैत्यालयनिकटदेशे । सान्ध्यं सन्ध्या- कालसम्बन्धिनम् । समुचितविधिं च स्वयोग्या स्वयोग्यानुष्ठानमपि । कृत्वा विधाय । भूयः पश्चात् । तत्र नगर्यां विशालायाम् । नक्तं रात्रौ । " नक्तं च रजनाविति " इत्यमरः । रात्रिसम्भोगहेतोः रात्रौ क्रियमाणसम्भोगः तथोक्तः तस्य हेतुः तस्मात् । रमणवसतिं प्रियसदनम् । " वसतिः स्थाननिशयोर्निजवेश्मनि वेश्मनि " इति ना- नार्थरत्नमालायाम् । गच्छन्तीनां गच्छन्तीति गच्छन्त्यस्तासाम् । शतृत्सः । " नृदुग् " इति ङी । योषितां नारीणाम् । लीलां शृङ्गा- रादिभावम् । पश्यन् पश्यतीति पश्यन् सन् । शनकैः मन्दगर्जना- दिरहितः सन्नित्यर्थः । विहर सञ्चर ॥ १७ ॥

गर्ज्जन्त्युच्चैर्भवति पिहितव्योममार्गे रमण्यो
गाढोत्कण्ठा मदनविवशाः पुंसु सङ्केतगोष्ठीम् ।

---

१· तत्प्राप्तीच्छां ससङ्कल्पामुत्कण्ठां कवयो विदुः ।

एकाकिन्यः कथमिव रतौ गन्तुमीशा निशीथे
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ॥ १८ ॥

गर्जन्तीति ॥ पिहितव्योममार्गे आच्छादिताकाशमार्गे । "दाव्नुह्यपेरुपसर्गस्याकारस्य लुक्" भवति त्वयि । उच्चैरधिकम् । गर्जति घोषयति सति । निशीथे रात्रौ । सूचिभेद्यैरतिसान्द्रैरित्यर्थः । तमोभिरन्धकारैः । रुद्धालोके रुद्धदृष्टिप्रसारे । नरपतिपथे राजमार्गे । एकाकिन्यः निःसहायाः । "एकादाकिंश्चासहाये" इति आकिन् प्रत्ययः । "नृद्भुग्" इति ङी । गाढोत्कण्ठाः प्रियसमागमचिन्ताकलिताः । मदनविवशाः मन्मथवशगताः । "विवशोरिष्टदुष्टधीः" इत्यमरः । रमण्यः नार्य्यः । रतौ सुरतनिमित्तम् । "हेतौ हेत्वर्थैः सर्वाः प्रायः" इति सप्तमी । पुंसु पुरुषेषु । सङ्केतगोष्ठीम् उद्देशस्थानम् । "सङ्केतस्तु समयः" इत्यमरः । कथमिव केन प्रकारेण । गन्तुं यातुम् । ईशाः समर्थाः समर्था न भवन्तीति यावत् ॥ १८ ॥

तस्मान्नीचैर्ध्वनिषु च भवान् डम्बरं संहराशु
प्रत्यूहानां करणमसतामादृतं नोन्नतानाम् ।
कर्त्तव्या ते सुजनविधुरे प्रत्युतोपक्रिया सा
सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वीम् ॥ १९ ॥

तस्मादिति ॥ तस्मात् कारणात् । ध्वनिषु गर्जितेषु । उच्चैः महान् । न भव त्वं मा भूः । आडम्बरं गर्जितम् । "आडम्बरोऽस्त्री संरम्भे गर्जिते तूर्यनिस्वने" इति भास्करः । आशु शीघ्रेण । संहर निवर्त्तय । असतां दुर्जनानाम् । प्रत्यूहानां विघ्नानाम् । "विघ्नोन्तरायः प्रत्यूहः" इत्यमरः । करणं विधानम् । आदृतं प्रियं भवति "आदृतं सादरार्चितम्" इत्यमरः । उन्नतानां सज्जनानां न आदृतं न भवति । प्रत्युत किं तर्हि । सुजन भो सज्जन । आसां वनितानाम् । विधुरे

विपदि । उपक्रिया उपकृतिः । ते तव । कर्त्तव्या विधेया । "वा ना-कस्य" इति वा षष्ठी । त्वया विधातव्येत्यर्थः । कनकनिकषस्निग्ध-या कनकस्य निकषो निकष्यत इति व्युत्पत्त्या निकषोपलगतरेखा तस्येव स्निग्धं तेजो यस्यास्तया । "त्रिषु स्निग्धं तु मसृणं सान्द्रे क्लीबं तु तेजसि" इति शब्दार्णवे । सौदामन्या सुदाम्नोऽद्रिणः एक-दिक् सौदामनी विद्युत् "एकदिशा" इत्यण् । तया । उर्वी मार्ग-भुवम् । दर्शय प्रकाशय ॥ १९ ॥

क्रीडाहेतोर्यदि च भवतो गर्जनेनोत्सुकत्वं
मन्दंमन्दं स्तनय वनितानूपुरारावहृद्यम् ।
तासामन्तर्मणितसुभगं सम्भृतासारधार-
स्तोयोत्सर्गस्तनितमुखरो मा च भूर्विक्लवास्ताः[1] ॥२०॥ ३९॥

क्रीडाहेतोरिति ॥ यदि च पक्षान्तरे । "पक्षान्तरे चेद्यदि च" इत्यमरः । भवतः तव । क्रीडाहेतोः विलासनिमित्तम् । गर्जनेन स्त-नितेन । उत्सुकत्वं लाम्पट्यम् । "इष्टार्थोद्युक्त उत्सुकः" इत्यमरः। तर्हि । वनितानूपुरारावहृद्यं वनितानां नारीणां नूपुरस्याराव इव ध्वनिरिव "आरवारावसंरावविरावाः" इत्यमरः । हृद्यं हृदय-स्य प्रियम् तथोक्तम् यथा भवति तथा । "पश्यपथ—" इत्यादिना निपातनाद्यप्रत्ययः । "हृदयस्य हृल्लेखयदण्लास—" इति हृदादेशः । "अभीष्टेऽभीप्सितं हृद्यम्" इत्यमरः । तासां नारीणाम् । अन्तर्म-णितसुभगम् अन्तर्मणितमिव अन्तरुदितकूजितमिव सुभगं मनोहरं यथा भवति तथा । मन्दंमन्दं शनैःशनैः । "वीप्सायामितिद्विः" स्तनय गर्जय । ताः स्त्रियः । विक्लवाः भीरवः । "विक्लवो विह्वलः" इत्यमरः । भवन्तीति तव इति शेषः । सम्भृतासारधारः सम्भृता

---

[1] मा स्म भूरित्यपि पाठः ।

आसारस्य धारा वेगवद्वर्षस्य धारा येन सः। स्रोतोत्सर्गस्तनितमुखरः तोयस्य उत्सर्गो वर्षणं तन्निमित्तं यत् स्तनितम् उच्चैर्गर्जितमित्यर्थः। तेन मुखरो वाचालः। मा च भूः न भवेत्यर्थः॥ २०॥

इतोर्धवेष्टितानि—

भ्रान्त्वा कृत्स्नां पुरमिति चिरं रात्रिसम्भोगधूपै-
र्लब्धामोदः सुखमनुभव त्वं गरीयानशेषाम्।
तां कस्यांचिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रीं चिरविलसनात्खिन्नविद्युत्कलत्रः॥ २१॥

भ्रान्त्वेति॥ रात्रिसम्भोगधूपैः रात्रौ निक्षिप्तसम्भोगधूपैः। लब्धामोदः लब्धः आमोदो मनोहरपरिमलो यस्य सः। गरीयान् प्रकृष्टो गुरुः "गुणाङ्गात्" इति ईयस्। "प्रियस्थिर—" इति गरादेशः। त्वं भवान्। कृत्स्नां सकलाम्। "विश्वमशेषं कृत्स्नम्" इत्यमरः। पुरं पुरीम्। "पूः स्त्री पुरीनगर्यौ वा" इत्यमरः। इति एवम्। चिरम्। भ्रान्त्वा विहृत्य। चिरविलसनात् चिरस्फुरणात्। खिन्नविद्युत्कलत्रः खिन्ना क्लान्ता विद्युदेव कलत्रं कान्ता यस्य सः। "कलत्रं श्रोणिभार्ययोः" इत्यमरः। सुप्तपारावतायां सुप्ताः पारावताः परस्परवियुक्ताः कलरवाः यस्यां तस्याम्। "पारावतः कलरवः" इत्यमरः। अनेन पारावतकान्तायां सुखानुभवो ध्वन्यते। कस्यांचित् क्वचित्। भवनवलभौ भवनस्य वलभावाच्छादने उपरिभाग इत्यर्थः। "आच्छादनं स्याद्वलभिः गृहाणाम्" इति हलायुधः। अशेषां सम्पूर्णाम्। तां रात्रीं निशाम्। नीत्वा यापयित्वा। सुखं विषयसुखम्। अनुभव अनुभूयाः॥ २१॥

यद्यप्यस्यां क्षणपरिचयः स्वर्गवासातिशायी
तत्रासक्तिं सपदि शिथिलीकृत्य वैरं च योगात्।

दृष्टे सूर्ये पुनरपि भवान्वाहयेदध्वशिष्टं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ २२ ॥ ४०॥

यदीति ॥ अस्याम् उज्जयिन्याम् । क्षणपरिचयः क्षणस्योत्सवस्य परिचयः परिचर्या । " कालविशेषोत्सवयोः क्षणः " इत्यमरः । स्वर्गवासातिशायी स्वर्गवासादप्यतिशेत इत्येवंशीलः तथोक्तः । स्वर्गसुखादपि प्रकृष्टः । यद्यपि भवति चेत्तथापि । तत्र नगर्याम् । आसक्तिलाम्पट्यम् । दृष्टे उदिते । सूर्ये भानौ । योगात् सङ्गतेः । तदुदये भोगविगमादित्याशयः । " योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु " इत्यमरः । वैरं च विरोधमपि । सपदि शीघ्रेण । शिथिलीकृत्य परिहृत्य । पुनरपि भूयोपि । भवान् त्वम् । अध्वशिष्टम् अवशेषमार्गम् । वाहयेत् गच्छेत् । तथाहि सुहृदां मित्राणाम् । " अथ मित्रं सखा सुहृत् " इत्यमरः । अभ्युपेतार्थकृत्याः अभ्युपेता अङ्गीकृता अर्थस्य प्रयोजनस्य कृत्या क्रिया यैस्ते तथोक्ताः । अङ्गीकृतमित्रप्रयोजना इत्यर्थः । "अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः । " कृत्या क्रियादेवतयोः कार्ये स्त्री कुपिते त्रिषु " इति यादवः । न खलु मंदायन्ते मंदा न भवंति हि मंदम् इव आचरंतीति मंदायंते। सुब्धातुः। " निषेधवाक्यालङ्कारजिज्ञासानुनये खलु " इत्यमरः ॥ २२ ॥

रुद्धे भानौ नयनविषयं नोपयाति त्वयाऽसौ
मासो भङ्गादघनिरसनं मा स्म भूत्त्वन्निमित्तम् ।
तस्मिन्काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ॥ २३ ॥

रुद्ध इति ॥ त्वया भवता । भानौ सूर्ये । रुद्धे तिरोहिते सति । " संवीतं रुद्धमावृतम् " इत्यमरः । असौ भानुः । नयनविषयं जनानां नेत्रगोचरम् । नोपयाति नोपगच्छति । मासः मासस्य । पद्दन्नोमास्–" इत्यादिना मासशब्दस्य मासित्यादेशः । भङ्गात् अपू-

रणात्। त्वन्निमित्तं त्वमेव निमित्तं कारणं यस्य तत् तथोक्तम्। अघनिरसनं दुःखनिवारणम्। "अंहो दुःखव्यसनेष्वघम्।" 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः" इति चामरः। मा स्म भूत् मा जनिष्ट। सूर्ये अदृष्टे दिवसगणनाया अभावः। तदभावे मासपूर्त्तिज्ञानाभावः। तदभावे कान्तायाः संवत्सरप्रमितस्य विरहदुःखस्य निवारणम्। त्वत्सम्पर्कादिनाभावि न भवतु। किन्तु मासपूरणादेव जायतामिति तात्पर्यम्। किन्तु। तस्मिन्काले प्रागुक्ते सूर्योदयकाले। खण्डितानां योषिताम् नायिकाविशेषाणाम्। "ज्ञातेऽन्यासंगविकृते स्यात्कषायेति" दशरूपके। नयनसलिलम् अस्रजलम्। प्रणयिभिः प्रियतमैः। शान्ति शमनम्। नेयं नेतव्यम्। "णीञ् धातुः द्विकर्मकः" अतः कारणद्वयात्। भानोरर्कस्य। वर्त्म मार्गम्। आशु शीघ्रम्। त्यज मुञ्च। तस्य रोधको मा भूदित्यर्थः॥ २३॥

अन्यच्चान्यव्यसनविधुरेणाऽऽर्य मित्रेण भाव्यं
तन्मा भानोः प्रियकमलिनीसंस्तवं त्वं निरुन्धाः।
प्रालेयास्रं कमलवदनात्सोपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः॥ २४ ॥४१॥

अन्यच्चेति॥ अन्यच्च तन्मार्गरोधे दूषणान्तरमित्यर्थः। आर्य भो पूज्य। मित्रेण भानुना। सुहृदा वा। "सुहृदादित्ययोरप्रन्थनिर्देशेषु मित्रः" इति नानार्थरत्नमालायाम्। अन्यव्यसनविधुरेण अन्यदुःखदुःखितेन। भाव्यम् अवश्यम्। "ओरावश्यके" इति ण्यत्। तत् तस्मात्। भानोः अरुणस्य। प्रियकमलिनीसंस्तवं प्रिया चासौ कमलिनी च तस्याः नलिन्याः संस्तवं परिचयम्। "संस्तवः स्यात्परिचयः" इत्यमरः। त्वं भवान्। मा निरुन्धाः मा स्म निवारयस्व। सोपि इनः। नलिन्याः नलानि अम्बुजानि अस्याः सन्तीति नलिनी पद्मिनी। "तृणेऽम्बुजे नलं ना तु राज्ञि काले तु न स्त्रियाम्" इति श-

र्व्दार्णवे। तस्याः कान्तायाः। कमलवदनात् कमलं स्वकुसुममेव वदनं मुखं तस्मात्। प्रालेयास्रं प्रालेयमेव अस्रं नेत्राम्बु। "रोदनं चास्रम्" इत्यमरः। हर्तुम् अपनयनाय। प्रत्यावृत्तः प्रत्यागतः। भानोर्देशान्तरागमनान्नलिन्याः खण्डितत्वमिति भावः। त्वयि भवति। कररुधि करानंशून् हस्तान्वा रुणद्धि इति कररुध् क्विप्। तस्मिन् कररुधि करनिवारके सति। "बलिहस्तांशवः कराः" इत्यमरः। अनल्पाऽभ्यसूयः अधिकद्वेपः। स्यात् भवेत्॥ २४॥

गम्भीरेति त्वमपि सुभगां तां धुनीं मावमंस्था
गत्वा तस्या रसमनुभवत्वय्यतिस्वच्छवृत्तेः।
गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम्॥ २५॥

गम्भीरेति॥ गम्भीरायाः सरितः गम्भीरानामतटिन्याः। उदात्तनायिकायाश्चेति ध्वन्यते। प्रसन्ने अनुरक्तत्वान्मलशून्ये। चेतसीव मनसीव। प्रसन्ने निर्मले। पयसि उदके। प्रकृतिसुभगः प्रकृत्या स्वभावेन सुभगः सुन्दरः। "सुन्दरेऽधिकभाग्यांशे ऊदिते तटवासरे। तुरीयांशे श्रीमति च सुभगः" इति शब्दार्णवे। ते तव छायात्मापि छायारूप आत्मा तथोक्तः सोऽपि। बिम्बं शरीरं च। प्रवेशम्। लप्स्यते प्राप्स्यति। साक्षात्प्रवेशमनिच्छोरपि। छायाद्वारा वा तद्रसानुप्रवेशस्यावश्यं भावित्वादित्याशयः। त्वमपि भवानपि। सुभगां मनोहराम्। तां धुनीम् गम्भीराख्यां नदीम्। गत्वा प्राप्य। गम्भीरेति निम्नवतीति गाम्भीर्यगुणवतीति वा। मावमंस्थाः अवज्ञां मा कुरु। त्वयि भवति। अतिस्वच्छवृत्तेः अतिस्वच्छा निर्मला वृत्तिराचरणम् अम्भसां भ्रमो वा यस्यास्तस्याः। तस्याः गम्भीरायाः। रसम् उदकम्। शृङ्गारादिरसं वा। अनुभव अनुभवेः॥ २५॥

तस्मादेवं प्रणयपरतां त्वय्यभिव्यञ्जयन्ती
लीलाहासानिव विदधती सा धुनी शीकरोत्थान् ॥
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्या-
न्मोघीकर्तुं चटुलशफरोद्वर्त्तनप्रेक्षितानि ॥ २६ ॥ ४२ ॥

तस्मादिति ॥ तस्मात् ततः । शीकरोत्थान्जलकणोत्पन्नान् लीलाहासान् लीलायुक्ता हासास्तान् । विदधतीव कुर्वतीव सा धुनी सा नदी । त्वयि भवति । एवम् उक्तप्रकारेण । प्रणयपरतां रागपरत्वम् । अभिव्यञ्जयन्ती प्रकाशयन्ती । भवेदिति शेषः । तस्मात् प्रणयपरत्वव्यञ्जनादेव । अस्याः गम्भीरायाः । कुमुदविशदानि कुमुदानीव विशदानि कुवलयनिर्मलानि । चटुलशफरोद्वर्त्तनप्रेक्षितानि चटुलानि शीघ्राणि शफराणां मीनानाम् उद्वर्त्तनान्युल्लङ्घितान्येव प्रेक्षितानि लोचनानि । 'पाश्चवं चटुलं शीघ्रम् ।' इति । एतदेव गम्भीरायाः त्वयि अनुरागम् । धैर्यात् धार्ष्ट्यात् । मोघीकर्तुं निरर्थकरणाय । त्वं भवान् । नार्हसि योग्यो न भवति । सफलां कुर्विति भावः ॥ २६ ॥

ज्ञास्यस्युच्चैः पुलिनजघनादुच्चरत्पक्षिमाला-
भास्वत्काञ्चीमधुररणितात्कामसेवाप्रकर्षम् ।
तस्याः किञ्चित्करधृतमिव प्राप्तवानीरशाखं
हृत्वा[1] नीलं सलिलवसनं मुक्तरोधोनितम्बम् ॥ २७ ॥

ज्ञास्यसीति ॥ तस्याः नद्याः । किञ्चित् करधृतमिव किञ्चिदीषत् करेण धृतं हस्तावलम्बितमिव । प्राप्तवानीरशाखं प्राप्ता व्याप्ता वानीरस्य वृक्षविशेषस्य शाखा येन तत् । मुक्तरोधोनितम्बं मुक्तस्त्यक्तो रोधस्तटमेव नितम्बः । "पश्चिमश्रोणिभागे द्वे कटीकटौ" इति यादवः । नीलं कृष्णम् । सलिलं वसनं सलिलमेव वसनम् ।

१ नीत्वेत्यपि पाठः ।

वस्त्रं नीलाम्बरधरणं विरहतापनिवारणमिति प्रसिद्धिः । हृत्वा अपनीय । उच्चरत्पक्षिमालाभास्वत्काञ्चीमधुररणितात् उच्चरतां स्वनतां पक्षिणां माला सैव भास्वत्काञ्ची स्फुरन्मेखला तस्या मधुरं श्रुतिप्रियं रणितं ध्वनिर्यस्य तत् तस्मात् । पुलिनजघनात् पुलिनमेव जघनं तस्मात् । " तोयोत्थितं तत्पुलिनम् " इत्यमरः । कामसेवाप्रकर्षं मन्मथसेवनोत्कर्षम् । उच्चैरधिकम् । ज्ञास्यसि मनिष्यसि ॥ २७ ॥

तामुत्फुल्लप्रततलतिकागूढपर्यन्तदेशां
कामावस्थामिति वहुरसां दर्शयन्तीं निपद्य ।
प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि
ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥ २८॥४३ ॥

तामिति ॥ सखे हे मित्र । वहुरसां वहुलो रसो जलं शृङ्गारादिरसो यस्यास्ताम् । कामावस्थां मन्मथावस्थाम् । इति एवंरीत्या । दर्शयन्तीम् प्रकटयंतीम् । उत्फुल्लप्रततलतिकागूढपर्यन्तदेशाम् उद्गतानि फुल्लानि पुष्पाणि यासां ताभिः । प्रतताभिर्लतिकाभिः वल्लरीभिः गूढः संवृतः पर्यन्तदेशो यस्यास्ताम् । " प्रततिर्विस्तृतौ वल्ल्याम् " इति विश्वः । तां गम्भीरां नदीम् । निपद्य आश्रित्य । लम्बमानस्य अवलम्ब्यमानस्य । जघनमारुह्य स्थितस्येति ध्वन्यते । तव । प्रस्थानं प्रयाणम् । "प्रस्थानं गमनं गमः" इत्यमरः । कथमपि कृच्छ्रेणापि । भावि भविष्यति । अत्र कृच्छ्रत्वे कारणमाह । ज्ञातास्वादः अनुभूतरसः । विवृतजघनां विवृतं प्रकटितं जघनं कटिस्तत्पूर्वभागो वा यस्यास्ताम् । "जघनं स्यात्कटिपूर्वश्रोणीतांगावरा स्यात्" इति यादवः । विपुलजघनामिति पाठः । विहातुं त्यक्तुम् । कः पुमान् समर्थः दक्षः । कोपि न शक्त इति भावः ॥ २८ ॥

उत्तीर्यामूं कथमपि ततो गन्तुमुद्यच्छमानं
त्वामुन्नेष्यत्यनुवनमसौ गन्धवाहः सुगन्धः ।

त्वन्निष्यन्दोच्छ्रसितवसुधागन्धसम्पर्करम्यः
स्रोतोरन्ध्रध्वनितमधुरं दन्तिभिः पीयमानः ॥ २९ ॥

उत्तीर्येति ॥ त्वन्निष्यदोच्छ्रसितवसुधागन्धसम्पर्करम्यः तव निष्यन्दो निष्यन्दनं तेन वर्षणेन उच्छ्रसितायाः उज्जृम्भितायाः वसुधायाः भूमेर्गन्धस्य परिमलस्य सम्पर्केण सङ्गेन रम्यः मनोहरः। दन्तिभिः गजैः। स्रोतोरन्ध्रध्वनितमधुरं स्रोतःशब्देनेन्द्रियवाचिना तद्विशिष्टं घ्राणं लक्ष्यते। "स्रोतोम्बुवेगेन्द्रिययोः" इति विश्वः। स्रोतोरन्ध्रेषु नासाकुहरेषु। यद्ध्वनितं शब्दः तेन सुभगं रुचिरं यथा भवति तथा। पीयमानः पीयते इति तथोक्तः। वसुधागन्धलोभादाघ्रायमाण इत्यर्थः। सुगन्धः सुरभिः। त्वत्सुहृद्वा। "गन्धोगन्धकसम्बधामोदलेशस्मयेषु च" इत्युभयत्रापि भास्करः। असौ गन्धवाहः एषोऽनिलः। अमूं गम्भीरां नदीम्। कथमपि कष्टेनापि। उत्तीर्य्य उल्लङ्घ्य। ततः तत्प्रदेशात्। गन्तुं यातुम्। उद्यच्छमानं प्रयतमानम्। त्वां भवन्तम्। अनुवनं वनदैर्घ्येण। "दैर्घ्येऽनुः" इत्यव्ययीभावः। उन्नेष्यति गमयिष्यति ॥ २९ ॥

गत्वा किञ्चिच्छ्रमपरिजुषस्त्वत्क्लमच्छेददक्षः
प्रत्युद्यासुः प्रियसुहृदिवारूढसौगन्ध्ययोगः।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वातः[1] परिणमयिता काननोदुम्बराणाम् ॥३०॥४४॥

गत्वेति ॥ किञ्चित् कियद्दूरम्। गत्वा यात्वा। श्रमपरिजुषः श्रमयुक्तस्य। प्रियसुहृदिव प्रियमित्रमिव। प्रत्युद्यासुः प्रत्युद्यातुमिच्छुः अभिगन्तुमिच्छुः। देवपूर्वं देवशब्द एव पूर्वे यस्य तम्। गिरिं देवगिरिमित्यर्थः। उपजिगमिषोः उपगन्तुमिच्छुः उपजिगमिषुस्तस्य

---

१ शीतो वायुरित्यपि पाठः।

समीपं यातुमिच्छोः । ते तव । प्रियसुहृदिव प्रियमित्रवत् । त्वत्क्लमच्छेददक्षः तव क्लमस्य श्रमस्य छेदे निवारणे दक्षः समर्थः । आरूढसौगन्ध्ययोगः शोभनो गन्धः सुगन्धः सुगन्धस्य भावः सौगन्ध्यं तस्य वन्धुत्वस्य सुरभित्वस्य वा योगः सौगन्ध्ययोगः आरूढः सौगन्ध्ययोगो येन सः । " गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोः " इत्युभयत्राप्यमरः । काननोदुम्बराणां काननेषु वनेषु विद्यमानानाम् उदुम्बराणां जन्तुफलानाम् । " उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः " इत्यमरः । परिणमयिता परिपक्कं कारयिता । शीतो वातः शीतलो वायुः । " तुषारः शीतलः शीतः " इत्यमरः । नीचैः शनैः । " अल्पे नीचैः " इत्यमरः । वास्यति "वा गतिगन्धनयोः " लृट् ॥ ३० ॥

ईशोमाभ्यामपचितपदं तं पुपुत्रीयिषुभ्यां
पूजां जैनीं विरिरचयिषुं स्वौकसि प्राज्यभक्त्या ।
तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान्व्योमगङ्गाजलार्द्रैः ॥ ३१ ॥

ईशोमाभ्यामिति ॥ तत्र देवगिरौ । स्वौकसि स्वाश्रये । "ओकः सद्माश्रयः " इत्यमरः । नियतवसतिं नियता निर्णीता वसतिः स्थितिर्यस्य तम् । तमेव । पुपुत्रीयिषुभ्यां पुत्रं कर्तुं पुत्रयितुं वा इच्छू पुपुत्रीयिषू ताभ्याम् । ईशोमाभ्याम् अष्टदिक्पतितत्पत्नीभ्याम् रुद्रपार्वतीभ्याम् । " शम्भुरीशः पशुपतिः ।' उमा कात्यायनी गौरी " इत्युभयत्राप्यमरः । अपचितपदम् अपचिते अर्चिते पदे चरणे यस्य तम् । " स्यादर्हिते नमस्यितनमसितमपचायितार्चितापचितम् " इत्यमरः । जैनीम् अर्हत्सम्बधिनीम् । पूजाम् अर्चनाम् । प्राज्यभक्त्या भजनं भक्तिः प्राज्या चासौ भक्तिश्च तया । विरिरचयिषुं विरचयितुमिच्छुः विरिरचयिषुः तं कर्तुमिच्छुम् । स्कन्दं स्क-

न्द्राभिधानं कंचिद्देवविशेषम्। भवान् त्वम्। व्योमगङ्गाजलार्द्रैः आकाशगङ्गानद्याः जलेनार्द्रैः। पुष्पासारैः कुसुमसम्पातैः। "धारासम्पात आसारः" इत्यमरः। पुष्पमेघीकृतात्मा पुष्पाणां मेघस्तथोक्तः पुष्पमेघीकृतः आत्मा स्वरूपं यस्य तथोक्तः सन्। स्नपयतु अभिषिंचतु॥ ३१॥

पूज्यं देवैर्जिनपतिमजं पूजयन्तं सदैनं
दृष्ट्वा पूतं त्वमपि भवता देववृन्दे दिवाग्र्यम्।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना-
मत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः॥ ३२॥४५॥

पूज्यमिति॥ देवैः दिविजैः। पूज्यम् अर्च्यम्। अजं न जायत इत्यजः जन्मरहितस्तम्। उपलक्षणादन्तकादिरहितत्वमनुमीयते। जिनपतिम् अनेकभवगहनविषमव्यसनप्रापणहेतून् दुर्जयकर्मठकर्मारातीन् जयन्तीति जिनाः प्रमत्तादिगुणस्थानवर्त्तिनः एकदेसजिनास्तेषां पतिस्तम्। अर्हदीश्वरम्। सदा सर्वस्मिन्काले। पूजयन्तम्। पूतं तत्पूजनादिव पवित्रम्। "पूतं पवित्रं मेध्यं च" इत्यमरः। एतं स्कन्दम्। त्वमपि दृष्ट्वा अवलोक्य। नवशशिभृता नवं नूतनं शशिनं बिभर्त्ति अथवा शशिनं बिभर्त्तीति शशिभृत् सोमदिक्पालः नवः शशिभृत् यस्याः सा तथोक्ता तया। दिवा आकाशेन अथवा स्वर्गेण। "द्योदिवौ द्वे स्त्रियामभ्रम्" "द्योदिवौ द्वे स्त्रियां क्लीवम्" इत्युभयत्राप्यमरः। वासवीनां वासवस्येन्द्रस्येमा वासव्यः "प्राग्जितादण्" तासां शक्रसम्बन्धिनीनाम्। "वासवो वृत्रहा वृषा" इत्यमरः। चमूनां सेनानाम्। रक्षाहेतोः रक्षाया हेतुः तस्मात्। पालनार्थमित्यर्थः। हुतवहमुखे हुतं वहतीति हुतवहः "ण्वुल्तृचलिहादिभ्यः" इत्यच्। तस्य वह्नेर्मुखे अग्निमुखे। अथवा अग्नीन्द्रमुखे। सम्भृतं सञ्चितम्। अत्यादित्यम् आदित्यमतिक्रान्तम् आ-

दित्यादपि प्रकृष्टम् । " गतादिषु प्रादयः " इति समासः । देववृन्दे अमरनिकाये । अग्र्यम् अग्रे भवमग्र्यं श्रेष्ठम् । " पराध्याग्रप्राग्रहर-प्राग्र्याग्र्याग्रीयमग्रियम् " इत्यमरः । तत्तेजः तत् प्रसिद्धं तेजोरूपं चैतन्यम् । हि स्फुटम् । भविता । " ण्वुतृचौ " इति तृप्रत्ययान्तः । तत्सामर्थ्यरूपो भवितासीत्यर्थः । विधेयप्राधान्यान्नपुंसकनिर्देशः ३२

सोऽपि त्वत्तः श्रुतिपथसुखं गर्जितं प्राप्य बर्हीं
तुष्टः केकाः प्रतिविकुरुते वाहनं तस्य भर्तुः ।
ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ॥ ३३ ॥

सोऽपीति ॥ यस्य मयूरस्य । ज्योतिर्लेखावलयि ज्योतिषां तेजसां लेखा राजयः तासां वलयं मण्डलमस्यास्तीति तथोक्तम् । गलितं च्युतम् । स्वयं निपतितमित्याशयः । बर्हं पिच्छम् । " पिच्छबर्हे नपुंसके " इत्यमरः । भवानी पार्वती । पुत्रप्रेम्णा सुतस्नेहेन । कुवलयदलप्रापि कुवलयस्य दलं पत्रं तत्प्रापि तद्योगि यथा तथा । कर्णे श्रोत्रे । करोति विदधाति । दलेन सह धारयतीत्यर्थः । यद्वा दलप्रापि दलं प्राप्नोति दलप्राप् तस्मिन् । दलार्हे कर्णे करोति । क्विबन्तात्सप्तमी । दलं परिहृत्य तत्स्थाने बर्हं धत्ते इत्यर्थः । सोपि स च । तस्य भर्तुः स्कन्दाभिधानस्य विभोः । वाहनम् आविशिष्टलिङ्गत्वात् नपुंसकत्वम् । यानभूतः बर्हीं मयूरः । त्वत्तः भवतः सकाशात् । श्रुतिपथसुखं श्रुत्योः श्रोत्रयोः पथस्य विवरस्य सुखं यथा तथा । गर्जितं स्तनितम् । प्राप्य लब्ध्वा । तुष्टः सन्तुष्टः सन् । केकाः केकारवान् । प्रतिविकुरुते गर्जितस्य प्रतिध्वनीन् कुरुते ॥ ३३ ॥

यः सद्धर्मात्सकलजगतां पावकाल्लब्धजन्मा
तस्य प्रीत्या प्रथममुचितां सत्सपर्यां विधेहि ।

धानम् । अभिख्या नामशोभयोः " इत्यमरः । शरवणभवं शराणामुदकानां वनं संश्रयः शरवणम् । " प्रानन्तान्तरशेः " इत्यादिना णत्वम् । "शरो दध्याद्यग्रसारे वाणे काण्डे तृणान्तरे । शरं तु नीरे" इति नानार्थरत्नमालायाम् । " प्रवप्रवासनिवासवारिकान्तारेषु वनम् " इति नानार्थरत्नमालायाम् । भुवनजनतामाननीयं भुवनानां जगतां जनास्तेषां समूहो भुवनजनता । " ग्रामजन " इत्यादिना तल् । तया माननीयं पूजनीयम् । एनं प्राकथितम् । देवं स्वामिनम् । आराध्य पूजयित्वा । उल्लङ्घिताध्वा उच्चलितमार्गः । वैणिभिः वीणास्त्येषामिति तथोक्तास्तैः । वीणया कलितैः । सिद्धद्वन्द्वैः सिद्धमिथुनैः । जलकणभयात् त्वन्नीरविन्दुपतनभीतैः । जलसेकस्य वीणाक्वणनप्रतिबन्धकत्वादित्याशयः । मुक्तमार्गः त्यक्ताध्वा सन् । आशु शीघ्रेण । व्रज गच्छ । अत्र चतुर्ष्वप्यतीतेषु पद्येषु परपक्षप्रतिपक्षतया तत्तदर्थानुसारेण कल्पनाकथा काचित्कल्पनीया वाद्यार्थपरत्वादस्य काव्यस्येत्यभिमन्तव्यम् ॥ ३५ ॥

गत्वा तस्मादविरलगलन्निर्झरान्तर्मलां तां
प्राप्याकीर्तिं जनवदनजां क्षालयन्पुण्यतोयैः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्या भुवि परिणतां रन्तिदेवस्य कीर्तिम् ॥३६॥४७॥

गत्वेति ॥ तस्माद्देवगिरेः सकाशात् । गत्वा चलित्वा । अविरलगलन्निर्झरान्तर्मलाम् अविरलं निरन्तरं गलन् निर्गच्छन् निर्झरेण प्रवाहेणान्तर्मलामन्तःकलुषिताम् । तां प्रसिद्धां चर्मण्वतीनामनदीम् । प्राप्य आसाद्य । सुरभितनयालम्भजां सुरभितनयानां गवाम् आलम्भनेन सञ्ज्ञपनेन जायते इति जाताम् । " आलम्भपिञ्छविशरघातोन्माथवधा अपि " इत्यमरः । भुवि लोके । स्रोतोमूर्त्या प्रवाहरूपेण । परिणतां रूपान्तरमवाप्ताम् । रन्तिदेवस्य तदभिधानस्य ।

दशपुराणामधिपस्य नृपस्य। कीर्तिं यशः। जनवदनजाम् एवं लोकमुखजनिताम्। अकीर्तिं रन्तिदेवस्यायशः। पुण्यतोयैः तीर्थोदकैः। क्षालयन् प्रक्षालयन्। मानयिष्यन् पूजयिष्यन्। विशुद्ध्यनन्तरं संमानं करिष्यन् इत्यर्थः। व्यालम्बेथाः आश्रयेथाः अवतरेत्यर्थः ३६

इतः पादचेष्टितम्—

तस्या मध्येजलमुपचिताम्भोनिकाये मुहूर्तं
छायां कृष्णाजिनमदहरां सन्दधाने समग्राम्।
मन्ये युक्तं सरिति सुतरां तत्र चर्मण्वतीति
त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचोरे॥ ३७॥

तस्या इति॥ उपचिताम्भोनिकाये सञ्चितजलव्रजे। "निदग्धोपचिते" इत्यमरः। इदमेव कृष्णत्वसाधकत्वम्। कृष्णाजिनमदहरां कृष्णाजिनस्य असितचर्मणः मदहरां भङ्गकरीम्। तस्मादप्यतिकृष्णत्वान्मदहरत्वम्। समग्रां सम्पूर्णाम्। छायां कान्तिम्। "छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः। सन्दधाने सम्यक् बिभ्रति। शार्ङ्गिणः कृष्णस्य। "पीताम्बरोऽच्युतः शार्ङ्गी" इत्यमरः। वर्णचोरे वर्णस्य कान्तेश्चोरः। औचित्यादर्थनिर्णय इति। ग्राही तस्मिन् तत्समानवर्ण इत्यर्थः। त्वयि भवति। जलम् उदकम्। आदातुं ग्रहीतुम्। तस्याः चर्मण्वतीनद्याः। मध्येजलं जलस्य मध्यं मध्येजलम्। "पारेमध्येन्तषष्ठ्या:" इत्यव्ययीभावे निपातनादेत्वम्। "सप्तम्याः" इति वाम्। जलस्य मध्यप्रदेशे इत्यर्थः। मुहूर्तं मुहूर्तपर्यन्तम्। अवनते अवलम्बिते सति। तत्र सरिति तन्नद्याम्। चर्मण्वती चर्मास्या अस्तीति चर्मण्वती। "अष्ठीवत्—" इत्यादिना मतोर्मकारस्य वत्वम्। "नृदुग्" इति ङी। इति एवं नामेति शेषः। युक्तं व्युत्पत्तियोग्यम्। सुतराम् अत्यंतं मन्ये जाने॥ ३७॥

त्वय्यभ्यर्णे हरति सलिलं तत्र राहोस्सवर्णे
नूनं ज्योत्स्नाविसरविमलं तर्कयेयुर्नभोगाः।
मध्ये नीलं सितमिव दुकूलोत्तरीयं पृथिव्या-
स्तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम् ॥ ३८ ॥

त्वयीति ॥ राहोः राहुग्रहस्य । सवर्णे समानो वर्णो यस्य तस्मि-न् । सः समानस्य धर्मादिष्विति समानस्य सकारादेशः । अभ्यर्णे समीपगते । त्वयि भवति । तत्र नद्याम् । सलिलं जलम् । हरतीति हरन् । तस्मिन् स्वीकुर्वति सति । नभोगाः नभसि गच्छन्तीति नभोगाः खेचराः । पृथुमपि पृथुलमपि । दूरभावात् दूरत्वात् तनुं सूक्ष्मतया प्रतीयमानम् । तस्याः सिन्धोः तन्नद्याः । प्रवाहंनिर्झरम् । ज्योत्स्नाविसरविमलं ज्योत्स्नायाश्चन्द्रिकायाः विसर इव प्रसरइव विमलं निर्मलम् । मध्ये मध्यप्रदेशे । नीलं कृष्णम् । सितम् अन्यत्र धवलवर्णम् । पृथिव्याः भूदेव्याः । दुकूलोत्तरीयमिव क्षौमसंव्यान-वस्त्रमिव । " क्षौमं दुकूलं संव्यानमुत्तरीयं च " इत्यमरः । नूनं निश्चयेन । तर्कयेयुः ऊहयेयुः ॥ ३८ ॥

विद्युद्वध्रीविततवपुषं कालिकाकर्वुराङ्गं
त्वामामन्द्रध्वनितसुभगं पूर्यमाणं पयोभिः।
क्रीडाहेतोः सितिमिव दृतिं स्वर्वधूभिर्विमुक्तां
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टीः ॥ ३९ ॥

विद्युदिति ॥ विद्युद्वध्रीविततवपुषं विद्युदेव वध्री नध्री तया विततं नद्धं वपुः शरीरं यस्य तम् । " नध्री वध्री वरत्रा स्यात् " इत्यमरः । कालिकाकर्वुराङ्गं कालिकेव मेघमालेव कालिकया वा कर्वुरं शवलं अङ्गं यस्य तम् । " मेघमाला च कालिका । " 'शवलैताश्च कर्वुरे " इत्यमरः । आमन्द्रध्वनितसुभगं ईषद्गम्भीरध्वनिना सुन्दरम् । पयो-भिः नीरैः । पूर्यमाणं पूर्यत इति पूर्यमाणस्तम् । जलं स्वीकुर्वन्तमि-

त्यर्थः । त्वां भवन्तम् । खवधूभिः त्रिविष्टपकान्ताभिः । क्रीडाहेतोः लीलानिमित्तम् । विमुक्तां भुवं शितां । शिति मेचकवर्णाम् । "शिती धवलमेचकौ" इत्यमरः । दृतिमिव चर्मपात्रमिव । "दृतिश्चर्मघटे रूपे" इति विश्वः । गगनगतयः गगने व्योम्नि गतिर्गमनं येषां ते तथोक्ताः विद्याधरादयः । दृष्टीः नेत्राणि । आवर्ज्य आसमन्तादुन्मील्य । नूनम् अवश्यं । प्रेक्षिष्यन्ते द्रक्ष्यन्ति ॥ ३९ ॥

अध्यासीने त्वयि कुवलयश्यामभासि क्षणं वा
सिन्धोरस्याः शशधरकरस्पर्द्धिनं तत्प्रवाहम् ।
द्रक्ष्यन्त्यग्राद्ध्रुवमनिमिषा दूरमावर्ज्य दृष्टी-
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४० ॥ ४८ ॥

अध्यासीन इति ॥ अस्याः सिन्धोः चर्मण्वत्याः । शशधरकरस्पर्द्धिनं चन्द्रकिरणविजयिनं तस्मादप्यतिधवलमित्यर्थः । तत्प्रवाहं स चासौ प्रवाहश्च तम् । कुवलयश्यामभासि नीलोत्पलस्येव श्यामा भाः यस्य तस्मिन् । "नीलोत्पलं कुवलयम्" "भाश्छविद्युतिदीप्तयः" इत्यमरः । त्वयि भवति । क्षणं वा क्षणपर्यन्तमपि । अध्यासीने आस्थिते सति । "शीङ्स्थासोऽधेराधारिणः" इति आधारे ईप् । अनिमिषाः सुराः । "सुरमत्स्यावनिमिषौ" इत्यमरः । भुवः भूकान्तायाः । स्थूलमध्येन्द्रनीलं स्थूलो महान् मध्यो मध्यमणिभूतः इन्द्रनीलो मणिर्यस्य तम् । एकम् एकयष्टिकम् । मुक्तागुणमिव मुक्ताहारवत् । अग्रात् उपरिभागात् । "अग्रं पुरः शिखामानश्रेष्ठाद्रिकफलादिषु" इति भास्करः । दृष्टीः नयनानि । दूरम् आभूपर्यन्तम् । आवर्ज्य व्यापार्य । ध्रुवम् अवश्यम् । द्रक्ष्यन्ति लोकिष्यन्ते । अत्र नीलमेघसङ्गतस्य प्रवाहस्य भूकण्ठगतमुक्तागुणत्वेनोत्प्रेक्षेयमिवशब्देन व्यज्यते ॥ ४० ॥

---

१ सप्तमीसंज्ञा ।

एवं प्रायां सलिलविहृतिं तत्र कृत्वा मुहूर्त्तं
वारां पुण्यां सुरगज इव व्योममार्गानुसारी ।
लीलां पश्यन्प्रजविपवनोद्धूतवीचीचयानां
तामुत्तीर्य व्रज परिचितभ्रूलताविभ्रमाणाम् ॥ ४१ ॥

एवमपि ॥ तत्र नद्याम् । एवं रीत्या । प्रायां बहुलाम् । वारामुदकानाम् । "वार्वारि जलम्" इति धनञ्जयः । पुण्यां पुण्यमिव पुण्या ताम् । तीर्थविशेषत्वात्सुकृतरूपाम् । सलिलविहृतिं विहरणं विहृतिः सलिलानां विहृतिस्तां जलक्रीडाम् । सुरगज इव ऐरावत इव । मुहूर्तं स्वल्पकालपर्यन्तम् । कृत्वा विरच्य । व्योममार्गानुसारी आकाशमार्गानुसारी । परिचितभ्रूलताविभ्रमाणां भ्रुवो लता इव भ्रूलताः उपमितसमासः । तासां विभ्रमाः विलासाः परिचिताः क्लृप्ताः भ्रूविलासाः येषु तेषाम् । प्रजविपवनोद्धूतवीचीचयानां प्रजविना प्रवेगवता पवनेन वायुना उद्धूताः उत्कम्पिताः "प्रजवी जवनो जवः" इत्यमरः । वीचीनां चयाः वीचीचयाः ते च ते वीचीचयाश्च तेषाम् । लीलां विलासम् । पश्यन् अवलोकयन् । तां चर्मण्वतीम् । उत्तीर्य उल्लङ्घ्य । व्रज गच्छ ॥ ४१ ॥

तस्याः सिन्धोरनुवनमुदक्तीरभाजां लताना-
मुत्फुल्लानां ततमधुलिहां मुक्तधारं प्रवर्षन् ।
सीतापूरं व्रज लघु ततो जातहार्दस्तु मानात्
पक्ष्मोत्क्षेपादुपरि विलसत्कृष्णसारप्रमाणाम् ॥ ४२ ॥

तस्या इति ॥ तस्याः सिन्धोः तन्नद्याः । अनुवनं वनदैर्घ्यम् । "दीर्घेऽनुः" इत्यव्ययीभावः । उदक्तीरभाजाम् उत्तरतीराश्रितानाम् । उत्फुल्लानां विकसितानाम् । ततमधुलिहां तता आवृता मधुलिहो यासां तासाम् । "मधुलिण्मधुपालिनः" इत्यमरः । लतानां वल्लरी-

णाम् । " वल्ली तु व्रततिर्लता" इत्यमरः । मुक्तधारं मुक्ताधारा जलसम्पातो यस्मिन्कर्मणि तत् । प्रवर्षन् वृष्टिं वितन्वन् । जातहार्दः हृदयस्य भावः हार्दम् " हृदयपुरुपादसमान " इत्यण् । " हृदयस्य हृद्याण्नांसः " इति हृदादेशश्च । "प्रेमा ना प्रियता हार्दं प्रेम स्नेहः " इत्यमरः । जातं हार्दं यस्य सः तथोक्तः सन् । ततः तत्प्रदेशात् । पक्ष्मोत्क्षेपात् पक्ष्माणि नेत्रलोमानि " पक्ष्मसूत्राणि सूत्रांशे किञ्जल्के नेत्रलोमनि " इति शाश्वतः । तेषामुत्क्षेपात् उन्नमनाद्धेतोः । उपरिविलसत्कृष्णसारप्रभाणाम् । कृष्णाश्च ताः साराश्च कृष्णसाराः नीलशवलाः । " वर्णो वर्णः " इति समासः । " कृष्णरक्तसितः सारः " इति यादवः । उपरिविलसन्त्यः कृष्णसाराः प्रभास्तासाम् । सारशब्दादेव सिद्धे कार्ष्ण्ये पुनः कृष्णशब्दोपादानं कार्ष्ण्यप्राधान्यार्थम् । मानात् प्रमाणात् । "मानः स्त्रीणां कोपभेदे गर्वचित्तोन्नतावपि " " मानं प्रमाणे प्रस्थानाम् " इति भास्करः । पक्ष्मोत्क्षेपणादुत्थितनेत्रकान्तीनाम् । उत्सर्पणापसर्पणप्रमितकालादित्यर्थः । लघु शीघ्रम् । सीतापूरं सीतानदीप्रवाहं । व्रज गच्छ ॥ ४२ ॥

गच्छन्मार्गे प्रियमुपहरेः प्राणनाथोपयान-
प्रत्याश्वासाद्वियति सदृशं कृष्णसारोदराणाम् ।
लक्षीकुर्वन्पथिकवनितालोचनोल्लासकानां
कुन्दक्षेपानुगमधुकरश्रीमुपामात्मबिम्बम् ॥ ४३ ॥

गच्छन्निति ॥ वियति व्योम्नि । मार्गे पथि । गच्छन् प्रयान् । कृष्णसारोदराणां कृष्णसारस्येव मृगविशेषस्येव उदरं यासां तासाम् । " कृष्णसाररुरुन्यङ्कुरङ्कुशम्बररोहिषाः " इत्यमरः । तलोदरीणामित्यर्थः । सुदृशां शोभने दृशौ यासां तासां कान्तानाम् । "दृग्दृष्टिः" इत्यमरः । प्राणनाथोपयानप्रत्याश्वासात् प्राणनाथस्य भर्तुः उपयानमागमनं तस्य प्रत्याश्वासो विश्वासः तस्मात् । प्रियं प्रीतिक-

रम् । " दयितं वल्लभं प्रियम् " इत्यमरः । आत्मबिम्बं निजप्रतिबिम्बम् । कुन्दक्षेपानुगमधुकरश्रीमुषां कुन्दानि माघ्यकुसुमानि । " माघ्यं कुन्दम् " इत्यमरः । तेषां क्षेपः इतस्ततश्चलनं तस्य अनुगा अनुसारिणो ये मधुकरास्तेषां श्रियं शोभां मुष्णन्ति अपहरन्तीति तथोक्तानाम् । पथिकवनितालोचनोल्लासकानां पथिकवनितानां पान्थस्त्रीणां लोचनानां चक्षुषाम् उल्लास एव उल्लासकास्तेषां विलासानाम् । लक्षीकुर्वन् विषयीकुर्वन् । "लक्षं लक्ष्यं शरव्यं च" इत्यमरः। उपहरेः उपनय ॥ ४३ ॥

तस्मिन्नध्वन्यनतिचिरयन्नध्वनीनः प्रयाया
यस्मिन्यात्राफलमविकलं लप्स्यसे दैवयोगात् ।
जैत्रेषूणामिव हृदिशयस्यायतानां स्वबिम्बं
पात्रीकुर्वन्दशपुरवधूनेत्रकौतूहलानाम् ॥ ४४ ॥ ४९ ॥

तस्मिन्निति ॥ यस्मिन्मार्गे । दैवयोगात् विधिवशात् । "दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः " इत्यमरः । अविकलं सम्पूर्णम् । यात्राफलं प्रयाणप्रयोजनम् । " यात्रा स्याद्यापने गतौ " इत्यमरः । लप्स्यसे प्राप्स्यसि । तस्मिन्नध्वनि तन्मार्गे । अनतिचिरयन् अतिचिरं करोत्यतिचिरयन् न अतिचिरयन्ननतिचिरयन् । अध्वनीनः पान्थः। " अध्वानं यखौ " इति खप्रत्ययः । " अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि " इत्यमरः । हृदिशयस्य हृदि शेते इति हृदिशयस्तस्य मन्मथस्य । आयतानां दीर्घाणाम् । " सुदूरे दीर्घमायतौ " इत्यमरः । जैत्रेषूणामिव जयशीलानां बाणानामिव । " जैत्रस्तु जेता । कलंबमार्गणशराः पत्री रोप इषुर्द्वयोः " इत्यमरः । दशपुरवधूनेत्रकौतूहलानां दशपुरं रन्तिदेवपत्तनम् तत्र विद्यमाना वध्वः स्त्रियस्तासां नेत्रकौतूहलानां नेत्राभिलाषाणाम् । " कुतुकं च कुतूहलम् " इत्यमरः । साभिलाषदृष्टीनामित्यर्थः । स्वबिंबं स्वमूर्तिं पा-

न्नीकुर्वन् विषयीकुर्वन् । "योग्यभाजनयोः पात्रं" इत्यमरः । प्रयायाः ब्रज ॥ ४४ ॥

इतः पादवेष्टितानि पश्चादर्धार्धवेष्टितानि ।

रम्यान्देशानिति बहुविधान्सादरं वीक्ष्यमाणो
देशातिथ्यं व्रजतु स भवांस्तत्रतत्रापि वर्षन् ।
सस्यक्षेत्रे गिरिषु सरितामन्तिके च स्थले च
ब्रह्मावर्त्तं जनपदमथ च्छायया गाहमानः ॥ ४५ ॥

रम्यानिति ॥ इति एवंप्रकारेण । बहुविधान् बहुप्रकारान् । रम्यान् मनोहरान् । देशान् जनपदान् । सादरं प्रीतिसहितं यथा तथा । वीक्ष्यमाणः वीक्ष्यते इति वीक्ष्यमाणः अवलोकयन् । तत्रतत्र तस्मिन्तस्मिन् । सस्यक्षेत्रे केदारादौ । गिरिषु पर्वतेषु । सरितां नदीनाम् । अन्तरे च समीपे च स्थले च । अन्यत्र भूतलेऽपि । अभिवर्षन् अभिषिञ्चन् । अथ अनन्तरम् । ब्रह्मावर्त्तं ब्रह्मावर्त्तमपि । जनपदं देशम् । " नीवृज्जनपदो देशविषयौ " इत्यमरः । छायया अनातपमण्डलेन । गाहमानः प्रविशन् न तु स्वरूपेण । स भवान् त्वम् । देशातिथ्यं देशप्रत्यागतप्रतिपत्तिम् । व्रजतु गच्छतु ॥ ४५ ॥

यस्मिन्नद्यः क्षतजकलुषाः कौरवीणां चमूनां
प्रावर्तन्त प्रतियुयुधिरे यत्र चामोघशस्त्राः ।
पाण्डोः पुत्राः प्रतिहननतः पापभीताः सशङ्कं
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ॥ ४६ ॥

यस्मिन्निति ॥ यस्मिन् कुरुक्षेत्रे । कौरवीणां कुरुसम्बन्धिनीनाम् । चमूनां सेनानाम् । क्षतजकलुषाः रक्ताविलाः । " रक्तं क्षतजं शोणितम् " इत्यमरः । नद्यः सरितः । प्रावर्त्तन्त प्रवर्त्तन्ते स्म । यत्र च कुरुक्षेत्रे । अमोघशस्त्राः सफलायुधाः । प्रतिहननतः प्राणिहिंसनात् ।

पापभीताः पापाद्भीताः । पाण्डोः पाण्डुराजस्य । " पाण्डुः कुन्तीपतौ सिते " इति विश्वः । पुत्राः धर्मादितनयाः । सशङ्कं शङ्कया सह वर्त्तते यस्मिन्कर्मणि तत् । प्रतियुयुधिरे प्रयुध्यन्ते स्म । तत् क्षत्रप्रधनपिशुनम् । क्षत्रियसंग्रामसूचकम् । " प्रधनं धारणे युद्धे " इति भास्करः । "पिशुनौ खलसूचकौ " इत्यमरः । कौरवं कुरूणामिदं तथोक्तम् । क्षेत्रं विषयम् । भजेथाः सेवेथाः ॥ ४६ ॥

वीरक्षोणीं भुवनविदितां तां क्षणेन व्यतीयाः
क्षात्रं तेजः प्रतिभयभटस्तम्भनैः सूचयन्तीम् ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४७ ॥ ५० ॥

वीरक्षोणीमिति ॥ यत्र रणभूमौ । गाण्डीवधन्वा गाण्डीवमिति धनुर्यस्य सः गाण्डीवधन्वा अर्जुनः । " अर्जुनस्य तु गाण्डीवं गाण्डिवं पुन्नपुंसकम् " इत्यमरः । " धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् " इत्यमरः । शितशरशतैर्निशितबाणबहुलैः । " शितौ बाणतनूकृतौ " इति वैजयन्ती । राजन्यानां राज्ञामपत्यानि राजन्याः। " जातौ राज्ञः " इति यः । " ये नोव्ये " इत्यनो नलुक् । तेषां राजपुत्राणाम् । " मूर्द्धाभिषिक्तो राजन्यः " इत्यमरः । मुखानि वदनानि । त्वं भवान् । धारापातैः धाराणामुदकधाराणां पातैः प्रवर्षणैः । कमलानीव पङ्कजानीव । अभ्यवर्षत् अपातयत् । अभिमुखं दृष्ट्वा शरवर्षेण शिरांसि च्छेदयित्वा तदभिमुखं शरवृष्टिमतनोदिति वार्थः । प्रतिभयभटस्तम्भनैः भटानां स्तम्भनानि निश्चलीकरणानि तथोक्तानि प्रतिभयानि भयङ्कराणि भटस्तम्भितानि तैः । क्षात्रं क्षत्रसम्बद्धम् । तेजः प्रभावम् । " तेजः प्रभावे दीप्तौ च बले शुक्रेप्यतस्त्रिषु " इत्यमरः । सूचयन्तीं दर्शयन्तीम् । भुवनविदितां लोक-

प्रसिद्धाम् । तां वीरक्षोणीं रणभूमिम् । क्षणेन क्षणमात्रेण । व्यतीयाः उल्लङ्घ्य । भयङ्करत्वादिति भावः ॥ ४७ ॥

पुण्यक्षेत्रं तदपि भजनीयं हि तस्योपकण्ठे
यस्मिन्सोऽस्थात्तपसि हलभृत्प्रात्तराजर्षिवृत्तः ।
शार्ङ्गिण्यस्तं गतवति महीनिस्पृहो मन्मथीयां
हित्वा हालामभिमतरसां रेवतीलोचनाङ्काम् ॥ ४८ ॥

पुण्यक्षेत्रमिति ॥ तस्य कुरुक्षेत्रस्य । उपकण्ठे समीपे । " उपकण्ठान्तिकाभ्यर्णाभ्यग्रा " इत्यमरः । यस्मिन् प्रदेशे । शार्ङ्गिणि वासुदेवे । अस्तं गतवति मरणं गते सति । सः प्रसिद्धः । हलभृत् पद्मबलदेवः । " रेवतीरमणो रामः कामपालो हलायुधः " इत्यमरः । महीनिस्पृहः भूमौ निर्गताभिलापः । रेवतीलोचनाङ्कां रेवत्याः स्वभार्यायाः लोचने एव अङ्कं यस्यास्ताम् । अभिमतरसाम् अभिमतोऽभीष्टो रसः शृङ्गारादिर्यस्यास्ताम् । मन्मथीयां मन्मथस्येयं मन्मथीया ताम् । हालां सुराम् । " सुरा हलिप्रिया हाला " इत्यमरः । मन्मथावस्थैव सुरेति कुत्सितोपमा । हित्वा त्यक्त्वा । प्रात्तराजर्षिवृत्तः राजा चासौ ऋषिश्च राजर्षिः प्रात्तं प्राप्तं राजर्षेर्मुनीन्द्रस्य वृत्तं वर्त्तनं येन तथोक्तः सन् । तपसि तपश्चरणे । अस्थात् अतिष्ठत् । तदपि पुण्यक्षेत्रम् । तत्तीर्थस्थानमपि । हि स्फुटम् । भजनीयं भक्तुं योग्यं भजनीयं सेवनीयम् । त्वयेति शेपः ॥ ४८ ॥

तास्ते पुण्यं विदधति पुरा भूमयो दृष्टमात्रा
वन्द्याः पुंसां परिगमनतस्तां पुनन्त्येव नद्यः ।
पृथ्वीमेनां सकिल विहरन्नात्तदीक्षः प्रजासु
बन्धुस्नेहात्समरविमुखो लाङ्गलीयाः सिषेवे ॥ ४९ ॥

१ वरिवस्येति पुस्तकांतरे । २ बन्धुप्रीत्येत्यपि पाठः ।

ता इति ॥ सः लाङ्गली पद्मबलदेवः । प्रजासु जनेषु । " प्रजा स्यात्सन्ततौ जने " इत्यमरः । बन्धुस्नेहात् बन्धाविव स्नेहस्तस्मात् । समताभावादित्यर्थः । समरविमुखः साम्परायपराङ्मुखः । जीवहिंसाविमुख इत्यर्थः । आत्तदीक्षः स्वीकृतपारिव्राज्यः । एनां पृथ्वीम् एतद्भूमिं । विहरन् पर्यटन् । याः भूमीः । सिषेवे सेवते स्म किल । ताः भूमीः । पुंसां पुरुषैः वन्द्याः वन्दनीयाः । " वा नाकस्य " इति करणे षष्ठी । भूमयः भुवः । पुरा पूर्वम् । दृष्टमात्राः दृष्टा एव दृष्टमात्राः । " मात्रं कात्स्र्न्येऽवधारणे " इत्यमरः । ते तव । पुण्यं श्रियः विदधति कुर्वन्ति । परिगमनतः तत्र गमनात् । त्वां भवन्तम् । सपदि पुनन्त्येवं पवित्रीकुर्वन्त्येवेति निर्धारणम् ॥ ४९ ॥

सद्भिस्तीर्णाः प्रविमलतराः पुष्कलाः सुप्रसन्ना
हृद्याः सद्यः कलिमलमुषो याः सतीनां सदृक्षाः ।
कृत्वा तासामधिगममपां सौम्यसारस्वतीना-
मन्तः[1]शुद्धस्त्वमसि भविता वर्णमात्रेण कृष्णः ॥ ५० ॥५१॥

सद्भिरिति ॥ याः आपः । सतीनां पतिव्रतानां स्त्रीणाम् । सदृक्षाः समानाः । " सदृक्षः सदृशः सदृक् " इत्यमरः । सद्भिः सत्पुरुषैः । तीर्णाः प्लाविताः । प्रविमलतराः प्रकृष्टाः प्रविमलाः प्रविमलतराः । पुष्कलाः पूज्याः । " पूर्णश्रेष्ठौ तु पुष्कलः " इति भास्करः । सुप्रसन्नाः हृद्याः हृदयप्रियाः । " हृद्यं दयितं वल्लभं प्रियम् " इत्यमरः। सद्यः तत्काल एव । कलिमलमुषः दुष्टपापहराः । तासाम् । सौम्यसारस्वतीनां सरस्वत्याः सरस्वतीनामनद्याः इमाः सारस्वत्यः सौम्याः सुन्दराः " सौम्यं तु सुन्दरे सोमदैवते " इत्यमरः । सौम्याश्च ताः सारस्वत्यश्च तासाम् । अपाम् अम्भसाम् । " आपः स्त्री भूम्नि वार्वारि" इत्यमरः । अधिगमं सेवाम् । कृत्वा विधाय । त्वं भवान् ।

---

१ शुद्धस्त्वमपीत्यपि पाठः ।

वर्णमात्रेण वर्णेनैव कृष्णः श्यामः। न तु पापेनेत्याशयः। अन्तः शुद्धः अन्तः आत्मनि शुद्धः निर्मलो निर्दोषः। भविता। "ण्वुल्‍ल्‍तृचौ" "लिहादिभ्यः" इति कृत्यः। असि भवसि। सद्य एव पवित्रभूतो भविष्यसीत्यर्थः। "वर्तमानसामीप्ये वर्तमानवद्वा" इति वर्तमानप्रत्ययः ॥५०॥

यास्ता नद्यः कुलगिरिभवाः स्वर्धुनीरूढिभाज-
स्तासामेताः प्रतिनिधितया तत्समाख्याः कुनद्यः।
तीर्थालोके त्वमुपसर तां जाह्नवीं यन्मयोक्तं
तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णाम् ॥ ५१ ॥

या इति ॥ याः कुलगिरिभवाः कुलपर्वतसमुद्भूताः। नद्यः तरङ्गिण्यः। ताः ता एव। स्वर्धुनीरूढिभाजः देवनद्यः इति रूढिं प्राप्ताः। तासां नदीनाम्। प्रतिनिधितया उपमानतया। "प्रतिनिधिरुपमोपमानं स्यात्" इत्यमरः। तत्समाख्याः तासां समाख्या नाम यासां ताः। एताः इमाः। कुनद्यः क्षुल्लकनद्यः। भवन्तीति शेषः। तीर्थालोके तीर्थस्थानसंदर्शे। त्वं भवान्। मया कमठचरदैत्येन। यत् कुरुक्षेत्रम्। उक्तं प्राग्भाषितम्। तस्मात् तत्क्षेत्रात्। अनुकनखलं कनखलस्य तन्नाम्नोद्रेः समीपे अनुकनखलम्। "समीपे" इत्यव्ययीभावः। मार्गसूचनमिदम्। गच्छेः यायाः। शैलराजावतीर्णां शैलराजात् हिमवदभिधानात् क्षुल्लकगिरेः अवतीर्णां प्रवृत्ताम्। तां जाह्नवीं गङ्गानदीम्। उपसर गच्छ ॥ ५१ ॥

मोपेक्षिष्ठास्त्वमुपनदिकेत्याशु गत्वा प्रविश्य
प्राहुस्तीर्थप्रतिनिधिमपि क्षालनं कश्मलानाम्।

१ पूर्वार्धरचनं अन्नत्यास्वक्षुल्यकल्पासु नदीषु गंगासिंधुत्वेन महानदीभ्रांतिनिरासाय कृतं। २ नदीनां पापनिरासकत्वं न साक्षादिति स्याद्वादिभिर्निरूपितत्वात् परंपरया दुरितदूरीकरणमित्थं नदीजलस्नानेन वपुश्शुध्यति।' वपुःशुद्ध्या मनसो नैर्मल्यं मनोनैर्मल्येन परात्मध्यानं परात्मध्यानेन कर्मणः क्षय इति।

तां सेवेथाः सुभग सुरसां लोकरूढेः प्रतीतां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ॥ ५२ ॥

मेति ॥ सुभग हे सुमहिमन् । त्वं भवान् । उपनदिकेति नदीति मोपेक्षिष्ठाः उपेक्षां मा कृथाः । तीर्थप्रतिनिधिमपि तीर्थप्रतिकृतिमपि । कश्मलानां पापानाम् । क्षालनं निवारणमिति प्राहुः ब्रुवन्ति । प्राज्ञा इति शेषः । आशु शीघ्रेण । गत्वा प्रविश्य अवलोकय । लोकरूढेः लौकिकजनप्रसिद्धेः । प्रतीतां ख्याताम् । सगरतनयस्वर्गसोपानपङ्क्तिं सगरस्य राज्ञः तनयानां स्वर्गसोपानपङ्क्तिं स्वर्गारोहणराजिम् । " आरोहणं स्यात्सोपानम् " इत्यमरः । स्वर्गसाधनभूतामित्यर्थः । जह्नोः जह्नुराजस्य । कन्यां सुताम् । शोभनो रसो जलं शृङ्गारादिर्वा यस्यास्ताम् । तां गङ्गानदीम् । सेवेथाः आराधय । लोकरूढेः प्रसिद्धामित्यनेन सगरतनयस्वर्गसोपानपङ्क्तित्वं जह्नुकन्यात्वं च परसमयप्रसिद्धिमित्यवगन्तव्यम् ॥ ५२ ॥

तामेवैनां कलय सरितं त्वं प्रपाते हिमाद्रे-
गङ्गादेव्याः प्रतिनिधिगतस्यादिदेवस्य भर्तुः ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५३ ॥ ५२ ॥

तामिति ॥ हिमाद्रेः हिमवत्पर्वतस्य । प्रपाते निर्झरे । " प्रपातो निर्झरो भृगौ " इत्यमरः । प्रतिनिधिगतस्य गङ्गादेवीगृहशिखरकमलकर्णिकास्थितस्य प्रतिबिम्बात्मकस्य । शम्भोः शं सुखम् अस्मात्सर्वेषां भवतीति शम्भुः । शं सुखस्वरूपो भवतीति वा शम्भुस्तस्य ।

---

१ जाह्नवीशब्दः रूढ्यैव निर्वाह्यः नद्याः ऋषिदुहितृत्वायोगात् जह्नुना नदीपानं कर्णविवरेण निस्सारणं च प्रामाणिका नांगीकुर्युः सगरतनयस्वर्गसाधकत्वमप्येवमेव कालांतरमृतानामेषां कीकसस्य गंगाजले प्लावनात्स्वर्गप्राप्तिवर्णनमप्यवालिशैर्नश्रद्धेयं इत्याशयः ।

" अर्हत्पिनाकिनौ शम्भूः " इति धनञ्जयः । भर्तुः त्रिजगत्स्वामिनः । " भर्त्ता दातरि पोष्टरि" इत्यमरः । आदिदेवस्य आदिब्रह्मणः । गौरीं गौरवर्णवती । "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः", "गौरादिभ्यः " इति ङी । "हरिणी रोहिणी शोणी गौरी श्येनी पिशङ्ग्यपि" इति धनञ्जयः । या महागङ्गानदी । गङ्गादेवी नाम तद्वासिदेवतायाः । वक्रभ्रुकुटिरचनां वक्रा या भ्रुकुटिरचना भ्रूभङ्गकरणं ताम् । फेनैः डिण्डीरैः । " डिण्डीरोऽब्धिकफः फेनः " इत्यमरः । विहस्येव हसित्वेव । फेनानां धावल्याद्धासत्वेनोत्प्रेक्षणम् । इन्दुलग्नोर्मिहस्ता इन्दौ चन्द्रे लग्नाः सम्बद्धाः ऊर्मयः वीचयः एव हस्ता यस्याः सा तथोक्ता सती । केशग्रहणं शिरोरुहस्वीकृतिम् । अकरोत् । अरचयत् । तामेव सरितं तन्महागङ्गां नदीमेव । एनां सरितम् एतल्लघुगङ्गानदीम् । त्वं भवान् । कलय भावय । तयोर्भेदबुद्धिर्माभूदित्याशयः ॥ ५३ ॥

स्वादु स्वच्छं शुचि हिमशिलासम्भवं हारि नीरं
प्राप्तामोदं तटवनपतत्पुष्पकिञ्जल्कवासैः ।
अध्वश्रान्तिं श्लथयितुमधः प्राप्तमात्रोऽध्यवस्ये-
त्तस्याः पातुं सुरगज इव व्योम्नि पश्चार्धलम्बी ॥ ५४ ॥

स्वाद्विति ॥ तस्याः गङ्गायाः । स्वादु मधुरम् । स्वच्छं निर्मलम् । शुचि पवित्रम् । हिमशिलासम्भवम् । हिमा चासौ शिला च हिमशिला " तुषारः शीतलः शीतो हिमः " इत्यमरः । यद्वा । हिमयुक्ता शिला हिमशिला तस्यां सम्भवं सम्भूतम् । हारि मनोहरम् । " हृद्यं हारि मनोहरं च रुचिरम् " इति हलायुधः । तटवनपतत्पुष्पकिञ्जल्कवासैः तटे तीरे विद्यमानाद्वनात्पततां पुष्पकिञ्जल्कानां कुसुमकेसराणां वासैर्वासनाभिः । " किञ्जल्कः केसरोऽस्त्रियाम् " इत्यमरः । प्राप्तामोदं लब्धपरिमलम् । नीरं जलम् । अध्वश्रान्तिं मार्गश्रमम् । श्लथयितुं शिथिलीकर्तुम् । सुरगज इव देवदन्तीवत् । व्योम्नि अन्त-

रिक्षे । पश्चार्धलम्बी पश्चार्धमिति पृषोदरादित्वात्साधुः । तेन लम्बते इति पश्चार्धलम्बी । अधः अधस्तात् । प्राप्तमात्रः प्राप्त एव प्राप्तमात्रः सन् । पूर्वभागेन व्योम्नि स्थित्वा अग्रभागेन जलोन्मुखः सन्नित्यर्थः । पातुं पानाय । अध्यवस्येः निश्चिनुयाः ॥ ५४ ॥

तीव्रोदन्याश्रमपरिगतो न त्वकश्चेत्तदानीं
तूष्णीं स्थित्वा क्षणमिव गताध्वश्रमो जातवर्षः ।
मध्येगङ्गं ह्रदमधिवसेर्भूरि तस्याः प्रपातुं
त्वं चेदच्छस्फटिकविशदं तर्कयेस्तिर्यगम्भः ॥ ५५ ॥

तीव्रेति ॥ तदानीं तत्समये । त्वकं त्वमेव त्वकम् । "युष्मदस्मदोः सुपोऽसोभीत्यक्" तीव्रोदन्याश्रमपरिगतः तीव्रपिपासाश्रमेण परिगतः प्राप्तः । "क्षुत्तृडर्थेशनोदन्यदनायम्" इति तृषार्थे उदन्या इति साधुः । "उदन्या तु पिपासा तृट् तृषा" इत्यमरः । न चेत् न भवेच्चेत् । क्षणमिव क्षणपर्यन्तम् । तूष्णीं जोषम् । स्थित्वा आस्थाय । गताध्वश्रमः विगतमार्गक्लमः । जातवर्षः जातं वर्षं यस्मात्सः कृतवर्षः सन् इत्यर्थः । त्वं भवान् । तस्याः गङ्गायाः । अच्छस्फटिकविशदं निर्मलस्फटिकविशुद्धम् । भूरि बहुलम् । "अदभ्रं भूरि भूयिष्ठम्" इति धनञ्जयः । अम्भः नीरम् । तिर्यक् तिरश्चीनं यथा तथा । प्रपातुं प्रकर्षेण पानाय । तर्कयेश्चेत् निश्चिनुयाश्चेत् । मध्येगङ्गं गङ्गाया मध्ये मध्येगङ्गम् । अव्ययीभावत्वात्सप्तमी । ह्रदम् अगाधजलम् । "तत्रागाधजलो ह्रदः" इत्यमरः । "वसोनूपाध्याङ्" इति आधारे द्वितीया । तन्मध्यह्रदे तिष्ठेत्यर्थः ॥ ५५ ॥

तिष्ठत्वेकं क्षणमिव भवानिन्द्रनीलस्य लक्ष्मी-
मातन्वानः स्ववपुषि भृशं पीततोयोपि येन ।

संसर्पन्त्या सपदि भवतः स्रोतसि च्छायया सा
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा ॥ ५६ ॥ ५२ ॥

तिष्ठत्विति ॥ येन कारणेन । स्रोतसि प्रवाहे । सपदि शीघ्रम् । संसर्पन्त्या संक्रामन्त्या । भवतः तव । छायया प्रतिबिम्बेन । सा गङ्गा । अस्थानोपगतयमुनासङ्गमेव अस्थाने प्रयागात् अन्यत्र उपगतः प्राप्तो यमुनासङ्गमो यया सा तथोक्ता तद्वत् । अभिरामा मनोहरा । स्यात् भवेत् । तेन कारणेन । भृशम् अत्यर्थम् । "अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम्" इत्यमरः । पीततोयोपि गृहीतसलिलोपि । इन्द्रनीलस्य इन्द्रनीलरत्नस्य । लक्ष्मीं शोभाम् । स्ववपुषि निजविग्रहे । आतन्वानः विरचयन् । भवान् त्वम् । एकक्षणमिव एकक्षणपर्यन्तम् । इवशब्दो वाक्यालङ्कारे । तिष्ठतु आस्ताम् ॥५६॥

पुण्याम्बूनामिति भृतितरं चर्मपूरं प्रपूर्णः
किञ्चिद्गत्वा हिमवदचलस्यानुपादं निपीद ।
तत्पर्यन्ते वनपरिकरं प्रेक्षणीयं प्रपद्य-
न्नासीनानां सुरभितशिलं नाभिगन्धैर्मृगाणाम् ॥ ५७ ॥

पुण्येति ॥ इति एवंप्रकारेण । पुण्याम्बूनां पुण्योदकानाम् । भृतितरं प्रकृष्टं भरणं यथा तथा । चर्मपूरं चर्म पूरयित्वा । प्रपूर्णः सम्पूर्णः । "चर्मोदरात् पूरेः" इति णमु । हिमवदचलस्य हिमवत्पर्वतस्य । अनुपादम् अनुपादात् प्रत्यन्तपर्वतादायतमित्यनुपादम् । "दैर्घ्ये नुः" इत्यव्ययीभावः । किञ्चित् कियद्दूरम् । गत्वा । हिमवत्पर्वतसमीपे । आसितानाम् उपविष्टानाम् । मृगाणां कस्तूरीमृगाणाम् । अन्यथा नाभिगन्धानुपपत्तेः । नाभिगन्धैः कस्तूरीगन्धैः । तेषां तद्भवत्वात् । अत एव मृगनाभिसंज्ञा च । मृगनाभिर्मृगमदः

१ गंगायमुनयोस्संगमस्थानं प्रयागः । २ भवद्योगेन मध्यमः ।

कस्तूरी " इत्यमरः । अथवा नाभयः कस्तूर्यः । " नाभिः प्रधाने कस्तूर्यां मदे च क्वचिदीरिता " इति विश्वः । तासां गन्धैः । सुरभिततलं सुरभिताः शिलाः यस्य तम् । प्रेक्षणीयं दर्शनीयम् । वनपरिकरम् अरण्यप्राभवम् । " वृन्दप्राभवयोश्चैव पर्यङ्कपरिवारयोः । आरम्भे च परिस्तारे भवे परिकरस्तथा " इत्यमरः । पश्यन् प्रेक्षमाणः । निषीद तिष्ठ । "षद्लृ विशरणगत्यवसादनेषु " इति धातोः " पाघ्राध्मा " इति सीदादेशो लिट् ॥ ५७ ॥

विश्रम्याथो घन घनपथोल्लङ्घिकूटं हिमाङ्कं
पश्योदग्रैः शिखरतरुभिस्त्वामिवोपान्तयन्तम् ।
स्वस्याः कीर्त्तेरिव विधुरुचो नाकभाजां स्रवन्त्या-
स्तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ॥ ५८ ॥

विश्रम्येति ॥ अथो अनन्तरे । अथवा अथो पुनः । घन भो मेघ । " मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ " इत्युभयत्राप्यमरः । विश्रम्य अध्वश्रममपनीय । घनपथोल्लङ्घि कूटम् आकाशोल्लङ्घिशिखरं यस्य तम् । " द्यौराकाशमन्तरिक्षं मेघवायुपथेऽपि " इति धनञ्जयः । उदग्रैरुन्नतैः । " उच्चप्रांशून्नतोदग्रोच्छ्रिताः " इत्यमरः । शिखरतरुभिः शिखरस्थवृक्षैः । त्वां भवन्तम् । उपान्तयन्तमिव उपान्तं समीपम् एतीति यन् तमिव समीपं गच्छन्तमिव । यद्वा उपान्तं करोतीति उपान्तयति उपान्तयतीति उपान्तयन् तमिव समीपमाह्वयन्तमिव । स्वस्याः स्वकीयायाः । विधुरुचः विधोरिव रुक् कान्तिर्यस्यास्तस्याः । "स्युः प्रभारुग्रुचिस्त्विड्भा" इत्यमरः । कीर्तेरिव यशस इव । तस्याः प्रसिद्धायाः । नाकभाजां देवानाम् । स्रवन्त्या इव । " स्रवन्ती निम्नगापगा " इत्यमरः । आपगाया एव । प्रभवं प्रभवत्यस्मादिति प्रभवस्तम् उद्भवस्थानम् । " स्याज्जन्महेतुः प्रभवः स्थानं चाद्योपलब्धयः " इत्यमरः । गौरं शुभ्रम् । " सितो गौरो-

वलक्षः" इत्यमरः। हिमाङ्कं हिमनामधेयम्। अचलं नगम्। पश्य प्रेक्षस्व ॥ ५८ ॥

आरुह्याविर्मदकलमयूरारवैः कृष्यमाणः
कुञ्जेकुञ्जे दधिघनमिव प्रेक्षमाणो हिमानीम्।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५९ ॥ ५४ ॥

आरुह्येति ॥ आविर्मदकलमयूरारवैः आविर्भूतो मदः आविर्मदः तेन कलैः मधुराव्यक्ततरैः। "ध्वनौ तु मधुरास्फुटे कलः" इत्यमरः। मयूराणाम् आरवैः शब्दैः। कृष्यमाणः प्रेर्यमाणः सन्। आरुह्य उपरि गत्वा। तमिति शेषः। कुञ्जेकुञ्जे लताभवनेलताभवने। वीप्सायां द्विः। घनं पिण्डीभूतम्। दधीव दधिवत्। हिमानीं हिमसंहतिम्। "हिमारण्याद्गुरौ" इति ङी। आनुचान्तादेशः। प्रेक्षमाणः अवलोकमानः। अध्वश्रमविनयने विनीयतेऽनेनेति विनयनम्। करणाधारे चानट्। अध्वश्रमस्य विनयने। तस्य हिमाद्रेः। शृङ्गे शिखरे। निषण्णः निविष्टः सन्। शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयां शुभ्रो यः त्रिनयनस्य ईशानदिगीशस्य वृषः वृषभः। "सुकृते वृषभे वृषः" इत्यमरः। तेनोत्खातेन अवतारितेन पङ्केन शृङ्गाग्रस्थेन। तं हिमाद्रिं। सहोपमेयाम् उपमातुमर्हाम्। वृषभशृङ्गाग्रलग्नपङ्कवदित्यर्थः। शोभां कान्तिम्। वक्ष्यसि वोढासि। वहतेर्लृट्। त्रिनयनेत्यत्र "पूर्वपदात्संज्ञायामिति" णत्वं न क्षुभ्नादिषु चेति निषेधात् ॥ ५९ ॥

अध्वक्षामं शिथिलिततनुं शैलमार्गाधिरोहा-
त्त्वामौलङ्घ्ये घटयितुमसौ शक्नुयादेव वह्निः।
धूमैः सान्द्रैर्वनविटपिजैर्नातिवर्षन्नुपेया-
स्त्वं चेद्वायौ सरति सरलस्कन्धसङ्घट्टजन्मा ॥ ६० ॥

अध्वक्षाममिति ॥ वायौ पवने । सरति सरतीति सरन् तस्मिन् सति वाति सति । अतिवर्षन् अतिवृष्टिं कुर्वन् । त्वं नोपयाश्चेत् नगच्छेर्यदि तर्हि । अथवा नातिवर्षम् इत्यलुक्समासः । ईषद्वर्षन्नित्यर्थः। उपेयाश्चेत् यदि यायास्तर्हि । अतिवर्षस्याग्निप्रतिबन्धकत्वादिति भावः। सरलस्कन्धसङ्घट्टजन्मा सरलानां देवदारुविशेषाणाम् स्कन्धाः प्रदेशविशेषाः "अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधिस्तरोः" इत्यमरः । तेषां सङ्घट्टनेन सङ्घर्षणेन जन्म यस्य स तथोक्तः । जन्मोत्तरत्वाद्व्यधिकरणोपि बहुव्रीहिः साधुरित्युक्तम् । असौ वह्निः दावानलः । वनविटपिजैः कान्तारतरुप्रभवैः । "विटपी फलिनो नगः" इति धनञ्जयः । सान्द्रैः निरन्तरैः । "घनं निरन्तरं सान्द्रम्" इत्यमरः । धूमैः धूमपटलैः । अध्वक्षामं मार्गायासकृशीभूतम् । शैलमार्गाधिरोहात् गिरिपथारोहणात् । शिथिलिततनुं श्लथितशरीरम् । त्वां भवंतम् । औल्लङ्घ्ये उल्लंघस्य भावः औल्लंघ्यं तस्मिन् उल्लङ्घनीयत्वे । घटयितुं रचयितुम् । शक्नुयादेव समर्थो भवेदेव । मेघस्य धूमयोनित्वाद्धूमेन पुष्टिं विदध्यादित्यर्थः ॥ ६० ॥

आशृङ्गाग्रं कवचितमिवारूढमूर्तिं हिमान्या
त्वत्सान्निध्यादुपहितरसैश्चौषधीनां सहस्रैः ।
आकीर्णान्तं सरसगहनं शैलराजं न चैनं
बाधेतोल्काक्षपितचमरीवालभारो दवाग्निः ॥ ६१ ॥

आशृङ्गाग्रमिति ॥ हिमान्या हिमसंहत्या । आशृङ्गाग्रम् आशृङ्गादाशृङ्गाग्रम् । कवचितमिव कञ्चुकितमिव । आरूढमूर्त्तिम् आसमन्ताद्व्याप्तदेहम् । त्वत्सान्निध्यात् तव सामीप्यात् । उपहितरसैः

---

१ संघट्टिनो जन्मेति पंचम्यंतपूर्वपदत्वं विग्रहे युक्ते 'अवर्ज्यो व्यधिकरणो बहुव्रीहिर्जन्माद्युत्तरपदः' इति वामनः । २ आगूढमूर्तिमिति पाठे संमतश्छन्नदेहमित्यर्थः ।

उपधृतार्द्रीभावैः । ओषधीनां फलपाकान्तद्रुमादीनाम् । सहस्रैरनेकैः। आकीर्णान्तं व्याप्तपर्यन्तम् । सरसगहनं सरसं रसयुतं गहनं वनं यस्य तम् । " गहनं काननं वनम् " इत्यमरः । एनं शैलराजम् एतं हिमवन्तम् । उल्काक्षपितचमरीवालभारः उल्काभिः स्फुलिङ्गैः क्षपिताः निर्दग्धाः चमरीणां मृगाणां वालभाराः केशसमूहाः येन स तथोक्तः । " कुन्तलो वालः कचः केशः । " इत्यमरः । दवाग्निः दव इत्यग्निः दवाग्निः वनवह्निः । " वने च वनवह्नौ च दवो दाव इवेष्यते " इति शाश्वतः । न च बाधेत न पीडयेत् ॥ ६१ ॥

त्वत्तो निर्यन्स यदि सहसा विद्युतो जातवेदाः
प्रालेयाद्रिं सतुहिनवनं निर्दिधक्षेत्तदा स्वैः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै-
रापन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ६२ ॥ ५५ ॥

त्वत्त इति ॥ त्वत्तः त्वत्सकाशात् । सहसा शीघ्रेण । निर्यन् निर्गच्छन् । सः प्रसिद्धः । विद्युतः तडितः । जातवेदाः अग्निः । " जातवेदास्तनूनपात् " इत्यमरः । मेघज्योतिरित्यर्थः । सतुहिनवनं सतुहिनं हिमसहितं वनं यस्य तम् । प्रालेयाद्रिं हिमवन्नगम् । यदि निर्दिधक्षेत् निर्दग्धुमिच्छेचेत् । " दह भस्मीकरणे " इति धातोः सन्नन्ताल्लिङ् । तदा तत्समये । स्वैः स्वकीयैः । वारिधारासहस्रैः वारिधाराणां सहस्रैरनेकैः । एनं वह्निम् । शमयितुम् उपशमनाय । अलंशक्त्या अर्हसि योग्यो भवसि । उक्तं चैतदित्याह । उत्तमानां महताम् । सम्पदः समृद्धयः । आपन्नार्तिप्रशमनफलाः आपन्नानामार्तानाम् अर्तेः पीडायाः " अर्त्तिः पीडाधनुष्कोट्योः " इत्यमरः । प्रशमनम् उपशमनमेव फलं यासां ताः तथोक्ताः । हि स्फुटम् । भवेयुरिति शेषः । अतो हिमाचलस्य दावानलस्त्वया शमयितव्य इति भावः ॥ ६२ ॥

इतोऽर्धनेष्टितानि—

मोच्चैस्तत्र स्तनितनिनदानद्रिकुञ्जे तथास्त्व-
मैषां त्वद्भूद्भयमसुहरं शौर्यदर्पोद्धुराणाम् ।
ये संरम्भोत्पतनरभसास्स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ॥ ६३ ॥

मोच्चैरिति ॥ तस्मिन् हिमवति । संरम्भोत्पतनरभसाः संरम्भः कोपः "संरम्भः सम्भ्रमे कोपे" इति शब्दार्णवे । तेन उत्पतने उच्चलने रभसो वेगो येषां ते तथोक्ताः । "रभसो वेगहर्षयोः" इत्यमरः । ये शरभाः अष्टापदमृगाः । "शरभोऽष्टापदे मृगान्तरे" इति विश्वः । स्वाङ्गभङ्गाय स्वेषां शरीरावमर्दनाय । मुक्ताध्वानं मुक्तो ध्वा मार्गो येन तम् । भवन्तम् त्वाम् । सपदि शीघ्रम् । लङ्घयेयुः उल्लङ्घनं कुर्युः । सम्भावनायां लिङ् । शौर्यदर्पोद्धुराणां वीर्यगर्वोद्धृत्तानाम् । एषां शरभमृगाणाम् । त्वत् भवतः सकाशात् । असुहरणं प्राणहरणम् । "पुंसि भून्यसवः प्राणाः" इत्यमरः । भयं भीतिम् । मा भूत् न भवतु । तस्मात् तत्र तन्नगे । अद्रिकुञ्जे पर्वतलताखण्डे । त्वं भवान् । स्तनितनिनदान् गर्जितध्वनीन् । "शब्दे निनादनिनदध्वनिध्वानरवस्वनाः" इत्यमरः । उच्चैः अधिकम् । मा तथाः माकृथाः । "तनूङ् विस्तारे" लुङात्मनेपदम् । "तन्भ्यस्थास्थः" इति सेर्वा लुक् । "हन्मन्यम्" इति न लुक् । "लुङ्लुङि" इत्यडागमनिषेधः ॥ ६३ ॥

यद्यप्येते स्तनितरभसादुत्पतेयुर्भवन्तं
तैर्यग्योना भृशमपधियः स्वाङ्गभङ्गैकनिष्ठाः ।
तान्कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
केषां न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ६४ ॥ ५६ ॥

यदीति ॥ यद्यपि यदा कदाचित् । तैर्यग्योनाः तिर्यग्योनि-

मषाः । अपधियः अपगता धीर्बुद्धिर्येषां ते तथोक्ताः । स्वांगभंगैकनिष्ठाः स्वांगानां भंगेन मर्दनेन एकेन निष्ठाः उक्ताः । "निष्ठा निष्पत्तिनाशांताः" इत्यमरः । एते शरभाः । स्तनितरभसात् त्वद्गर्जितवेगात् । "रभसो वेगहर्षयोः" इत्यमरः । भवंतं त्वां । भृशं अत्यर्थं । उत्पतेयुः लंघयेयुः । तान् शरभान् । तुमुलकरकावृष्टिपातावकीर्णान् तुमुलाः करका वर्षोपलास्तासां वृष्टिस्तस्याः पातेन अवकीर्णान् अधः क्षिप्तान् कुर्वीथाः कुरुष्व । विध्यर्थे लिङ् । क्षुद्रोप्यधिक्षिपन् विपक्षस्सदयः प्रक्षिप्तव्य इति भावः । तथाहि निष्फलारंभयत्नाः आरभ्यंत इत्यारंभाः कर्माणि तेषु उद्योगः स निष्फलो येषां ते तथोक्ताः विफलकार्योपक्रमा इत्यर्थः । केषां पुंसां । परिभवपदं तिरस्कारास्पदं । न स्युः न भवेयुः । भवेयुरित्यर्थः । "घनोघनस्तु करकः" इति यादववचनात् करकशब्दस्य नियतपुल्लिंगाभिप्राये करकाणामवृष्टिरिति केषांचिन्मतं । तदन्येनाप्यनुमन्यते "वर्षोपलस्तु करका" इत्यमरः । तद्व्याख्याने "कमंडलौ च करकः" इति नानार्थे पुंस्यपि वचनात् पुल्लिंगताविधाने तात्पर्यं न तु स्त्रीलिंगतां निषेधयति । न तद्विरोधः । "करकस्तु करंके स्यादाक्रोशे च कमंडलौ । पक्षिभेदे करे चास्ति करका च घनोपले" इति विश्वप्रकाशवचनेन तूभयलिंगता प्युक्तेवेति न विरोधः ॥ ६४ ॥

तत्र व्यक्तं दृषदि चरणन्यासमर्धेन्दुमौले-
र्च्यं भर्तुस्त्रिभुवनगुरोरर्हतः सत्सपर्यैः ।
शश्वत्सिद्धैरुपहृतबलिं भक्तिनम्रः परीयाः
पापापाये प्रथममुदितं कारणं भक्तिरेव ॥ ६५ ॥

तत्रेति ॥ तत्र हिमवति । दृषदि शिलायां । "शिला दृषद्" इत्यमरः । त्रिभुवनगुरोः त्रिभुवनानां गुरुर्हितोपदेशकस्तस्य भर्तुः स्वामिनः ।

१ रुपचितबलिमित्यपि पाठः ।

अर्धेन्दुमौलेः इंदोरर्धं अर्धेंदुः समेर्धमिति तत्पुरुषसमासे सूक्त्वा- त्पूर्वनिपातः मौलिरिव मौलिः अर्धेंदोर्मौलिस्तस्य । " चूडाकिरीटके शाश्च संयता मौलयस्त्रयः " । इत्यमरः । उपहृतवलिम् उपहृतः कृतः बलिः यस्मै तथोक्तस्तम् । अर्च्यम् अर्चितुं योग्यस्तं पूजनीयम् । व्यक्तं व्यज्यते स व्यक्तस्तं निवृत्तम् । चरणन्यासं न्यसनं न्यासः चरणयोर्न्यासस्तम् । " पदङ्घ्रिश्चरणोऽस्त्रियाम् " इत्यमरः । पादन्यासप्रतिबिम्बमित्यर्थः । भक्तिनम्रः भक्त्या नमनशीलः सन् । " नमूकम्प्यजस्कंपीति रः" । परीयाः प्रदक्षिणीकुरु । "परिपूर्वादिण्- गतौ " इति धातोर्लिङ् । तदाहि पापापाये कर्मनिवारणे । भक्ति- रेव गुणानुराग एव । प्रथमं मुख्यम् । कारणं निदानम् । उदितं भाषितम् । " उक्तं भाषितमुदितम् " इत्यमरः । एकांतरिताधवे- ष्टितमिदं ॥ ६५ ॥

यस्मिन्दृष्टे करणविगमादूर्ध्वमुद्धूतपापाः
सिद्धक्षेत्रं विदधति पदं भक्तिभाजस्तमेनम् ।
दृष्ट्वा पूतस्तमपि भवताद्धि पुनर्दूरतोऽमुं
कल्पिष्यन्ते[1] स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ६६ ॥ ५७ ॥

यस्मिन्निति ॥ यस्मिन् चरणन्यासे । दृष्टे प्रेक्षिते सति । भक्ति- भाजः भाक्तिकजनाः । उद्धूतपापाः निर्मूलितपापाः सन्तः । करण- विगमात् करणस्य गात्रस्य विगमात् त्यागात् । ऊर्ध्वम् अनन्तरम् । " करणं साधकतमक्षेत्रगात्रेन्द्रियेष्वपि " इत्यमरः । सिद्धक्षेत्रं मुक्तिस्थानम् । विदधति कुर्वन्ति । त्वमपि भवानपि । तमेनं पदं तदेव चरणम् न्यासम् । दृष्ट्वा अवलोक्य । पूतः पवित्रः । " पूतं पवित्रं मेध्यं च " इत्यमरः । भवतात् भव । पुनः पश्चात् । अमुं चरणन्यासम् । अश्रद्धधानाः अविश्वसन्तः पुरुषाः । स्थिरगणपद-

[1] संकल्पन्ते इत्यपि पाठः ।

प्राप्तये स्थिरं शाश्वतं यद्गणानां द्वादशानां पदं स्थानं समवसरणं तस्य प्राप्तये लब्धये । अत्र गणपदस्य स्थिरत्वविशेषणं तत्रस्थजीवानां क्षुधादिदोषाभावात्परमस्वास्थ्यं सूचयति । दूरतः दविष्ठदेशात् । वै स्फुटम् । कल्पिष्यन्ते समर्था भविष्यन्ति । "क्लृपोऽर्हि सामर्थ्ये" । कर्मणि लृट् । तच्चरणन्यासश्रद्धाभावे मिथ्यादृष्टित्वं स्यात् समवसरणं प्राप्तुं समर्था न भवन्तीति तात्पर्यम् । इदं ह्यन्तरिताधवेष्टिवं ॥ ६६ ॥

तस्योपान्ते रिरचयिषवो नूनमातोद्यगोष्ठीं
शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः ।
तत्रासेवां विततनुषुभिर्लोकभर्तुर्जिनस्य
संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ॥ ६७ ॥

तस्येति ॥ तस्य चरणन्यासस्य । उपान्ते समीपे । आतोद्यगोष्ठीं वादित्रगोष्ठीम् । " चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् " इत्यमरः । नूनं निश्चयेन । रिरचयिषवः रचितुमिच्छवः । अनिलैः वायुभिः । पूर्यमाणा ध्मायमानाः । कीचकाः वेणुविशेषाः । " वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः " इत्यमरः । मधुरं मनोहरं यथा तथा । शब्दायन्ते शब्दं कुर्वन्ति स्वनन्तीत्यर्थः । " शब्दादिकृङि वा " इति क्यङ् । अनेन वंशवाद्यसम्पत्तिरुक्ता । तत्र पवित्रस्थाने । लोकभर्तुः त्रिलोकस्वामिनः । जिनस्य अर्हतः । आसेवाम् आराधनाम् । विततनुषुभिः वितनितुमिच्छुभिः विस्तरितुमिच्छुभिरित्यर्थः । संरक्ताभिः रक्तकण्ठीभिरिति वा संसक्ताभिरिति वा पाठः । वाद्यानुरक्ताभिः किन्नरीभिः किन्नरस्त्रीभिः । त्रिपुरविजयः त्रयाणां पुराणाम् औदारिकतैजसकार्मशरीराणां समाहारः त्रिपुरम् । "दिगधिकसञ्ज्ञातद्धितोत्तरपद–" इत्यादिना समाहारसमासः । " पुरं

पाटलिपुत्रे स्याद्गृहोपरिगृहे पुरम्। "पुरं पुरे शरीरे च गुग्गुले कथितः पुरः। पुराव्ययं पूर्वकाले" इति विश्वः। तस्य विजयोऽभिषवः गीयते स्तूयते। एकान्तरितार्धवेष्टितमिदम् ॥ ६७ ॥

वेणुष्वेषु स्फुटमिति तदा मन्द्रतारं ध्वनत्सु
प्रोद्गायन्तीष्वतिकलकलं तज्जयं किन्नरीपु।
निर्ह्रादी ते मुरव इव चेत्कन्दरीपु ध्वनिः स्यात्
सङ्गीतार्थो ननु पशुपतेस्तत्रभावी समस्तः ॥ ६८ ॥ ५८ ॥

वेणुष्विति ॥ तदा तत्समये। एषु वेणुषु। तेषु वंशेषु। "शतपर्वा यवफलो वेणुमस्करतेजनाः" इत्यमरः। स्फुटं व्यक्तम्। मन्द्रतारं गम्भीरोच्चैः स्वरद्वयं यथा तथा। "मन्द्रस्तु गम्भीरे तारोत्युच्चैः" इत्युभयत्राप्यमरः। इति उक्तप्रकारेण। ध्वनत्सु कूजत्सु सत्सु। किन्नरीपु किन्नरस्त्रीपु। तज्जयं त्रिपुरजयम्। अतिकलकलं प्रकृष्टकलकलध्वनिर्यथा तथा। प्रोद्गायन्तीपु गायनं कुर्वन्तीपु सतीपु। कन्दरीषु दरीषु। "दरी तु कन्दरो वा स्त्री" इत्यमरः। ते तव ध्वनिः शब्दः। निर्ह्रादी ध्वनिमान्। "स्वाननिर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः" इत्यमरः। मुरव इव मुरजवत्। स्याच्चेत् यदि भवेत्तर्हि। तत्र तच्चरणसमीपे। पशुपतेः पशून् मन्दबुद्धीन् पाति रक्षति इति पशुपतिः। तस्य हितोपदेष्टुः जिनेश्वरस्येत्यर्थः। कथमर्हतः पशुपतिनामेति नाशङ्कनीयम्। "सर्वज्ञः सुगतो जिनः पशुपतिः" इति बहुलमुपलम्भात्। समस्तः सकलः। सङ्गीतार्थः सङ्गीतवस्तु। "अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु" इत्यमरः। ननु निश्चयेन। भावि भविष्यन्। गम्यादिर्वत्स्यतीति साधुः। इदमनन्तरितार्धवेष्टितं ॥ ६८ ॥

---

१ मारुतरंध्रपूर्णवेणुबोधककीचकपदेनैव विशेषणजन्यार्थलाभे विशेषणस्य वैयर्थ्यमिति नैयायिका विशिष्टवाचकानां पदानां सति पृथग्विशेषणे विशेष्यमात्रपरत्वमिति न्यायादिति वदंति। निर्ह्रादस्ते इत्यपि पाठः। २ मुरज इवेत्यपि पाठः।

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषान्
तस्यादूरे कुकविकविताकल्पितं तत्प्रतीयाः ।
हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रं
दण्डेनाविष्कृतमिव गुहद्वारकं वैजयार्थम् ॥ ६९ ॥

प्रालेयाद्रेरिति ॥ प्रालेयाद्रेः हिमवद्गिरेः । उपतटं तटसमीपे । "शब्दप्रथा" इत्यव्ययीभावः । तांस्तान् प्रदेशान् । "वीप्सायाम्" इति द्विरुक्तिः । विशेषान् प्रष्टव्यार्थान् । "विशेषोऽवयवे द्रव्ये प्रष्टव्योत्तमवस्तुनि" इति शब्दार्णवे । अतिक्रम्य दर्शंदर्शं गत्वा । तस्य हिमाद्रेः । अदूरे समीपे । यत् भृगुपतियशोवर्त्म भृगुपतेः जामदग्न्यस्य यशसः कीर्तेः वर्त्म प्रवृत्तिकारणमित्यर्थः । हंसद्वारं हंसानां द्वारं मानसंप्रस्थायिनो हंसाः क्रौञ्चरन्ध्रेण सञ्चरन्तीति तदागमः । क्रौञ्चरंध्रं क्रौञ्चस्याद्रेः रन्ध्रं विवरं तत् कुकविकविताकल्पितम् कुत्सितकवित्वरचितं लौकिकजनैः कल्पितमित्यर्थः । दण्डेन चक्रपतिकरस्थरत्नेन । आविष्कृतं प्रादुष्कृतं उद्घाटितमित्यर्थः । वैजयार्थं चक्रिणां विजयस्य अर्थः विजयार्थः रजताद्रेः विजयस्यार्थस्येदं वैजयार्थम् । गुहाद्वारकमिव द्वारमेव द्वारकं गुहायाः द्वारकं कन्दरद्वारमिव । प्रतीयाः प्रतिविशेः । अत्र क्रौञ्चरन्ध्रमिति क्वचिद्गुहाविवरस्य विजयार्धगुहोपमया महत्त्वं लक्ष्यते ॥ ६९ ॥

एकान्तरितार्धवेष्टितानीतः—

बह्वाश्चर्ये हिमवति कृतालोकनत्वादसङ्ग-
स्तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
कृष्णः सर्पो गुरुरिव गिरेर्गह्वरान्निष्पताशु
श्यामः पादो बलिनियमनेऽभ्युद्यतस्येव विष्णोः ॥७०॥५९॥

बह्वीति ॥ बह्वाश्चर्ये बहु आश्चर्यं यस्मिन् तस्मिन् । हिमवति हि-

माचले । कृतालोकनत्वात् विहितदर्शनत्वात् । असङ्गः सङ्गहीनः । तिर्यगायामशोभी तिर्यगायामेन क्षिप्रप्रवेशार्थं तिरश्चीनदैर्घ्येण शोभत इति तिर्यगायामशोभी सन् । ताच्छील्ये घिनञ् । "दैर्घ्यमायाम आरोहः" इत्यमरः । तेन मार्गेण । उदीचीं दिशम् उत्तरादिशम् । अनुसरेः अनुगच्छ । गिरेः क्रौञ्चगिरेः । गह्वरात् गुहाद्वारात् । "दरी तु कन्दरो वा स्त्री देवखातविले गुहा । गह्वरम्" इत्यमरः । गुरुर्महान् । कृष्णः सर्प इव कालोरग इव । वलिनियमने वलेः बलिनामविप्रस्य नियमने बन्धने । अभ्युद्यतस्य प्रवृत्तस्य । विष्णोः विष्णुमुनेः । श्यामः कृष्णवर्णः । पाद इव चरण इव । आशु शीघ्रम् । निष्पत निर्गच्छ ॥ ७० ॥

तस्माद्धूमप्रचय इव निःसृत्य शैलस्य रन्ध्रा
द्गत्वा चोर्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः ।
शुभ्रादभ्रस्फटिकघटनाशोभिगण्डोपलस्य
कैलासस्य त्रिदशवनितादर्पणस्याऽतिथिः स्याः ॥ ७१ ॥

तस्मादिति ॥ शैलस्य क्रौञ्चाचलस्य । तस्मात् रन्ध्रात् तद्विवरात् । धूमप्रचय इव धूमसमूह इव । निःसृत्य निष्क्रम्य । ऊर्ध्वं व्योममार्गम् । गत्वा च चलित्वापि । दशमुखभुजोच्छ्वासितप्रस्थसन्धेः दशमुखस्य रावणस्य भुजैरुच्छ्वासिताः विश्लेषिताः प्रस्थानां सानूनाम् "कटकोऽस्त्री नितम्बोऽद्रेः स्नुः प्रस्थः सानुरस्त्रियाम्" इत्यमरः । सन्धयो यस्य तथोक्तस्तस्य । "रन्ध्र संश्लेषयोः सन्धिः" इति धनञ्जयः । एतत्कथावतारः पुण्यास्रवे द्रष्टव्यः । शुभ्रादभ्रस्फटिकघटनाशोभिगण्डोपलस्य शुभ्राणां निर्मलानाम् अदभ्राणां स्थूलानां स्फटिकानां घटनया शोभिनो मनोहराः गण्डोपलाः यस्य तथोक्तस्तस्य । "अदभ्रं भूरि भूयिष्ठम्" इति धनञ्जयः । "गण्डशैलास्तु च्युताः स्थूलोपला गिरेः" इत्यमरः । त्रिदशवनितादर्पणस्य त्रिदश-

स्य स्वर्गस्य वनितानां दर्पणम् आदर्शः तस्य । स्वस्सीमन्तिनीनां संमुखीनीनोपमस्य राजतत्वाद्भिम्बग्राहित्वाद्धेदमुक्तम् । कैलासस्य अष्टापदगिरेः । अतिथिः पूज्यः । " अतिथिर्ना गृहागते " इत्यमरः । स्याः भव । कैलासाचलस्य प्रान्तं व्रजति तात्पर्यम् ॥ ७१ ॥

क्षीरादच्छच्छविभिरभितः प्रोच्चलन्निर्झरौघैः
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खम् ।
नृत्तारम्भे प्रतिकृतिगतस्यादिभर्तुः पुरस्ता-
द्राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः ॥ ७२ ॥ ६०॥

क्षीरादिति ॥ यः कैलासाचलः । क्षीरात्पयसोपि । अच्छच्छविभिः निर्मलकान्तिभिः । " त्रिष्वागाधात्प्रसन्नोच्छः " इत्यमरः । अभितः परितः । प्रोच्चलन्निर्झरौघैः प्रोच्चलतामुद्गच्छतां निर्झराणां प्रवाहाणामोघैः समूहैः । कुमुदविशदैः कुमुदवद्विशदैः । " सिते कुमुदकैरवे । विशदश्येतपाण्डराः" इत्यमरः । शृङ्गोच्छ्रायैः शिखराणामुन्नतिभिः । " नगाद्यारोह उच्छ्राय उत्सेधश्चोच्छ्रयश्च सः " इत्यमरः । खम् आकाशम् । " सुरवर्त्म खम् " इत्यमरः । वितत्य व्याप्य । प्रतिकृतिगतस्य । प्रतिमात्मकस्य । "प्रतिकृतिरर्चा पुंसि प्रतिनिधिः" इत्यमरः । आदिभर्तुः आदिजिनेश्वरस्य । पुरस्तात् अग्रतः । त्र्यम्बकस्य ईशानदिक्पतेः । नृत्तारम्भे आनन्दनर्तनप्रारम्भे । " लास्यं नृत्तं च नर्तने " इत्यमरः । अट्टहासः हासभेदः । " अट्टोऽतिशयभूमौ " इति यादवः । " अट्टहासो महत्तरे " इति विदग्धचूडामणौ । हासादीनां धावल्यं कविसमयसिद्धम् प्रतिदिनं दिनं प्रति । राशीभूत इव पुञ्जीभूत इव । स्थितः तिष्ठति स्म ॥ ७२ ॥

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
शोभामद्रेर्वटतरुमतो मण्डलभ्राजितस्य ।

सद्यः कृत्तद्विरदरदनच्छेदगौरस्य तस्य
प्रालेयांशोर्ग्रसितुमनसा[1] राहुणेवाश्रितस्य ॥ ७३ ॥

उत्पश्यामीति ॥ स्निग्धभिन्नाञ्जनाभे स्निग्धं मसृणं भिन्नं मर्दितं च यदञ्जनं तस्य आभेव आभा यस्य तस्मिन् । त्वयि भवति । तटगते सानुगते सति । वटतरुमतः वटवृक्षवतः । मण्डलभ्राजितस्य बिम्बेन वृत्तेन राजितस्य । " बिम्बोऽस्त्री मण्डलं त्रिपु " इत्यमरः । सद्यः तत्क्षणे । कृत्तद्विरदरदनच्छेदगौरस्य कृत्तस्य छिन्नस्य द्विरदरदनस्य गजदन्तस्य छेदवत् भागवत् गौरस्य शुभ्रस्य । " अवदातः सितो गौरोवलक्षो धवलोऽर्जुनः " इत्यमरः । इदं विशेषणत्रयमुभयत्राप्यन्वीयते । ग्रसितुमनसा ग्रसितुं मनो यस्य तेन । राहुणा स्वर्भानुना । आश्रितस्य संयुक्तस्य । प्रालेयांशोरिव चन्द्रस्येव । तस्याद्रेः कैलासस्य । शोभां द्युतिम् । उत्पश्यामि उत्प्रेक्षे । शोभा भविष्यतीति तर्कयामीत्यर्थः ॥ ७३ ॥

त्वय्यारूढे शिखरमभितोऽधित्यकां तस्य मन्ये
पार्श्वाग्रे वा पुनरपि दशास्यावतारप्रपञ्चम् ।
लीलामद्रेस्तिमितनयनप्रेक्षणीयां भवित्री-
मंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ७४ ॥ ६१ ॥

त्वयीति ॥ तस्य कैलासस्य शिखरमभितः शिखरस्य सर्वतः । " हाधिक्समया " इत्यादिना द्वितीया । अधित्यकाम् ऊर्ध्वभूमिम् । " उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका " इत्यमरः । त्वयि भवति । आरूढे निविष्टे सति । पुनरपि प्रागिव पश्चादपि । दशास्यावतारप्रपञ्चं दशास्यस्य रावणस्य अवतारस्य प्रपञ्चं विस्तारम् । " विपर्यासे विस्तरे च प्रपञ्चः " इत्यमरः । मन्ये जाने । पार्श्वाग्रे वा पार्श्वपरिभागे वा । वाशब्दः पक्षान्तरे । " उपमायां विकल्पे वा " इत्यम-

[1] तुंकाममनसोरपीति, तुमनो मकारलोपः ।

रः । त्वयि तदधित्यकायामारूढे सतीति पुनरन्वयः । मेचके श्यामले । " कालश्यामलमेचकाः " इत्यमरः । वाससि वस्त्रे । " वस्त्रमाच्छादनं वासः " इत्यमरः । हलभृतः बलभद्रस्य । मुसली हली " इत्यमरः । अंसन्यस्ते अंसे भुजशिरसि । न्यस्यते स्म तथोक्तं तस्मिन् । " स्कन्धो भुजशिरोंसोऽस्त्री " इत्यमरः । सति अस्तीति सन् तस्मिन् सति । इव यद्वत् तद्वत् । अद्रेः कैलासस्य । भवित्री भाविनीम् । स्तिमितनयनप्रेक्षणीयां स्तिमिताभ्यां निर्निमिषाभ्यां नयनाभ्यां प्रेक्षणीयां दर्शनीयाम् अतिप्रकृष्टामित्यर्थः । लीलां शोभामिति वा पाठः । मन्ये जानामि । " बुद्धिमति " ज्ञाने । त्वयि अग्रभागस्थे बलभद्रभुजशिरःस्थितश्यामवस्त्रेणोत्प्रेक्ष्यते इत्यर्थः ॥ ७४ ॥

अनन्तरितार्धवेष्टितम्—

तस्मिन्हित्वा भुजगवलयं शम्भुना दत्तहस्ता
सम्प्राप्योच्चैर्विरचित इवानीलरत्नैस्त्वयीयम् ।
क्रीडाशैले यदि च विहरेत्पादचारेण गौरी
मास्म स्फूर्जः सितिफणिभयान्मास्म संक्लेदिनीभूत् ७५

तस्मिन्निति ॥ तस्मिन् कैलासे । भुजगवलयं भुजग एव वलयं तत् । " कटकं वलयोऽस्त्रियाम् " इत्यमरः । हित्वा मुक्त्वा । शम्भुना ईशानदिगीशेन । दत्तहस्ता दत्तो हस्तो यस्याः सा वितीर्णकरावलम्बा । इयं गौरी पार्वती । संप्राप्य समागत्य । आनीलरत्नैः इन्द्रनीलमणिभिः । विरचिते कल्पिते । उच्चैः महति । क्रीडाशैल इव क्रीडाद्राविव । त्वयि भवति । पादचारेण चरणगमनेन यानादि हित्वेत्यर्थः । यदि च विहरेत् सञ्चरेत्तर्हि । मास्म स्फूर्जः मास्म गर्जः । " टुओस्फूर्जा " वज्रनिर्घोषे । लङ् । सितिफणिभयात् सितिश्चासौ फणिश्च सितिफणिः कालोरगः । " सिती धवलमेचकौ " इत्यमरः । स इति भयात् भीतेः । संक्लेदिनी मनःखेदवती । मास्म भूत् न भव-

तु । क्रीडाशैल इति त्वदुपरि विहरणे त्वं गर्जयसि चेत् तस्याः का-
लोरग इति भीतिर्भवेत् इति तात्पर्यम् ॥ ७५ ॥

एकान्तरितार्धवेष्टितम्—

इन्द्राणी चेदुपगतवती जैनगेहानुपातं
तस्मिन्निज्यां रचयितुमना देवभक्त्या तदास्याः ।
भङ्गीभक्त्या विरचितवपुस्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रचारी ॥ ७६ ॥ ६२ ॥

इन्द्राणीति ॥ तस्मिन् कैलासे । इन्द्राणी शची महादेवी । "वरुणेन्द्रमृडभवशर्वरुद्रान्" इत्यान् । "नृडुग्" इति ङी । इज्यां जिनेन्द्रपूजाम् । रचयितुमनाः कर्तुमनाः सती । देवभक्त्या अर्हद्भक्त्या । जैनगेहानुपातं चैत्यालयसमीपम् । उपगतवती चेत् आगता चेत् । तदा तत्समये । त्वं भवान् । भङ्गीभक्त्या भङ्गीनां पर्वाणां भक्त्या रचनया । विरचितवपुः कल्पितशरीरः सन् । "भक्तिर्निषेवणे भागे रचनायाम्" इति शब्दार्णवे । स्तम्भितान्तर्जलौघः स्तम्भितो घनीभावं गमितोन्तर्जलौघः प्रवाहो यस्य तथाभूतः सन् । मणितटारोहणाय मणीनां तटं तस्यारोहणाय । अग्रचारी पुरोगः सन् । अस्याः इन्द्राण्याः । सोपानत्वं सोपानभावम् । कुरु विधेहि ॥ ७६ ॥

अनन्तरितार्धवेष्टितम्—

अन्तस्तोयोच्चलनसुभगां भाविनीं तामवस्थां
मन्वानास्तास्सुनिभृततरं सानुदेशे निषण्णम् ।
तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ॥ ७७ ॥

१ अग्रयायीत्यपि पाठः । २ वलयानां कुलिशत्वेन रूपणमपि संगच्छते ।

अन्तस्तोय इति ॥ अन्तस्तोयोच्चलनसुभगाम् अन्तर्जलस्योद्गमनेन सुन्दराम् । भाविनीं भवित्रीम् । तामवस्थां प्राक्कुर्वद्वृष्टिस्वरूपाम् । मन्वानाः मन्वते इति मन्वानाः जानन्त्यः । ताः सुरयुवतयः त्रिदिववनिताः । तत्र कैलासे । सानुदेशे तटप्रदेशे । सुनिभृततरं सुनिश्चलतरम् । निषण्णम् उपविष्टम् । वलयकुलिशोद्घट्टनोद्गीर्णतोयं वलयकुलिशानि कङ्कटकोटयः शतकोटिवाचिना कुलिशशब्देन कोटिमात्रं लक्ष्यते । तैरुद्घटनानि प्रहारास्तैरुदीर्णमुत्सृष्टं तोयं येन तम् । त्वां भवन्तम् । यन्त्रधारागृहत्वम् कृत्रिमधारागृहत्वम् । अवश्यं नूनम् । नेष्यन्ति प्रापयिष्यन्ति ॥ ७७ ॥

आकर्षन्त्यो दृतिमिव सरस्तोयपूर्णामधस्तात्
क्रीडिष्यन्ति त्रिदशवनितास्त्वामितश्चामुतश्च ।
ताभ्यो मोक्षो यदि तव सखे घर्मलब्धस्य न स्या-
त्क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भीषयेस्ताः ॥ ७८ ॥ ६२ ॥

आकर्षन्त्य इति ॥ सरस्तोयपूर्णां कासाराम्भःसम्पूर्णाम् । दृतिमिव चर्मपात्रमिव । "दृतिश्चर्मघटे रुषे" इति विश्वः । अधस्तात् अधोभागे । इतश्चामुतश्च अस्माच्चामुष्माच्च । त्वां भवन्तम् । आकर्षन्त्यः नयन्त्यः । त्रिदशवनिताः त्रिदिवरमण्यः । क्रीडिष्यन्ति क्रीडां करिष्यन्ति । "क्रीड" विहरणे । लृट् । सखे भो मित्र । घर्मलब्धस्य घर्मे निदाघे "घर्मो निदाघः स्वेदः स्यात्" इत्यमरः । लब्धस्य प्राप्तस्य । तव भवतः । ताभ्यः सुरयुवतिभ्यः । मोक्षः विमोचनम् । यदि न स्यात् न भवेच्चेत् । तदा । क्रीडालोलाः क्रीडासक्ताः प्रमत्ता इत्यर्थः । ताः सुरयुवतीः । श्रवणपरुषैः श्रवणानां कर्णानां परुषैः निष्ठुरैः । "निष्ठुरं परुषम्" इत्यमरः । गर्जितैः स्तनितैः । भीषयेः । "विभीतेर्भिश्च" इति भीपादेशः । तर्जयेत्यर्थः ॥ ७८ ॥

कृच्छ्रान्मुक्तो विविधकरणैस्तत्र रंत्वाऽथ ताभि-
भूयः शैले विहर गमितो वायुनाप्तव्रणाङ्कम् ।
हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन्कामं क्षणमुखपटप्रीतिमैरावणस्य ॥ ७९ ॥

कृच्छ्रादिति ॥ अथ अनन्तरे । तत्र शैले । ताभिः देवनारीभिः । विविधकरणैः विविधेन्द्रियैः । नानाक्रीडासाधनैर्वा । " करणं साधकतमक्षेत्रमात्रेन्द्रियेष्वपि " इत्यमरः । रंत्वा क्रीडित्वा । कृच्छ्रात् कष्टात् । मुक्तः त्यक्तः । " ङसिभ्यांभ्यस्तोकाल्पकतिपयकृच्छ्राद-सत्त्वे " इति पञ्चमी । भूयः पुनः । वायुना वातेन । आप्तव्रणाङ्कं प्राप्तव्रणावयवम् । " अङ्कं प्रतीकोऽवयवोपघनः " इत्यमरः । गमितः । मानसस्य मानससरोवरस्य । हेमाम्भोजप्रसवि हेमाम्भोजानां प्रसवि प्रसवनमस्यास्तीति प्रसवि " स्यादुत्पादे फले पुष्पप्रसवे गर्भमोचने " इत्यमरः । सलिलं जलम् । आददानः स्वीकुर्वाणः । पिबन्नित्यर्थः । ऐरावणस्य इन्द्रगजस्य । " ऐरावतोऽभ्रमातङ्गैरावणाऽभ्रमुवल्लभाः " इत्यमरः । क्षणमुखपटप्रीतिं क्षणे मानसजलादानकाले मुखपटेन या प्रीतिस्ताम् । कुर्वन् वितन्वन् । जिनेन्द्रपूजार्थमागतशक्रस्य गजेन्द्रमुखाग्रभागेऽपि क्षणं तिष्ठन्नित्यर्थः । कामं यथेच्छया । " कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम् " इत्यमरः । शैले कैलासनगे । विहर सञ्चर ॥ ७९ ॥

क्रीडाद्रीणां कनकशिखराण्यावसंस्तत्र पश्यन्
स्वर्गस्त्रीणां निधुवनलतागेहसम्भोगदेशान् ।
धुन्वन्कल्पद्रुमकिसलयान्यंशुकानि स्ववातै-
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥ ८० ॥ ६४ ॥

क्रीडाद्रीणामिति ॥ जलद भो मेघ । तत्र कैलासे । क्रीडाद्रीणां

क्रीडापर्वतानाम् । कनकशिखराणि स्वर्णकूटानि "वसोनूपाध्याङः" इत्याधारे द्वितीया । आवसन् आस्थितवान् । स्वर्गस्त्रीणांदेवस्त्रीणाम् । निधुवनलतागेहसम्भोगदेशान् सुरतलताभावनसम्भोगप्रदेशान् । पश्यन् ईक्षमाणः । कल्पद्रुमकिसलयानि कल्पद्रुमाणां किसलयानि पल्लवभूतानि " पल्लवोऽस्त्री किसलयम् " इत्यमरः । अंशुकानि सूक्ष्मवस्त्राणि । " अंशुकं वस्त्रमात्रे स्यात्परिधानोत्तरीययोः । सूत्रे वस्त्रे सानुदीप्तौ " इति शब्दार्णवे । नानाचेष्टैः नाना विविधाश्चेष्टा येषु तैः । ललितैः क्रीडितैः । " नाभावभेदे स्त्रीनृत्ये ललितं त्रिपु सुन्दरे । अस्त्रियां प्रमदारामे क्रीडिते जातपल्लवे " इति शब्दार्णवे । स्ववातैः निजवायुभिः । धुन्वन्कम्पयन् । तं नगेन्द्रं तं कैलासम् । निर्विशः उपभुंक्ष्व । " निर्विशो भृतिभोगयोः " इति विश्वः । मेघ-पर्वतरङ्गियचन्द्र्योः शिखिजीमूतयोर्दृष्टिरम्ययोः । स्वयंदर्शनान्मि-त्रता भवेदिति भावः ॥ ८० ॥

इतःपादवेष्टितानि—

> विद्युद्दाम्ना वलयिततनुस्तत्र वध्र्येव रुद्धो
>
> दीर्घं स्थित्वा सरति पवने मन्दमन्दं दिनान्ते ।
>
> तस्मादद्रेरवतर पुरीं स्वेष्टकामो धनीशां
>
> तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलाम् ॥ ८१ ॥

विद्युदिति ॥ तत्र कैलासे । वध्र्या नध्र्या "वध्री नध्री वरत्रा स्यात्" इत्यमरः । रुद्ध इव आवृतवत् । विद्युद्दाम्ना तडिन्मालया । वलयित-तनुः आवेष्टितशरीरः । दीर्घं चिरम् । स्थित्वा विश्रामं कृत्वा । दि-नान्ते सायाह्ने । पवने वायौ । मन्दमन्दं शनैःशनैः । वीप्सायां द्विः । सरति वाति सति । प्रणयिन इव प्रियतमस्येव । तस्य कैलासस्य । उ-त्सङ्गे ऊर्द्धतटे । "उत्सङ्गो मुक्तसंयोगे सक्थिन्यूर्ध्वतटेपि च" इति मालायाम् । स्रस्तगङ्गादुकूलां विश्लिष्टं गङ्गा एव दुकूलं शुभ्रवस्त्रं यस्यास्ताम् । " दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके " इति श-

ब्दार्णवे । धनीशां धनिनामीशस्तेषां यक्षाणाम् । पुरीं अलका-ख्याम् । स्वेष्टकामः स्वेष्टाभिलाषी । तस्मादद्रेः कैलासपर्वतात् । अव-तर उपगच्छ ॥ ८१ ॥

दृष्टाध्यात्मस्थितिरधिगताशेषवेद्यः सविद्यो
योगाभ्यासाद्भुवनमखिलं सञ्चरन्दूरदर्शी ।
लक्ष्म्याः सूतिं भुवनविदितां तां पुरीं तत्र साक्षा-
न्न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ॥ ८२ ॥

दृष्ट्वेति ॥ कामचारिन् भो यथेष्टविहारिन् । त्वं भवान् । योगा-भ्यासात् ध्यानपरिचयात् । दृष्टाध्यात्मस्थितिः आत्मन्यधिकृत्यवर्त-मानमध्यात्मं दृष्टा अध्यात्मस्थितिर्येन सः । आत्मस्वरूपं दृष्टवानि-त्यर्थः । अधिगताशेषवेद्यः ज्ञाताखिलपदार्थः । सविद्यः विद्याभिः सहितः । दूरदर्शी विद्वान् । “ दूरदर्शी दीर्घदर्शी ” इत्यमरः । अ-खिलं निखिलम् । भुवनं जगत् । सञ्चरन् विहरन् । लक्ष्म्याः स-म्पत्तेः । सूतिम् उत्पत्तिगृहम् । भुवनविदितां लोकप्रथिताम् । ता-मलकाम् अलकाभिधां पुरीं पुरम् । दृष्ट्वा वीक्ष्य । पुनः पश्चात् । तत्र पुर्याम् । साक्षात् प्रत्यक्षेण । न त्वं ज्ञास्यसि न वेत्स्यसि इति न किन्तु ज्ञास्यस्येवेत्यर्थः । कामचारिणस्ते पूर्वमपि बहुकृत्वो दर्शनसम्भवात् अज्ञानमसंभावितमेवेति निश्चयार्थं नञ्द्वयप्रयोगः । तदुक्तम् । नि-श्चयसिद्धार्थेषु नञ्द्वयप्रयोग इति ॥ ८२ ॥

निर्वाणार्थं तितपसिषवोऽमी स्वयं क्लेशयन्ति
व्यर्थोद्योगा मयि तु वितृषः किन्नुमत्तोऽधिकं तत् ।
इत्याकूताद्विहसितमिवाम्भोमुचामिन्दुशुभ्रं
या वः काले वहति सलिलोद्गारमुच्चैर्विमाना ॥ ८३ ॥

निर्वाणार्थमिति ॥ अमी इमे योगिनः । निर्वाणार्थं मोक्षार्थम् ।

" मुक्तिः कैवल्यनिर्वाणम् " इत्यमरः । तितपसिषवः तप्तुमिच्छवः तितपसिषवः तपः कर्त्तुमिच्छवः । " तप सन्तापे " इति धातोः सन्नन्तादुत्यः । तु पुनः । मयि अलकापुर्याम् । वितृषः विगता तृट् अभिलाषो येषां ते वितृषः । " इच्छा काङ्क्षा स्पृहेहा तृड्वाञ्छा लिप्सा मनोरथः " इत्यमरः । व्यर्थोद्योगाः निष्फलव्यापाराः सन्तः । स्वयम् आत्मानम् । क्लेशयन्ति आयासयन्ति । तत् निर्वाणम् । मत्तः मत्सकाशात् । अधिकम् उत्कृष्टम् किं नु भवेत् किंस्वित् । "नु पृच्छायां वितर्के च" इत्यमरः । इत्याकूतात् एवमभिप्रायात् । या पुरी । उच्चैर्विमाना । उन्नतसप्तभूमिकभवना । " विमानं त्रिदिवे याने सप्तभूमौ च सद्मनि " इति यादवः । मेघवाहस्थानसूचनार्थमिदं विशेषणम् । अम्भोमुचां मेघानाम् । वः पयोधरात्मनां युष्माकं योगिनाम् । काले वर्षाकाल इत्यर्थः । विहसितमिव विहासमिव । इन्दुशुभ्रं चन्द्रवद्गौरम् । सलिलोद्गारं सलिलानामुद्गिरणम् । वहति धरति ॥८३॥

> सौधेयाग्रैर्गगनपरिपत्केतुमालाबलाकं
> रत्नोदग्रद्युतिविरचितेन्द्रायुधं प्रावृषेण्यम् ।
> धत्ते यासौ सजलकणिकासारमभ्रंलिहैः स्वै-
> र्मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ८४ ॥ ६५ ॥

सौधेयाग्रैरिति ॥ याऽसौ अलकापुरी । अभ्रंलिहैः आकाशस्पृष्टैः । " वहाभ्राल्लिहः " इति खच् । " खित्युकः " इति मम् । स्वैः स्वकीयैः । सौधेयाग्रैः सौधानामिमानि सौधेयानि तानि च तानि अग्राणि च तैः । " अग्रं पुरःशिखामानश्रेष्ठाधिकफलादिषु " इति भास्करः । गगनपरिपत्केतुमालाबलाकं गगने परितः सीदन्तीति गगनपरिपन्तः " पद्लृ धातोर्गत्यर्थत्वात् " विचलन्तः ते च ते केतवश्च तथोक्तास्तेषाम् मालापङ्क्तिरिव बलाकाः पक्षिविशेषाः यस्य तत् । रत्नोदग्रद्युतिः विरचितेन्द्रायुधम् । रत्नानामुदग्रया उच्छ्रितया द्युत्या कान्त्या विर-

चितं निर्मितम् । इन्द्रायुधं सुरधनुर्यस्य तत् । "इन्द्रायुधं शक्रधनुः" इत्यमरः । सजलकणिकासारं जलानां कणिकाः जलकणिकाः जलबिन्दवः जलकणिकानामासारेण वेगवद्वर्षेण सहितं सजलकणिकासारम् । प्रावृषेण्यं प्रावृषि भवं प्रावृषेण्यं "प्रावृषे ण्यः" इति ण्यप्रत्ययः । अभ्रवृन्दं मेघजालम् । कामिनी प्रमदा । मुक्ताजालग्रथितं मुक्ताजालैः मौक्तिकजालकैः ग्रथितं प्रत्युप्तम् । "पुंश्चल्यां मौक्तिके मुक्ते" इति यादवः । "ग्रथितं ग्रन्थितं दृब्धम्" इत्यमरः । अलकमिव चूर्णकुन्तलमिव । जातावेकवचनम् । "अलकाश्चूर्णकुन्तलाः" इत्यमरः । धत्ते धरति । अत्र कालस्य अनुकूलनायकत्वमलकायाश्च स्वाधीनपतिकाख्यानायिकात्वं च ध्वन्यते ॥ ८४ ॥

यत्रानीलं हरिमणिमयाः क्षुद्रशैलानभोगं
प्रोद्यद्देवद्रुमपरिसरद्धूपधूमानुबन्धाः ।
प्रासादश्च प्रथयितुमलं सर्वदा मेघकालं
विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः ॥८५॥१॥१॥

यत्रेति ॥ यत्र पुर्याम् । हरिमणिमयाः इन्द्रनीलरत्नरूपाः । "यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु । शुकाहिकपिभेकेषु हरिर्ना कपिले त्रिषु" इत्यमरः । क्षुद्रशैलाः क्रीडाद्रयः । प्रोद्यद्देवद्रुमपरिसरद्धूपधूमानुबन्धाः धूपस्य धूमः धूपधूमः परितः सरतीति परिसरन् देवदारुद्रुमात्परिसरन् क्तः देवदारुद्रुमपरिसरंश्चासौ धूपधूमश्च तथोक्तः प्रोद्यन् प्रोद्गच्छंश्चासौ स चेति पुनः कर्मधारयः । तस्यानुबन्धः सम्बन्धो येषां ते तथोक्ताः । ललितवनिताः ललिता रम्या वनिताः स्त्रियो येषु ते । सचित्राः सहचित्रैर्वर्तन्ते सचित्राः । प्रासादाश्च हर्म्याश्च । आनीलम् आसमन्तान्नीलवर्णम् । नभोगम् आकाशगतम् । "गमः खड्डा" इति डत्यः । विद्युत्वन्तं क्षणरुचिमन्तम् । "स्तं मत्वर्थे" इति पदत्वाभावान्न जश्त्वम् । सेन्द्रं चापं सेन्द्रायुधम् । मेघकालं

वर्षाकालम् । सर्वदा अनवरतम् । प्रथयितुं प्रकाशयितुम् । अलंसमर्था भवन्तीति शेषः । अत्र कर्तृकर्मविशेषणानां परस्परसाम्यबिम्बप्रतिबिम्बभावेन तत्रोपमा दृश्यते ॥ ८५ ॥

प्रोच्चैः केकारवमुखरितान्नर्तयन्तो मयूरान्
हंसानुद्यत्करुणविरुतान्मानसे म्लानयन्तः ।
यत्राकाले विदधतितरां देवधिष्ण्येषु सन्ध्या-
सङ्गीताय प्रहतमुरजाः स्निग्धपर्जन्यघोषम् ॥ ८६ ॥ १ ॥२॥

प्रोच्चैरिति ॥ यत्र नगर्याम् । देवधिष्ण्येषु चैत्यालयेषु । "धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमरः । सन्ध्यासङ्गीताय सन्ध्यासु यद्विधीयते सङ्गीतं तस्मै । प्रहतमुरजाः ताडितमृदङ्गाः । केकारवमुखरितान् केकारवेण मयूरध्वनिना मुखरितान् वाचाटितान् । मयूरान् बर्हिणः । "मयूरो बर्हिणो बर्ही" इत्यमरः । प्रोच्चैरधिकं नर्तयन्तः नाटयन्तः । मानसे मानससरोवरे । उद्यत्करुणविरुतान् निर्गच्छत्करुणकूजितान् । हंसान् मरालपक्षिणः । म्लानयन्तः ग्लानयन्तः । अकाले अनियतावसरे । स्निग्धपर्जन्यघोषं स्निग्धो मसृणः पर्जन्यघोषो मेघध्वनिस्तम् । "पर्जन्यौ रसदब्देन्द्रौ" इत्यमरः । स्निग्धगम्भीरघोषमिति वा पाठः । विदधतितरां कुर्वन्तितराम् ॥ ८६ ॥

यत्राकीर्णे विततशिखराः सानका मन्द्रघोषं
विद्युद्भासा विरचिततनुं रत्नदीपानुयाताः ।
सौधाभोगास्तुलयितुमलं शश्वदोघं घनाना-
मन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः ॥ ८७ ॥ १ ॥ ३ ॥

यत्रेति ॥ यत्र यक्षपुर्याम् । विततशिखराः विस्तृतशृङ्गाः । सानकाः आनकेन पटहेन सहितास्तथोक्ताः । "आनकः पटहोऽस्त्री

१ स्निग्धगम्भीरघोषमित्यपि पाठः ।

स्यात्" इत्यमरः । रत्नदीपानुयाताः रत्नदीपैरनुगताः । मणिमयभुवः मणिमय्यः मणिविकाराः भुवो येषु ते । "नाभक्ष्याच्छादने मयट्" इति मयट् । अभ्रंलिहाग्राः अभ्रं लिहन्तीति अभ्रंलिहानि अभ्रंकषाणि । "वहाभ्रालिहः" इति खच् । "खित्युरुः" इत्यादिना मम् । अभ्रंलिहान्यग्राणि येषां ते तथोक्ताः । सौधाभोगाः प्रासादसर्वदेशाः । "आभोगः परिपूर्णता" इत्यमरः । आकीर्णं प्राप्तम् । मन्द्रघोषं गम्भीरध्वनिम् । "मन्द्रस्तु गम्भीरे" इत्यमरः । विद्युद्भासा तडित्कान्त्या । विरचिततनुं विहितशरीरम् । अन्तस्तोयं अन्तर्गतं तोयं यस्य तम् । तुङ्गम् उन्नतम् । घनानाम् मेघानाम् । ओघं समूहम् । "स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः" इत्यमरः । शश्वत् चिरम् । तुलयितुं समीकर्तुम् । अलं समर्थाः भवन्तीति शेषः । अत्र कर्तृकर्मणोः प्रतिपदं बिम्बप्रतिबिम्बभावेन साम्यं लक्ष्यते ॥८७॥

कूटोच्छ्रायैस्तुहिनविशदैः शारदानम्बुदौघान्
मन्द्रातोद्यध्वनिभिरुदधीनुच्चलद्वारिवेलान् ।
रत्नोदंशुप्रसररुचिरैर्भित्तिभागैः कुलाद्रीन्
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ ८८ ॥१॥४॥

कूटोच्छ्रायैरिति ॥ यत्र धनदनगर्याम् । प्रासादाः सौधाः । तुहिनविशदैः तुहिनं हिममिव विशदैः निर्मलैः । कूटोच्छ्रायैः शिखरोन्नतिभिः । शारदात् शरत्कालभवान् । अम्बुदौघान् मेघसमूहान् । मन्द्रातोद्यध्वनिभिः मन्द्रैर्गम्भीरैरातोद्यानां वाद्यानां ध्वनिभिः शब्दैः । उच्चलद्वारिवेलान् उच्चलत्कम्पमानं वारि यस्याः सा उच्चलद्वारिः सा वेला येषां तानीति पुनर्बहुव्रीहिः । बहुव्रीहेराश्रयलिङ्गत्वात्त्रिलिङ्ग्यां रूपं नीयते । उदधीन् समुद्रान् । रत्नोदंशुप्रसररुचिरैः रत्नानामुदंशूनामुद्गतकिरणानां प्रसरेण प्रवाहेण रुचिरैर्मनोहरैः । भित्तिभागैः कुड्यपार्श्वैः । "भित्तिः स्त्री कुड्यमेडूकम्" इत्यमरः । कुला-

त्रीन् कुलपर्वतान्। तैस्तैर्विशेषैः धर्मैः। त्वां भवन्तम्। तुलयितुम् उपमां कर्तुम्। अलं समर्था भवन्ति ॥ ८८ ॥

इतः पादवेष्टितेष्वेव कतिचित्पद्यानि पङ्क्तितानि क्रियन्ते—

पङ्क्तीभूताः श्रमजलकणैरार्द्रितप्रस्तरान्ता
बद्धोत्कण्ठस्तनतटपरामृष्टवर्णा विशीर्णाः।
सम्भोगान्ते श्रममुपचितं सूचयन्त्यङ्गरागा
यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गितानाम् ॥८९॥७॥१॥

पङ्क्तीभूता इति ॥ यत्र अलकापुर्याम्। सम्भोगान्ते सुरतावसाने। प्रियतमभुजोच्छ्वासितालिङ्गितानाम्। प्रियतमानां प्राणनाथानां भुजैः उच्छ्वसितानि श्रान्त्या जलसेकाय वा प्रशिथिलितान्यालिङ्गितानि यासां तासाम्। स्त्रीणां नारीणाम्। श्रमजलकणैः सुरतश्रमजनितजलबिन्दुभिः। पङ्क्तीभूताः प्रागपङ्क्ता इदानीं पङ्क्ता भवन्ति स्मेति तथोक्ताः। "कर्मकर्तृभ्यां प्रागतत्त्वे च्विः"। "च्वौ चास्यानव्ययस्येः" इतीकारः। आर्द्रितप्रस्तरान्ताः आर्द्रीभूतशय्यावसानाः। बद्धोत्कण्ठस्तनतटपरामृष्टवर्णाः रचितरोमाञ्चितस्तनतटेन संघृष्टवर्णाः। विकीर्णाः शिथिलिताः। अङ्गरागाः अङ्गलेपाः। "समालम्भोऽङ्गरागश्च प्रसादनविलेपनम्" इति धनञ्जयः। उपचितं सञ्चितम्। श्रमम् आयासम्। सूचयन्ति प्रकाशयन्ति ॥ ८९ ॥

यस्यामिन्दोरनतिचरतो नातिसान्द्रं पतन्तो
गौरीभर्तुर्विरचितजटामौलिभाजो मयूखाः।
नेतुं सद्यो विलयममलाः शक्नुयुर्दम्पतीना-
मङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ॥ ९० ॥ ७ ॥२॥

यस्यामिति ॥ यस्याम् अलकायाम्। गौरीभर्तुः ईशानस्य। विरचितजटामौलिभाजः। विरचिता ग्रथिता जटैव मौलिस्तं भजतीति

विरचितजटामौलिभाक् तस्य लाञ्छनात्मकस्येत्यर्थः। अनतिचरतः अतिचरतीत्यतिचरन् न अतिचरन् अनतिचरन् तस्य अनतिक्रामतः। इन्दोश्चन्द्रमसः। नातिसान्द्रम्। अलुक्समासः। विरलं यथा तथा। पतन्तः पतन्तीति पतन्तः निर्गच्छन्तः। अमलाः न विद्यते मलः कलङ्कस्पर्शो येषां ते तथोक्ताः। तन्तुजालावलम्बाः दिनानलम्विसूत्रपुञ्जाधाराः। तद्गुणगुम्फिता इत्यर्थः। मयूखाः। "मयूखस्त्विट्करज्वालासु" इत्यमरः। दम्पतीनां दयितदयितानाम्। सुरतजनितां निधुवनसंभूताम्। अङ्गग्लानिं शरीरश्रमम्। सद्यः तत्काल एव। विलयं नाशम्। नेतुं प्रापयितुम्। शक्नुयुः समर्था भवेयुः॥ ९०॥

एकाकिन्यो मदनविवशा नीलवासोऽवगुण्ठाः
प्राप्ताकल्पा रमणवसतीर्यातुकामास्तरुण्यः।
यत्रापास्ते तमसि विपणीराश्रयन्त्युत्पथेभ्य-
स्त्वत्संरोधापगमविशदैरिन्दुपादैर्निशीथे॥ ९१॥ ७॥ ३॥

एकाकिन्य इति॥ यत्र यक्षधामनि। निशीथे अर्द्धरात्रे। "अर्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ" इत्यमरः। त्वत्संरोधापगमविशदैः। त्वत्संरोधस्य मेघावरणस्यापगमेन विशदैर्निर्मलैः। इन्दुपादैः चन्द्ररश्मिभिः। "पादा रश्म्यङ्घ्रितुर्यांश-" इत्यमरः। तमसि तिमिरे। "तमिस्रं तिमिरं तमः।" इत्यमरः। अपास्ते निराकृते। एकाकिन्यः असहायाः। मदनविवशाः मन्मथवशगताः। नीलवासोऽवगुण्ठाः नीलैर्वासोभिः वस्त्रैरवगुण्ठा अन्तर्हिताः। "वस्त्रमाच्छादनं वासः" इत्यमरः। प्राप्ताकल्पाः लब्धमण्डनाः। "आकल्पवेषौ नेपथ्यम्" इत्यमरः। रमणवसतीः प्रियावासान्। यातुकामाः गन्तुकामाः। तरुण्यः युवतयः। "तरुणी युवतिसमे" इत्यमरः। उत्पथेभ्यः उद्गतमार्गेभ्यः। विपणीः पण्यः

वीथिकाः । " विपणिः पण्यवीथिका " इत्यमरः । आश्रयन्ति प्राप्नुवन्ति ॥ ९१ ॥

तासां पाद्यं वितरितुमिवोपह्वरे निष्कुटानां
धौतोपान्ता भवनवलभैरिन्दुपादाभिवर्षात् ।
यस्यां रात्रौ श्रममपथके प्रस्तुताः कामुकीनां
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥९२॥७॥४॥

तासामिति ॥ यस्यामलकायाम् । रात्रौ निशायाम् । तासां तरुणीनाम् । पाद्यं पादोदकम् । " पाद्यं पादाय वारिणि " इत्यमरः । वितरितुमिव वितरणायेव । निष्कुटानां गृहारामाणाम् । " गृहारामास्तु निष्कुटाः " इत्यमरः । उपह्वरे अन्तर्भागे समीपेवा । " उपह्वरं समीपे स्यादेकान्ते चाप्युपह्वरम् " इति विश्वः । " उपह्वरमविधाने समीपे चापि कथ्यते" इत्यभिधानात् । धौतोपान्ताः प्रक्षालितसमीपप्रदेशाः । इन्दुपादाभिवर्षात् चन्द्ररश्म्यभिषेचनात् । स्फुटजललवस्यन्दिनः उल्वणाम्बुकणस्राविणः । भवनवलभैः गृहवक्रदारुणः । " गोपानसी तु वलभी छादने वक्रदारुणि " इत्यमरः । चन्द्रकान्ताः चन्द्रकान्तशिलाः । अपथके अमार्गे । " अपन्थास्त्वपथं तुल्ये " इत्यमरः । प्रस्तुताः प्रकृताः । कामुकीनां कामिनीनाम् । " वृषस्यन्ती तु कामुकी " इत्यमरः । श्रमम् आयासम् । व्यालुम्पन्ति अपहरन्ति ॥ ९२ ॥

संलक्ष्यन्ते चिरयति मनोवल्लभे कामिनीनां
गच्छन्तीनां स्खलितविषमं रात्रिसम्भोगहेतोः ।
सौभाग्याङ्कैरिव विलसितैरातता राजमार्गा
गत्युत्कम्पादलकपतितैर्यत्र मंदारपुष्पैः ॥ ९३ ॥ ९ ॥ १ ॥

संलक्ष्यन्त इति ॥ यत्र अलकानगर्याम् । मनोवल्लभे प्राणकान्ते ।

चिरयति विलम्बयति सति । रात्रिसम्भोगहेतोः रात्रौ सुरतक्रीडानिमित्तम् । स्खलितविषमं स्खलितेन पादस्खलितेन विषमं यथा भवति तथा गच्छन्तीनां यान्तीनाम् । कामिनीनां वामलोचनानाम् । “विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना” इत्यमरः । विलसितैः रचितैः । सौभाग्याङ्कैरिव सुभगत्वस्य चिह्नैरिव । “ कलङ्कांकौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणम् ” इत्यमरः । गत्युत्कम्पात् गत्या गमनेनोत्कम्पश्चलनं तस्मात् हेतोः । अलकपतितैः अलकेभ्यः पतितैः । मन्दारपुष्पैः सुरतरुकुसुमैः । आतताः विकीर्णाः । राजमार्गाः जनपतिपथाः संलक्ष्यन्ते संदृश्यन्ते ॥ ९३ ॥

यत्रोद्याने कुसुमितलतामण्डपेषु स्थितानां
शय्योपान्तैर्विततमधुपैरात्तसम्भोगगन्धैः ।
नीलोत्तंसैर्निधुवनपदं सूच्यते दम्पतीनां
क्लृप्तच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ॥ ९४ ॥१॥२॥

यत्रेति ॥ यत्र नगर्याम् । उद्याने आक्रीडे । “पुमानाक्रीड उद्यानम् ” इत्यमरः । कुसुमितलतामण्डपेषु कुसुमानि सञ्जातान्यास्विति कुसुमिताः “ सञ्जातं तारकादिभ्यः ” इति इतच् । ताश्च ता लताश्च तासां मण्डपास्तेषु । स्थितानां वसताम् मिथुनानाम् । आत्तसम्भोगगन्धैः सम्भृतभोगगन्धैः । विततमधुपैः आवृतमधुकरैः । शय्योपान्तैः शयनोपान्तप्रदेशैः । क्लृप्तच्छेदैः रचितखण्डैः । नीलोत्तंसैः नील[illegible]पलललामैः । कर्णविभ्रंशिभिः कर्णाभ्यां विभ्रंश्यन्तीति [illegible]र्णविभ्रंशी[illegible] तैः । कनककमलैः कनकवर्णैः कमलैश्च । षष्ठ्या नी[illegible]थितार्था[illegible] सति मयड्विग्रहेऽध्याहारः शेषः । एवमन्यत्राप्यनुसमाच्[illegible] । निधु[illegible]पदं सुरतस्थानम् । सूच्यते ज्ञाप्यते ॥ ९४ ॥
“ आकल्प[illegible]नेपः
यातुकामाः ग[illegible]कामा[illegible]वनमनु क्रीडतां दम्पतीनां
समे ” इत्यमरः[illegible]। उत्पलैनरचिता यत्र सम्भोगदेशाः ।

संसूच्यन्ते वहुतरफलैः कुङ्कुमारक्तशोभै-
र्मुक्ताजालैस्तनपरिसरच्छिन्नसूत्रैश्च हारैः ॥ ९५ ॥ ९ ॥३॥

मन्दाकिन्या इति ॥ यत्र अलकायाम् । मन्दाकिन्याः गङ्गायाः । " मन्दाकिनी वियद्गङ्गा " इत्यमरः । तटवनमनु तीरवनं प्रति । क्रीडतां विहरताम् । दम्पतीनां मिथुनानाम् । पुष्पास्तीर्णाः पुष्पैर्विकीर्णाः । पुलिनरचिताः सिकतानिर्मिताः । सम्भोगदेशाः कामकेलिप्रदेशाः । कुङ्कुमारक्तशोभैः कुङ्कुमेन लोहितमनोहरैः । वहुतरफलैः वहुक्रमुकादिफलैः । मुक्ताजालैः मौक्तिकसरैः । शिरोनिवेशितैरिति शेषः । स्तनपरिसरच्छिन्नसूत्रैः स्तनयोः परिसरः प्रदेशस्तत्र छिन्नं सूत्रं येषां तैः । " स्मृतः परिसरो मृत्यौ देवोपान्तप्रदेशयोः " इति विश्वः । स्तनपरिचितच्छिन्नसूत्रैरिति पाठे । स्तनयोः परिचितेनाभ्यासेन छिन्नं सूत्रं येषां तैः । मौक्तिकहारैश्च मुक्ताहारयष्टिभिरपि । संसूच्यन्ते सुष्टु ज्ञाप्यन्ते ॥ ९५ ॥

गत्यायासाद्गलितकवरीवन्धमुक्तैः सभृङ्गैः
कीर्णैः पुष्पैः कुसुमधनुषो वाणपातायमानैः ।
लाक्षारागैश्चरणनिहितैरप्यधिक्षोणि यस्यां
नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥९६॥९॥४॥

गत्यायासादिति ॥ यस्याम् अलकायाम् । सवितुः सूर्यस्य । उदये उद्गमे सति । अधिक्षोणि क्षोणिमधिकृत्याधिक्षोणि तस्मिन् भूतले । कामिनीनां स्त्रीणाम् । गत्यायासात् गमनाज्जातश्रमात् । गलितकवरीवन्धमुक्तैः गलितात् शिथिलात् कवरीवन्धात् केशवन्धात् मुक्तानि च्युतानि तैः । " कवरी केशवेशे " इत्यमरः । सभृङ्गैः भृङ्गसहितैः। कुसुमधनुषः कुसुमान्येव धनुर्यस्य तस्य कामस्य । वाणपातायमानैः शरपातसदृशैः । कीर्णैः आस्तीर्णैः । पुष्पैः कुसुमैः । चरणनिहितैः

पादविक्षिप्तैः । लाक्षारागैश्च लाक्षारञ्जनैरपि । " लाक्षाराक्षाजतुक्लीबे यावोऽलक्तो द्रुमामयः " इत्यमरः । नैशः निशि भवो नैशः । मार्गः पन्थाः । सूच्यते ज्ञाप्यते । मार्गपतितमन्दारकुसुमादिलिङ्गैरयमभिसारिकाणां पन्था इत्यनुमीयत इति भावः ॥ ९६ ॥

मन्ये यस्या जगति सकलेऽप्यस्ति नौपम्यमन्य-
त्सर्वौपम्यप्रणिहितधिया वेधसा निर्मितायाः ।
यामध्यास्ते कमलनिलया सम्पदश्च प्रजाना-
मानन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तैः ॥ ९७ ॥ क्षे०।

मन्य इति ॥ सर्वौपम्यप्रणिहितधिया सर्वोपमानत्वसावधानधियपणेन । वेधसा ब्रह्मणा । निर्मितायाः रचितायाः । यस्याः अलकायाः पुरः । सकलेपि सर्वस्मिन्नपि । जगति लोके । अन्यत् अपरम् । औपम्यम् उपमेयवस्तु । नास्ति मन्ये न विद्यत इत्येवमहं जाने । कमलनिलया लक्ष्मीः । " लक्ष्मीः पद्मालया पद्मा " इत्यमरः । याम् अलकाम् । अध्यास्ते अधिवसति प्रजानां जनानाम् । सम्पदश्च श्रियश्च । याम् अलकापुरम् । अध्यास्ते । अर्थवशाद्विभक्त्यादिपरिणामः । " शीङ्स्थासोधेराधारः " इत्याधारे द्वितीया । मन्ये इति पदमत्र वा सम्बन्धनीयम् । यत्र अलकायाम् । नयनसलिलं नेत्राम्बु । आनन्दोत्थम् आनन्दजन्यमेव । अन्यैर्निमित्तैः अपरैः शोकादिहेतुभिः । न न भवति ॥ ९७ ॥

यत्रत्यानां न परपरता चित्तभर्तुः परत्र
नान्यो भङ्गः प्रणयिनि जने मानभङ्गं विहाय ।
नान्यो बन्धः प्रियजनतया सङ्गमाशानुबन्धा-
न्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात् ॥ ९८ ॥ क्षे०।

---

१ तापो न कुसुमशरादिति पाठांतरं ।

यत्रत्यानामिति ॥ यत्रत्यानां यत्र भवा यत्रत्यास्तेषाम् अलकापुर-जनानाम्। चित्तभर्तुः प्राणनाथात्। परत्र अन्यत्र। चित्तभर्तारं विहायान्यत्रेत्यर्थः। परपरता परवशता। न नास्ति। प्रणयिनि जने प्रणयवत्सले। मानभङ्गम् अभिमानच्युतिम्। विहाय मुक्त्वा। अन्यो भङ्गः। नास्ति प्रियजनतया प्रियजनसमूहेन। संगमाशानुबंधात् संसर्गाभिलापानुबंधात् अन्यो बंधः अन्यद्बंधनं नास्ति इष्टसंयोगसाध्यात् इष्टसंयोगेन प्रियजनसमागमेन साध्यान्निर्वर्तनीयात्। त्वत्प्रतिकार्यादित्यर्थः। कुसुमशरजात् मदनेन जन्यात्तापात्। अन्यस्तापोऽपरस्तापः। नास्ति ॥ ९८ ॥

यत्राकल्पान्निधिषु सकलानेव सम्पादयत्सु
नार्थी कश्चिन्न खलु कृपणो नापि निःस्वो जनोस्ति।
धर्मः साक्षान्निवसति सतीं यामलङ्कृत्य यस्मा-
न्नाप्यन्यत्र[1] प्रणयकलहाद्विप्रयोगोपपत्तिः ॥ ९९ ॥ क्षे०।

यत्रेति ॥ यस्मात्कारणात्। धर्मः नीतिधर्मः। सतीं यां पुरीम्। अलङ्कृत्य विभूष्य। साक्षात् प्रत्यक्षेण। निवसति वर्तते। तस्मात्कारणात्। यत्र अलकापुर्याम्। निधिषु निधानेषु। सकलानेव आकल्पान् भूषणानि। "आकल्पवेषौ नेपथ्यम्" इत्यमरः। सम्पादयत्सु दधानेषु। कश्चिदर्थी याचकः। न नास्ति। कृपणः क्षुद्रः। "कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः" इत्यमरः। न खलु नास्ति हि। निःस्वोपि जनो दरिद्रजनश्च। "निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः" इत्यमरः। नास्ति। प्रणयकलहात् प्रणयजात् कलहात्। अन्यत्र परतः। विप्रयोगोपपत्तिरपि विरहप्राप्तिरपि। नास्ति ॥ ९९ ॥

---

1 नाप्यन्यस्मादित्यपि पाठः।

यस्यै शक्रः स्पृहयतितरामिष्टसर्वर्द्धिभाजे
यत्रासीनाः शतमखपुरीं विस्मरन्त्येव सद्यः ।
नान्यच्चिन्त्यं विहरणभयाद्यत्र मृत्युञ्जयानां
वित्तेशानां न खलु च वयो यौवनादन्यदस्ति ॥१००॥ क्षे० ।

यस्य इति ॥ इष्टसर्वर्द्धिभाजे इष्टाः सर्वर्द्धयः समस्तसम्पदो भजतीति तथोक्ता तस्यै । यस्यै अलकायै । शक्रः इन्द्रः । "शक्रः शतमन्युः" इत्यमरः । स्पृहयतितरां वाञ्छतितराम् । "स्पृहेर्वेति" चतुर्थी । यत्र यस्याम् । आसीनाः स्थिताः जनाः । शतमखपुरीम् अमरावतीम् । सद्यः सपदि । विस्मरन्त्येव न स्मरन्त्येव । ततोप्यधिकेति भावः । यत्र पुरि । विहरणभयात् । विहारभीतेः । अन्यच्चिन्त्यम् अपरं चिन्तनीयम् । न नास्ति । मृत्युञ्जयानां मृत्युञ्जयन्तीति मृत्युञ्जयास्तेषाम् । वित्तेशानां यक्षाणाम् । "वित्ताधिपः कुबेरः स्यात्प्रभौ धनिकयक्षयोः" इति शब्दार्णवे । यौवनात् तारुण्यात् । अन्यद्वयश्च वार्द्धक्यवयश्च । "खगबाल्यादिनोर्वयः" इत्यमरः । नास्ति खलु न भवति हि ॥ १०० ॥

नूनं कल्पद्रुमसहचरास्तत्सधर्माण एते
सञ्जाताः स्युः षड्ऋतुकुसुमान्येकशो यत्प्रदद्युः ।
अक्षीणार्द्धिं ध्रुवमुपरताः पल्लवोल्लासिता ये
यत्रोन्मत्तभ्रमरनिकराः पादपा नित्यपुष्पाः ॥ १०१ ॥ क्षे० ।

नूनमिति ॥ यत्र नगर्याम् । अक्षीणार्द्धिं सम्पूर्णसम्पत्तिम् । तपोवैशिष्ट्यगुणविशेषम् । ध्रुवं निश्चयेन । उपगताः उपयाताः । पल्लवोल्लासिताः किसलयैः शोभिताः । उन्मत्तभ्रमरनिकराः उन्मत्ताः सन्तुष्टाः भ्रमरनिकराः भृङ्गनिवहाः येषाम् ते । नित्यपुष्पाः नित्यं

१ भ्रमरमुखरा इत्यपि० ।

पुष्पाणि येषां ते तथोक्ताः । निर्वृत्तकालनियमादित्यर्थः । ये पादपाः वृक्षाः । " पादपौगोवनस्पती: " इति धनञ्जयः । षड्ऋतुकुसुमानि षट्सु ऋतुषु जातानि कुसुमानि तथोक्तानि । यत् यस्मात् । एकशः एकदैव । प्रदद्युः वितरेयुः । तत् तस्मात्कारणात् । एते वृक्षाः । कल्पद्रुमसहचराः सुरद्रुमसहकारिणः । तत्सधर्माणः "धर्मोः पुण्ययमन्यायस्वभावाचारसोमपाः " इत्यभिधानात् । 'सः समानस्य' इति सभावः । 'धर्मादन्' इति बहुव्रीहावत्यः । तत्समानस्वरूपाः । नूनं निश्चयेन । सञ्जाताः समुद्भूताः । स्युः भवेयुः ॥ १०१ ॥

तत्सान्निध्यादिव वनलताः शिक्षितास्तन्नियोगं
नानाभेदं विवरितुमलं ताश्च दिव्यं प्रसूनम् ।
ताभिः स्पर्धामिव च गमिता यत्र भृङ्गोपगीता
हंसश्रेणीरचितरचना नित्यपद्मा नलिन्यः ॥ १०२ ॥ क्षे० ।

तत्सान्निध्यादिवि ॥ यत्र अलकायाम् । वनलताः विपिनवल्लर्यः । तत्सान्निध्यात् तद्वृक्षसामीप्यात् । शिक्षिता इव अभ्यासविशिष्टा इव । नानाभेदं बहुविधम् । तन्नियोगं तत्कैङ्कर्य्यम् । विवरितुं विवरणाय कर्तुमित्यर्थः । अलं समर्थाः । ताभिः वनलताभिः । स्पर्धां विवादम् । गमिता इव प्रापिता इव । ताश्च नलिन्यः पद्मिन्यः । " बिसिनीपद्मिनीमुखाः " इत्यमरः । भृङ्गोपगीताः भृङ्गैरुपकूजिताः । हंसश्रेणीरचितरचनाः हंसश्रेणीभिः मरालराजिभिः रचिता रचना यासां ताः रचितरशना इत्यपि पाठः श्रेयान् । तत्र हंसश्रेण्या रचिता रशना काञ्चीदाम यासां ताः । " स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथा " इत्यमरः । नित्यहंसपरिवेष्टिता इत्यर्थः । नित्यपद्माः नित्यं पद्मानि यासां ताः । नित्या पद्मा लक्ष्मीर्यासां ता इति च तथोक्ताः । दिव्यं मनोहरम् । प्रसूनं कुसुमम् । विवरितुमलमित्यत्राप्यन्वयः ॥ १०२ ॥

यस्यां नित्यप्रहतमुरवाम्भोदनादैः प्रतीता
नृत्यन्त्युच्चैर्विरचितलयं ताण्डवैश्चित्रपिच्छाः ।
नानारत्नैरिव च निधयो निर्मिता जङ्गमास्ते
केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापाः ॥१०३॥ क्षे०।

यस्यामिति ॥ यस्यां पुर्याम् । नित्यप्रहतमुरवाम्भोदनादैः नित्यं प्रहतानां मुरवाणां पणवानाम् अम्भोदानामिव नादैर्ध्वनिभिः । प्रतीताः प्रथिताः । "प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः" इत्यमरः । नानारत्नैः विविधमणिभिः । निर्मिताः रचिताः । जङ्गमाः सञ्चारिणः । निधय इव निधानवत् । "निधिर्ना शेवधिः" इत्यमरः । चित्रपिच्छाः चित्रं पिच्छं बर्हं येषां ते तथोक्ताः । केकोत्कण्ठाः केकाभिः उद्गतः कण्ठो येषां ते तथोक्ताः । नित्यभास्वत्कलापाः नित्यं भास्वन्तः कलापाः बर्हाणि येषां ते तथोक्ताः । "कलापो भूषणे बर्हे तूणीरे संहतौ कचे" इत्यमरः । ते भवनशिखिनः क्रीडामयूराः। ताण्डवैः नर्तनैः । "ताण्डवं नटनं नाट्यम्" इत्यमरः । विरचितलयं विरचितो लयस्तालसाम्यं यस्मिन्कर्मणि तत् । "तालः कालक्रियामानं लयः साम्यम्" इत्यमरः । उच्चैः परम् । नृत्यन्ति नर्त्तनं कुर्वन्ति ॥ १०३ ॥

ज्योत्स्नंमन्येष्वमरवसतिं व्याहसत्सु स्वभूत्या
हर्म्येषूद्यद्वलभिषु सुधापङ्कधौतेषु यस्याः ।
निर्विश्यन्ते निधिभुगधिपैः स्त्रीसहायैर्वितन्व-
न्नित्यज्योत्स्नाप्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥१०४॥ क्षे०।

ज्योत्स्नंमन्येष्विति ॥ यस्याः अलकायाः । ज्योत्स्नंमन्येषु ज्योत्स्नां मन्यन्ते इति ज्योत्स्नंमन्यानि तेषु । "कर्तुः खः" इति खशः । ज्योत्स्नापुञ्जायमानेष्वित्यर्थः । स्वभूत्या निजैश्वर्येण । अमरवसतिं

देववासम्। व्याहसत्सु हासं कुर्वत्सु। उच्चद्वलभिषु उन्नतवलभिषु। सुधापङ्कधौतेषु सुधाकर्दमधवलितेषु। सौधेषु वितन्वन्नित्यज्योत्स्ना-प्रतिहततमोवृत्तिरम्या: वितन्वन्नित्यज्योत्स्नया प्रसर्पन्त्या सार्वकालिकचन्द्रिकया प्रतिहता तमसां वृत्तिर्व्याप्तिस्तया रम्या: सुभगा:। अत्र ज्योत्स्नाया नित्यत्वं महेशस्य तदाश्रयत्वादिति भाव:। प्रदोषा: रात्रिप्रवेशकाला:। "प्रदोषो रजनीमुखम्" इत्यमर:। स्त्रीसहायै: वनितासहचरै:। निधिभुगधिपै: निधीन् भुञ्जन्तीति निधिभुजस्ते-षामधिपै: यक्षनायकै:। निर्विश्यन्ते अनुभूयन्ते ॥ १०४ ॥

दृष्ट्वा यस्याः प्रकृतिचतुरामाकृतिं सुन्दरीणां
त्रैलोक्येऽपि प्रथमगणनामीयुषां जातलज्जा।
मन्ये लक्ष्मीः सपदि विसृजेदेव संलुच्य केशान्
हस्ते लीलाकमलमलके वालकुन्दानुविद्धम् ॥ १०५ ॥

दृष्ट्वेति ॥ यस्या: पुर्या:। सुन्दरीणां रमणीनाम्। "सुन्दरी रमणी रामा" इत्यमर:। त्रैलोक्येपि त्रिलोका एव त्रैलोक्यं तस्मिन्नपि। "भेषजादि" इति ष्यण्। प्रथमगणनां प्रथमोपमाम्। मुख्यतामित्यर्थ:। ईयुषीं गतवतीम्। "लिट: कसुकानौ" इति क्वसु:। "नृद्भ्य:" इति ङी। प्रकृति चतुरां प्रकृत्या चतुरां निपुणाम्। आकृतिम् आकारम्। दृष्ट्वा वीक्ष्य। जातलज्जा उत्पन्नव्रीडा। "मन्दाक्षं ह्रीस्त्रपा व्रीडा" इत्यमर:। लक्ष्मी: श्री:। सपदि शीघ्रेण। "द्राङ् मङ्क्षु सपदि द्रुते" इत्यमर:। केशान् शिरोरुहान्। संलुच्य उत्पाट्य। हस्ते पाणौ। लीलाकमलं लीलार्थं कमलम्। लीलारविन्दं हस्ते स्थितमित्यर्थ:। "अलकाश्चूर्णकुन्तला:" इत्यमर:। जातावेकवचनम्। वालकुन्दानुविद्धं वालकुन्दै: प्रत्यग्रमाघ्यकुसुमै: अनुविद्धम् अनुवेधो ग्रथनम्। नपुंसके भावे क्त:। अलकमिति पाठे वालकुन्दानुविद्धम् अभिनवमाघ्यकुसुमग्रथितम्। अलकाश्चूर्णकुन्तलम्। कर्मणि क्त:। विसृजेदिव परिहरेदिव। मन्ये जाने ॥ १०५ ॥

यत्र स्त्रीणां स्मितरुचिलसज्ज्योत्स्नया बद्धशोभा
प्रालेयांशोः श्रियमुपहसत्यस्तदोषाऽकलङ्का ।
भूयो लक्ष्मीं हिममहिमजां मानयन्तीभिराभि-
र्नीता लोध्रप्रसवरजसा पाण्डुतामाननश्रीः ॥ १०६ ॥

यत्रेति ॥ यत्र अलकायाम् । स्त्रीणां वनितानाम् । स्मितरुचिलसज्ज्योत्स्नया स्मितस्य ईषद्धासस्य रुचिः कान्तिः विलसन्ती चासौ ज्योत्स्ना च स्मितरुचिरिव विलसज्ज्योत्स्ना तया । बद्धशोभा रचितद्युतिः । अस्तदोषा अस्तो नष्टो दोषो अस्तंगमनोपरागादिदूषणं यस्याः सा विनष्टरात्रिश्च । “सायं निशवयं दोषोऽस्त्री वा ना दूषणाघयोः” इत्युभयत्रापि भास्करः । अकलङ्का कलङ्करहिता । एतद्विशेषणद्वयं चन्द्रादप्यधिकगुणत्वं साधयति । भूयः पुनः । हिममहिमजां हिमस्य हेमन्तर्तोर्महिम्ना सामर्थ्येन जाताम् । लक्ष्मीम् उद्यानशोभाम् । मानयन्तीभिः सत्कुर्वन्तीभिः । आभिः स्त्रीभिः । लोध्रप्रसवरजसा लोध्रप्रसवानां लोध्रपुष्पाणां रजसा परागेण । “गालवः शाबरो लोध्रः” ‘स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने’ ‘पांसुर्ना न द्वयो रजः” इत्यमरः । पाण्डुतां गौरत्वम् । नीता प्रापिता । आननश्रीः मुखलक्ष्मीः । प्रालेयांशोः चन्द्रमसः । “हिमांशुश्चन्द्रमाश्चन्द्रः” इत्यमरः । श्रियं सम्पत्तिम् । उपहसति परिहसति ॥ १०६ ॥

यत्राकल्पे स्वरुचिरचिते कल्पवृक्षप्रसूते
सत्येव स्यात्प्रियमभिनवप्रीतमादृत्य किञ्चित् ।
यक्षस्त्रीणां यदुपतिहितं ताभिरात्तानुरागं
चूडापाशे नवकुरवकं चारु कर्णे शिरीषम् ॥ १०७ ॥

यत्राकल्प इति ॥ यत्र अलकापुरि । स्वरुचिरचिते स्वच्छन्दकृते ।

कल्पवृक्षप्रसूते कल्पवृक्षेषु जाते । आकल्पे आभरणे । सत्येव विद्यमान एव । ताभिः यक्षस्त्रीभिः । चूडापाशे केशपाशे । नवकुरवकं प्रत्यग्रकुरवकप्रसूनम् । "अम्लानस्तु महासहा" तत्र शोणे कुरवकम्" इत्यमरः । कर्णे श्रोत्रे । जातावेकवचनम् । चारु पेशलम् । "सुन्दरं रुचिरं चारु" इत्यमरः । शिरीषं पुष्पविशेषम् । "शिरीषस्तु कपीतनः । भण्डिलोऽपि" इत्यमरः । आत्तानुरागं आत्तः प्राप्तोऽनुरागो यस्मिन् कर्मणि तत् । यत् यस्मात् कारणात् । उपनिहितं संधृतम् । तस्मात् कारणात् । अभिनवप्रीतिम् अभिनवस्य प्रीतिस्ताम् । आदृत्य गृहीत्वा । यक्षस्त्रीणां यक्षनारीणाम् । किञ्चित् ईषद्वस्तु तुच्छमित्यर्थः । प्रियं प्रीतिकरम् । यक्षस्त्रीणां कल्पवृक्षदत्तानर्घ्याभरणे सत्यपि 'लोकोभिनवप्रियः' इति वचनात् पुष्पाण्यपि प्रमोदकराणि भवेयुरिति भावः ॥ १०७ ॥

सम्प्रति सर्वदा सर्वर्तुसम्पत्तिमाह—

पाणौ पद्मं कुरवकयुतं स्वोचिते धाम्नि कुन्दं
लौध्रो रेणुस्तनपरिसरे हारि कर्णे शिरीषम् ।
व्यक्तिव्यक्तं व्यतिकरमहो तत्र षण्णामृतूनां
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥१०८॥६॥२॥

पाणाविति ॥ यत्र पुरि । वधूनां नारीणाम् । पाणौ हस्ते । "पञ्चशाखः शयः पाणिः" इत्यमरः । पद्मं पङ्कजम् । शरल्लिङ्गमेतत् । स्वोचिते स्वयोग्ये । धाम्नि स्थाने केशपाश इत्यर्थः । कुरवकयुतं कुरवकपुष्पसहितम् । वसन्तलिङ्गमेतत् । कुन्दं कुन्दकुसुमम् । कुन्दानां यद्यपि "माघ्यं कुन्दम्" इत्यभिधानात् । शिशिरत्वमस्ति तथापि हेमन्ते प्रादुर्भावः । शिशिरे प्रौढत्वमित्यवस्थाभेदेन हेमन्तकार्यत्वम् । कुन्दपुष्पमपि केशपाशे । स्तनपरिसरे पयोधरप्रदेशे । "स्मृतः परिसरो मृत्युदेवोपान्तप्रदेशयोः" इति विश्वः । लौध्रः लोध्रसम्बन्धी । रेणुः धूलिः । "रेणुर्द्वयोः स्त्रियां धूलिः" इत्यमरः । शिशि-

रलिङ्गमेतत् । कर्णे श्रोत्रे । हारि रम्यम् । शिरीषं शिरीषकुसुमम् । ग्रीष्मलिङ्गमेतत् । सीमन्ते च शिरोरुहपद्धतौ । " स्त्रीणां पुंसि च सीमन्तः " इत्यमरः । त्वदुपगमजं तवोपगमनेन मेघागमनेन जायते इति तथोक्तम् । नीपं कदम्बप्रसूनम् । " अथ स्थलकदम्बके । नीपः स्यात्पुलकः श्रीमान्प्रवृषेण्यो हलिप्रियः " इति शब्दार्णवे । वर्षालिङ्गमेतत् । तत्र अलकापुरि । षण्णां ऋतूनां षट्कालानाम् । व्यतिकरं परस्यानुप्रवेशनम् । " व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोः " इति विश्वः । व्यक्तिर्व्यक्तं प्रकाशेन प्रकटितम् । अहो आश्चर्यं भवेदिति शेषः ॥ १०८ ॥

शक्रंमन्याः परिणतशरच्चन्द्रिकानिर्मलानि
प्रोत्तुङ्गानि प्रणयविवशाः स्वापतेयोष्मवन्ति ।
आक्रीडन्ते प्रिययुवतिभिः सर्वकामाभितृप्ता
यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि ॥ १०९ ॥

शक्रंमन्या इति ॥ यस्याम् अलकायाम् । शक्रंमन्याः इन्द्रमन्याः । शक्रंमन्यन्ते आत्मनः शक्रंमन्याः । " कर्तुः खः " इति खश्यः " प्रणयविवशाः प्रीतिवशगाः । सर्वकामाभितृप्ताः सर्वाभिलाषैस्तृप्ताः । यक्षाः वित्तेशाः । परिणतशरच्चन्द्रिकानिर्मलानि सम्पूर्णशरत्कालज्योत्स्नेव निर्मलानि । प्रोत्तुङ्गानि उन्नतानि । "उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे " इत्यमरः । स्वापतेयोष्मवन्ति स्वापतेयस्य उष्मवन्ति उष्णवन्ति । " द्रव्यं वित्तं स्वापतेयं " इत्यमरः । सितमणिमयानि स्फटिकमयानि चन्द्रकान्तमणिमयानि च हर्म्यस्थलानि एत्य गत्वा । प्रिययुवतिभिः स्त्रीभिः सह । आक्रीडन्ते रमन्ते ॥ १०९ ॥

यत्र ज्योत्स्नाविमलिततलान्याश्रिताः कुट्टिमानि
प्रासादानां हरिमणिमयान्यासवामोदवन्ति ।

रंरम्यन्ते द्रविणपतयः पूर्णकामा निकामं
ज्योतिश्छायाकुसुमरचनान्युत्तमस्त्रीसहायाः ॥ ११० ॥

यत्रेति ॥ यत्र अलकायाम्। प्रासादानां हर्म्याणाम्। ज्योत्स्ना-विमलिततलानि चन्द्रिकया निर्मलितस्थलानि। हरिमणिमयानि इन्द्रनीलरत्ननिर्मितानि। आसवामोदवन्ति आसवेन पुष्परसेन आमोदवन्ति परिमलवन्ति। ज्योतिश्छायाकुसुमरचनानि ज्योतिषां ज्योतिष्काणां छायाः प्रतिबिम्बान्येव कुसुमानि तैरचितानि परिष्कृतानि। "ज्योतिष्काराग्निभाज्वलार्कपुत्रार्थाद्वरात्मसु" इति वैजयन्ती। कुट्टिमानि अधिष्ठानि। आश्रिताः संश्रिताः। उत्तमस्त्रीसहायाः ललिताङ्गनासहचराः। पूर्णकामाः सम्पूर्णाभिलाषाः। "कामोऽभिलाषस्तर्षश्च" इत्यमरः। द्रविणपतयः यक्षाः। निकामं यथेष्टम्। रंरम्यन्ते भृशं रमन्ते ॥ ११० ॥

लोलापाङ्गाः सुरसरसिकाः प्रोन्नतभ्रूविकाराः
प्राणेशानां रहसि मदनाचार्यकं कर्त्तुमीशाः
स्वाधीनेऽर्थे विफलमिति वा वामनेत्रा न यस्या-
मासेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतम् ॥ १११ ॥

लोलापाङ्गा इति ॥ यस्यां नगर्याम्। लोलापाङ्गाः चञ्चलापाङ्गाः। "लोलश्चलसतृष्णयोः" 'अपाङ्गो नेत्रयोरन्ते" इत्यमरः। सुरसरसिकाः सुरसेन शृङ्गारादिरसेन रसिकाः। प्रोन्नमद्भ्रूविकाराः प्रोच्चलद्भ्रूभङ्गाः। प्राणेशानां प्राणनाथानाम्। रहसि रहस्ये। "विविक्तविजनच्छन्ननिःशलाकास्तथा रहः। रहश्चोपांशु चालिङ्गे" इत्यमरः। अर्थे प्रयोजने। स्वाधीने साधिते सति। विफलं न निष्फलं न भवति। इति वा एवमेव। "उपमायां विकल्पे वा" इत्यमरः। मदनाचार्यकं मन्मथाचार्यत्वम्। "योपान्त्याद्गुरूपोत्तमाद्वुञ्' इति वुञ् "वोरकः" इत्यकः। कामरहस्योपदेशमित्यर्थः। कर्त्तुं विधातुम्।

ईशाः समर्थाः । वामनेत्राः कामिन्यः । " कामिनी वामलोचना " इत्यमरः । कल्पवृक्षप्रसूतं पानाङ्गसुरद्रुमसम्भूतम् । रतिफलं रतेः कामकेल्याः फलम् । मधु वृक्षरसम् । आसेवन्ते आदृत्यानुभवन्तीत्यर्थः ॥ १११ ॥

गेहेगेहे धनदसचिवैर्यत्र धर्मानुरागा-
द्दिव्यैर्गन्धैः सुरभिकुसुमैः साक्षतैर्धूपदीपैः ।
सङ्गीताद्यैरपि जिनमहो वर्त्यते पुण्यकामै-
स्त्वद्गम्भीरध्वनिषु मधुरं पुष्करेष्वाहतेषु ॥ ११२ ॥ ७ ॥ ३ ॥

गेहेगेहे इति । यत्र यक्षधामनि । गेहेगेहे गृहेगृहे । वीप्सायां द्विः । धर्मानुरागात् सद्धर्मभक्त्या । पुण्यकामैः पुण्याभिलाषिभिः । धनदसचिवैः कुबेरमन्त्रिभिः । दिव्यैः दिवि भवैः स्वर्गस्थैरित्यर्थः । गन्धैः मलयजैः । साक्षतैः अक्षतसहितैः । सुरभिकुसुमैः सुरभियुक्तैः कुसुमैः । धूपदीपैः धूपाश्च दीपाश्च तथोक्तास्तैः । सङ्गीताद्यैरपि सङ्गीतप्रमुखैश्च । त्वद्गम्भीरध्वनिषु । तव गम्भीरध्वनिरिव ध्वनिर्येषां तेषु । पुष्करेषु वाद्यभाण्डमुखेषु । "पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले " इत्यमरः । मधुरं श्रुतिशुभगं यथा तथा । आहतेषु प्रहतेषु सत्सु । जिनमहः अर्हत्पूजा । वर्त्यते विधीयते ॥ ११२ ॥

वासः क्षौमं जिगलिषु शनैर्नूनमादेष्टुकामं
यूनां कामप्रसवभवनं हारि नाभेरधस्तात् ।
काञ्चीदाम्ना किमपि विधृतं लक्ष्यते कामिनीनां
नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणाम् ॥ ११३ ॥

वास इति ॥ यत्र कुबेरपुरि । बिम्बाधराणां बिम्बमिव अधरः ओष्ठो यासां ताः तासाम् । " प्रतिबिम्बे प्रतिकृतौ प्रतिकृत्यां

---

1 शनकैरित्यपि पाठः ।

च मण्डले। लाञ्छनेऽपि च बिम्बोऽस्त्री न द्वयोर्बिम्बिकाफले" इति भास्करः। कामिनीनां कान्तानाम्। नीवीबन्धोच्छ्वसितशिथिलं नीवीबन्धस्य उच्छ्वसितेन त्रुटितेन शिथिलं स्रस्तम्। "नीवी पणे ग्रन्थिभेदे स्त्रीणां जघनवाससि" इति विश्वः। काञ्चीदाम्ना रशनया। किमपि कियत्। विधृतम् अवलम्बितम्। क्षौमं वासः दुकूलं वस्त्रम्। "क्षौमं दुकूलम्।" 'वस्त्रमाच्छादनं वासः" इत्युभयत्राप्यमरः। नाभेरधस्तात् नाभेरधोभागे। हारि सुभगम्। "हृद्यं हारि मनोहरं च रुचिरम्" इति हलायुधः। कामप्रसवभवनं कामोत्पत्तिस्थानम्। नूनं निश्चयेन। यूनां तरुणानाम्। "वयस्थस्तरुणो युवा" इत्यमरः। आदेष्टुकामम् उपदेष्टुकामम्। शनैः मन्दम्। जिगलिषु गलितमिच्छु लक्ष्यते विषयीक्रियते॥ ११३॥

यस्यां कामद्विपमुखपटच्छायमास्रस्तनीवि
श्रीमच्छ्रोणीपुलिनवरणं वारि काञ्चीविभङ्गम्।
पूर्वं लज्जा विगलति ततो घर्मतोयं वधूनां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु॥ ११४॥

यस्यामिति॥ यस्यां राजराजपुर्याम्। वधूनां सीमन्तिनीनाम्। कामद्विपमुखपटच्छायं कामगजमुखवस्त्रसदृशम्। "छाया बिम्बमनाकान्तिः प्रतिबिम्बमनातपः" इत्यमरः। आस्रस्तनीवि ईषच्छिथिलिता नीवी यस्य तत्। "नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससि" इति विश्वः। श्रीमच्छ्रोणीपुलिनवरणं शोभावन्नितम्बमेव पुलिनं तस्याऽऽवरणम्। काञ्चीविभङ्गं काञ्ची रशनैव विभङ्गस्तरङ्गो यस्य तत्। "भङ्गः खङ्गे पराजये। तरङ्गे रोगभेदे च" इति भास्करः। वारि वारीव वारि जलोपमम्। क्षौमं दुकूलम्। अनिभृतकरेषु मदनपारवश्येन चपलहस्तेषु। प्रियेषु प्राणकान्तेषु। रागात् मोहात्। आक्षिपत्सु आहरत्सु सत्सु। पूर्वं प्राक्। लज्जा

व्रीडा । विगलति । ततः पश्चात् । घर्मतोयं स्वेदाम्बु । विगलति निपतति ॥ ११४ ॥

आक्षिप्तेषु प्रियतमकरैरंशुकेषु प्रमोदा-
दन्तर्लीलातरलितदृशो यत्र नालं नवोढाः ।
शय्योत्थायं वदनमरुताऽपासितुं धावमाना
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान् ॥ ११५ ॥

आक्षिप्तेष्विति ॥ यत्र ऐलविलधामनि । प्रमोहात् प्रकृष्टो मोहः प्रमोहस्तस्मात् । प्रियतमकरैः प्राणेशपाणिभिः । अंशुकेषु वस्त्रेषु । "चैलं वसनमंशुकम्" इत्यमरः । आक्षिप्तेषु अवहृतेषु सत्सु । नवोढाः नवपरिणीताः स्त्रियः । अन्तर्लीलातरलितदृशः अन्तर्विलासेन चञ्चला दृशो यासां ताः । अर्चिस्तुङ्गान् अर्चिभिर्मयूखैस्तुङ्गान् । "अर्चिर्मयूखशिखयोः" इति विश्वः । रत्नप्रदीपान् रत्नान्येव प्रदीपान् । शय्योत्थायं शय्याया उत्थाय शय्योत्थायम् । यत्तूर्णेपादानेनेतिणमन्तत्वादव्ययम् । अभिमुखं सम्मुखम् यथा तथा । धावमानाः पलायमानाः । प्राप्यापि लब्ध्वापि । वदनमरुता मुखवायुना । अपासितुं नाशयितुम् । नालं समर्था न भवन्ति । अत्राङ्गनानां रत्नप्रदीपनिर्यापणप्रवृत्त्या मौग्ध्यं व्यज्यते ॥ ११५ ॥

वस्त्रापाये जघनमभितो दृष्टिपातं निरोद्धुं
यूनां क्लृप्ता सुरभिरचिता यत्र मुग्धाङ्गनानाम् ।
कम्पायत्तात्करकिसलयादन्तराले निपत्य
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ११६ ॥८॥५॥

वस्त्रापाय इति ॥ यत्र धनदनगर्याम् । वस्त्रापाये वसनापगमे सति । ह्रीमूढानां लज्जया मूढानाम् । मुग्धाङ्गनानां मुग्धस्त्रीणाम् । जघन-

मभितः जघनस्य सर्वतः । यूनां तरुणानाम् । दृष्टिपातं दृग्व्याप्तिम् । निरोद्धुम् आवरणाय । क्लृप्ता कल्पिता । सुरभिरचिता सुरभिनिर्मिता । चूर्णमुष्टिः चूर्णस्य कुङ्कुमादेर्मुष्टिः । कम्पायत्तात् । " अधीनो निघ्न आयत्तः " इत्यमरः । व्रीडावशादित्यर्थः । करकिसलयात् हस्तपल्लवात् । " पल्लवोऽस्त्री किसलयम् " इत्यमरः । अन्तराले मध्ये । निपत्य पतित्वा । विफलप्रेरणा व्यर्थव्यापारा । भवति ॥ ११६ ॥

> प्रत्यासन्नैः शिखरखचितैरुन्मयूखैर्विचित्रै-
> श्चित्रा रत्नैर्नभसि वितताः शक्रचापानुकारैः ।
> बिभ्रत्युच्चैः सजलजलदा सद्वितानस्य लीलां
> नेत्रा नीता सततगतिना यद्विमानाग्रभूमिः ॥ ११७ ॥

प्रत्यासन्नैरिति ॥ प्रत्यासन्नैः समीपस्थैः । शिखरखचितैः शृङ्गेषु खचितैः । उन्मयूखैः उद्गता मयूखा येषां तैः । उद्गतकिरणैः । विचित्रैः बहुविधैः । रत्नैः मणिभिः । चित्राः आश्चर्यभूताः । नभसि सुरवर्त्मनि । शक्रचापानुकारैः इन्द्रायुधानुकरणैः । वितताः विस्तृताः । यद्विमानाग्रभूमिः यस्या अलकाया विमानानाम् अग्रभूमिः उपरि भूतलानि । नेत्रा नयतीति नेता तेन प्रेरकेण । सततगतिना सततं गतिर्यस्य तेन वायुना । " मातरिश्वा सदागतिः " इत्यमरः । नीताः प्रापिताः । सजलजलदाः जलसहितमेघाः । सद्वितानस्य समीचीनस्य उल्लोचस्य । " अस्त्री वितानमुल्लोचः " इत्यमरः । लीलां विलासम् । उच्चैः परम् । बिभ्रति धरन्ति ॥ ११७ ॥

> अध्यासीना भवनवलभिं शारदी मेघमाला
> यत्रामुक्तप्रतनुविसरच्छीकरासारधारा ।

भीत्वेवालं व्रजति विलयं पश्यतामेव साक्षा-
दालेख्यानां सजलकणिका दोपमुत्पाद्य सद्यः ॥ ११८ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविर-
चितमेघदूतवेष्टितवेष्टिते पार्श्वाभ्युदये भगव-
त्कैवल्यवर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

अध्यासीना इति ॥ यत्र अलकानगर्याम् । भवनवलभौ गृहोप-रिष्ठवक्रदारुणि । अध्यासीना अधिष्ठिता। "शीङ्स्थासोऽधेराधारः" इति आधारे द्वितीया । आमुक्तप्रतनुविसरच्छीकरासारधारा विसरं-तश्च ते शीकराश्च तेषामासारो वेगवद्वर्षं तस्य धारा तथोक्ता आमु-क्ता प्रतन्वी विसरच्छीकरासारधारा यस्याः सा तथोक्ता। "आसारः स्यात्प्रसरणे वेगवृष्टौ सुहृद्बले" इति वैजयन्ती । शारदी शरदि भवा शरत्कालसम्बन्धिनी । मेघमाला जीमूतपद्धतिः । आलेख्यानां स-चित्राणाम् । " चित्रं लिखितरूपाद्यं स्यादालेख्यं प्रयत्नतः। निर्मि-तास्तस्य " इति शब्दार्णवे । सजलजलकणिकाभिः । दोपं वर्णमि-श्रत्वादिदोषम् । उत्पाद्य जनयित्वा । अलं परम् । भीत्वेव भयमा-श्रित्येव । पश्यतामिव प्रेक्षतां जनानामिव । साक्षात् प्रत्यक्षतः । विलयं नाशम् । सद्यः तत्क्षण एव । व्रजति गच्छति ॥ ११८ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचितमेघदूतवेष्टि-
तवेष्टिते पार्श्वाभ्युदये तद्व्याख्यायां च सुबोधिन्याख्यायां
भगवत्कैवल्यवर्णनं नाम द्वितीयः सर्गः ॥ २ ॥

---

१ अनादरणे पश्यंत अनादृत्येव इत्यर्थः । २ नवजलकणैरित्यपि पाठः ।

# अथ तृतीयः सर्गः।

इतोऽर्थचेष्टितानि—

वेगादन्तर्भवनवलभिं सम्प्रविष्टाः कथञ्चित्
सूक्ष्मीभूताः सुरतरसिकौ दम्पती तत्र दृष्ट्वा।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालै-
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ १ ॥ ९ ॥ ६ ॥

वेगादिति ॥ यत्र राजपुर्याम् । त्वादृशाः भवादृशाः । त्वमिव दृश्यन्ते ते त्वादृशाः। त्वत्सदृशा इत्यर्थः। जलमुचः मेघाः। भवनवलभेः गृहवक्रदारुणः सकाशात् । अन्तः गृहान्तरम् । वेगात् शैघ्र्येण। सूक्ष्मीभूताः स्तोकीभूताः। कथञ्चित् केनापि प्रकारेण । संप्रविष्टाः कृतप्रवेशास्सन्तः। तत्र गृहान्तरे। सुरतरसिकौ निधुवनप्रियौ। दम्पती स्त्रीपुरुषौ। दृष्ट्वा विलोक्य। शङ्कास्पृष्टा इव सापराधात् भयादिस्पृष्टा इव। "शङ्काभयवितर्कयोः" इति शब्दार्णवे। धूमोद्गारानुकृतिनिपुणाः धूमोद्गारस्य धूपधूमनिर्गतस्यानुकृतावनुकरणे निपुणाः कुशलाः। जर्जराः विशीर्णाः सन्तः । जालैः गवाक्षैः। "जालं समूहआनायौ गवाक्षक्षारकावपि" इत्यमरः। निष्पतन्ति निष्क्रामन्ति ॥ १ ॥

स्त्रीभिः सार्धं कनककदलीषण्डभाजामुपान्ते
क्रीडाद्रीणां निधिभुगधिपा यत्र दीव्यन्त्यभीक्ष्णम्।
मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि-
र्मन्दाराणां तटवनरुहां छायया वारितोष्णाः ॥ २ ॥

स्त्रीभिरिति ॥ यत्र अलकायाम् । मन्दाकिन्याः गङ्गायाः। सलिलशिशिरैः उदकेन शीतैः । मरुद्भिः मारुतैः । सेव्यमानाः

सेव्यन्त इति सेव्यमानाः ।-तटवनरुहां तटवनेषु रोहन्तीति तटवनरुहस्तेषाम् । क्विप् । मन्दाराणां सुरद्रुमाणाम् । छायया अनातपेन । वारितोष्णाः शमिततापाः । निधिभुगधिपाः यक्षेंद्राः । कनककदलीषण्डभाजां सुवर्णकदलीपण्डयुतानाम् । क्रीडाद्रीणां कृतकाचलानाम् । उपान्ते समीपे । स्त्रीभिः स्ववनिताभिः । सार्धं साकम् । अभीक्ष्णं शश्वत् । दीव्यन्ति क्रीडन्ति ॥ २ ॥

सौन्दर्यस्य प्रथमकलिकां स्त्रीमयीं स्रष्टुमन्यां
व्यातन्वाना जयकदलिका मीनकेतोर्जिगीषोः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
सङ्क्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥३॥१०॥४॥

सौन्दर्यस्येति ॥ यत्र अलकापुर्याम् । जिगीषोः जेतुमिच्छुर्जिगीषुः तस्य जयशीलस्य । मीनकेतोः मकरध्वजस्य । जयकदलिकाः जयपताकिकाः । अमरप्रार्थिताः अमरैर्दिविजैः प्रार्थिताः काङ्क्षिताः सुन्दर्य्य इत्यर्थः । कन्या यक्षकुमार्यः । "कन्या कुमारिका नार्यः" इति विश्वः । सौन्दर्यस्य सुभगत्वस्य । प्रथमकलिकां प्रथमकोरकभूताम् । "कलिका कोरकः पुमान्" इत्यमरः । स्त्रीमयीं रमणीरूपाम् । अन्याम् अपूर्वाम् । सृष्टिं सर्जनम् । व्यातन्वानाः प्रकटी कुर्वन्त्यस्सत्यः । कनकसिकतामुष्टिनिक्षेपगूढैः कनकस्य सिकतासु मुष्टीनां विक्षेपणेन संवृतैः । अथवा कनकसिकतानां मुष्टिषु विक्षेपेण गूढैः । अत एव अन्वेष्टव्यैः मृग्यैः । मणिभिः रत्नैः । सङ्क्रीडन्ते रमन्ते । "क्रीडोकुङ्" इति तङ् । गूढमणिसञ्ज्ञया देशिकक्रीडया सम्यक् क्रीडन्त इत्यर्थः । "रत्नादिभिर्वालुकादौ गुप्तिद्रष्टव्यकर्मभिः । बालिकाभिः कृता क्रीडा नाके गूढमणिः स्मृता" कासक्रीडा गूढमणिर्गुप्तकेलिस्तुलायनम् । पिण्डं कच्चुकदण्डाद्यैः स्मृतादितिककेलयः" इति शब्दार्णवे ॥ ३ ॥

इष्टान्कामानुपनयति यः प्राक्तनं पुण्यपाकं
तं शंसन्ति स्फुटमनुचरा राजराजस्य तृप्ताः।
अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै-
रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्धम् ॥ ४ ॥

इष्टानिति ॥ यत्र अलकायाम्। अक्षय्यान्तर्भवननिधयः भवनस्यान्तरन्तर्भवनं अक्षय्याः क्षयरहिताः अन्तर्भवननिधयो येषां ते तथोक्ताः। यथेष्टभोगसम्भावनार्थमिदं विशेषणम्। प्रत्यहं प्रतिदिनम्। तृप्ताः सर्वविषयसन्तृप्ताः। राजराजस्य ऐलविलस्य। अनुचराः भृत्याः। "भृत्योनुजीव्यनुचरः" इति धनञ्जयः। धनपतियशः एकपिङ्गस्य कीर्तिम्। उद्गायद्भिः उच्चैर्गायद्भिः। देवगानस्य गान्धारग्रामत्वात्तारतरं गायद्भिरित्यर्थः। रक्तकण्ठैः रक्तो मधुरः कण्ठध्वनिर्येषां तैः। किन्नरैः देवविशेषैः। सार्धं सत्रा। "सार्धं तु साकं सत्रा समं सह" इत्यमरः। यः पुण्यपाकः। इष्टान् अभीष्टान्। कामान् कामभोगान्। उपनयति प्रापयति। प्राक्तनं प्राग्भवम्। पुण्यपाकं सुकृतपरिपाकम्। स्फुटं प्रस्फुटम्। शंसन्ति स्तुवन्ति ॥४॥

यस्यां मन्द्रानकपटुरवैर्बोधिता वित्तभर्तुर्भृत्या
भृङ्गैः सममुपहितप्रीतयः कामदायि।
वैभ्राजाख्यं विबुधवनितावारमुख्यासहायाः
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥५॥११॥८॥

यस्यामिति ॥ यस्याम् अलकायाम्। मन्द्रानकपटुरवैः आनकानां पटुरवाः तथोक्ताः मन्द्रैः गम्भीरैः आनकपटुरवैः बोधिताः ज्ञापिताः। उपहितप्रीतयः विधृतसन्तोषाः। विबुधवनितावारमुख्या सहायाः विबुधवनिताः अप्सरसः ता एव वारमुख्याः वेश्याविशेषाः सहायाः

१ तज्जन्यत्वात्तद्व्यपदेशः।

येषां ते तथोक्ताः। "वारस्त्री गणिका वेश्या रूपाजीवाऽथ सा जनैः। सत्कृता वारमुख्या स्यात्" इत्यमरः। बद्धालापाः सम्भावितसंलापाः। "बद्धापाङ्गाः" इति वा पाठः। कामिनः कामुकाः। वित्तभर्तुः धनपतेः। भृत्याः अनुचराः। कामदायि मनोरथप्रदम्। वैभ्राजाख्यं चैत्ररथस्य नामान्तरम्। बहिरुपवनं बाह्योपवनम्। भृङ्गैः भ्रमरैः। समं सह। निर्विशन्ति प्रविशन्ति। सुगन्धदेहस्य भ्रमरा मुह्यन्तीति भावः॥ ५॥

यस्मिन्कल्पद्रुमपरिकरः सर्वकालोपभोग्या-
निष्टान्भोगान्सुकृतिनि जने शंफलान्पम्फलीति।
वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पम्॥ ६॥

यस्मिन्निति॥ यस्मिन् चैत्ररथवनोद्देशे। कल्पद्रुमपरिकरः सुरद्रुमनिचयः। "वृन्दप्राभवयोश्चैव पर्यङ्कपरिवारयोः। आरम्भे च परिस्तारे भवे परिकरस्तथा" इत्यभिधानात्। चित्रं नानावर्णम्। क्षौममिति वा पाठः। वासो वसनम्। नयनयोः अक्ष्णोः। विभ्रमादेशदक्षं विभ्रमाणामादेशे दक्षं समर्थम्। विभ्रमदायकमित्यर्थः। पुष्पोद्भेदं पुष्पोद्भवम्। मधुवृष्यरसम्। विभ्रमादानद्वारा मधुनो मंडनत्वं किसलयैः पल्लवैस्सह अमा भूषणानां विकल्पं विशेषं इष्टान् एवंरूपानभिलषितान्। सर्वकालोपभोग्यान् सर्वकालेपूपभोक्तुं योग्यान्। शंफलान् शंसुखमेव फलं येषां तान्। भोगान् इन्द्रियविषयान्। सुकृतिनि सुकृतमस्यास्तीति सुकृती तस्मिन् पुण्यवति। जने लोके। पम्फलीति भृशं फलति "चफलां"इति मम्"॥ ६॥

रुच्याहारं रसमभिमतं तन्विकल्पं विपञ्ची-
माहार्याणि स्वरुचिरचितान्यंशुकान्यङ्गरागम्।

१ वृष्यरस इत्युक्ते मदजनकपानमित्यर्थः।

लाक्षारागं चरणकमलन्यासयोग्यं च यस्मिन्
एकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥७॥१२॥११॥

रुच्याहारमिति ॥ यस्मिन् वैभ्राजवने। एकः कल्पवृक्षः एकः सुरद्रुमः। रुच्याहारं स्वाद्यमाहारम्। अभिमतं सम्मतम्। रसं रसविशेषम्। प्राणधार्यमेतत्। स्रग्विकल्पं मालाप्रभेदम्। कण्ठधार्यमेतत्। विपञ्चीं वीणाम्। कर्णश्राव्यमेतत्। स्वरुचिरचितानि स्वेच्छाकल्पितानि आहार्याणि मनोहराणि। अंशुकानि वस्त्राणि कटिधार्यमेतत्। अङ्गरागं लेपनम् अवधार्यमेतत्। चरणकमलन्यासयोग्यं चरणकमलयोर्न्यासस्य समर्पणस्य योग्यम्। लाक्षारागं रज्यतेऽनेनेति रागो रञ्जनद्रव्यं लाक्षैव रागस्तम्। इदं च पादानुलेपनमण्डनोपलक्षणमिति। सकलं च समस्तमपि। अबलामण्डनं वनिताप्रसादनम्। प्रसूते जनयति ॥ ७ ॥

भूमिं स्प्रष्टुं द्रुतमुखखुरा गर्ह्यमाना इवामी
पत्रश्यामा दिनकरहयस्पर्धिनो यत्र वाहाः।
मन्दाक्रान्तादिगिभविमुभिः स्पर्धमाना इवोच्चैः
शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात् ॥ ८ ॥

भूमिमिति ॥ यत्र राजधान्याम्। पत्रश्यामाः पत्रमिव श्यामला हरिद्वर्णा इत्यर्थः। दिनकरहयस्पर्धिनः सूर्यस्य हयैरश्वैः स्पर्धिनः स्पर्धाशीलाः। अमी वाहा अश्वाः। "वाहोश्वस्तुरगो वाजी" इति धनञ्जयः। भूमिं भुवम्। स्प्रष्टुं स्पर्शनाय। गर्ह्यमाना इव गर्हन्ते इति गर्ह्यमानाः जुगुप्सावन्त इव। द्रुतमुखखुराः मुखं च खुराश्च मुखखुराः द्रुताः तस्य परस्य वेगिनो मुखखुरा येषां ते तथोक्ताः। शीघ्रगामिनः भवन्तीति शेषः। त्वमिव भवानिव। वृष्टिमन्तः वर्षन्तः। शैलोदग्राः पर्वत इवोन्नताः। करिणाः गजाः। प्रभेदात् प्रकृष्टो भेदः प्रभेदस्तस्मात्। महत्तोन्तरात् तेभ्योप्यतिशयात् इत्यर्थः।

दिगिभविभुभिः दिग्गजेन्द्रैः । उच्चैरधिकम् । स्पर्धमाना इव स्पर्धन्ते इव स्पर्धमानाः स्पर्धा कुर्वन्त इव । मन्दाक्रान्ताः मन्दमाक्रमन्ति स्म तथोक्ताः मन्दगामिनः । भवन्तीति शेषः । वृत्तनामापि ध्वन्यते॥८॥

मन्ये तेपि स्मरपरवशाः कामिनीदृष्टिबाणै-
जयेरन्ये त्वमिव मुनयो धीधना यत्र केऽमी ।
योधाग्रण्यः प्रतिदशमुखं संयुगे तस्थिवांसः
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥ ९ ॥ १२ ॥

मन्य इति ॥ यत्र अलकायाम् । त्वमिव भवानिव । ये केचित् । धीधनाः धीरेव धनं येषां ते तथोक्ताः । मुनयः यतयः । तेऽपि तादृशा अपि । कामिनीदृष्टिबाणैः । कान्ताजननयनशरैः । स्मरपरवशाः मन्मथवशगताः । जायेरन् भवेयुः । मन्ये इति बुध्ये । संयुगे सङ्ग्रामे । प्रतिदशमुखं प्रतिदशग्रीवम् । तस्थिवांसः तस्थुरिति तस्थिवांसः । रावणस्य पुरस्तात् स्थितवन्त इत्यर्थः । चन्द्रहासव्रणाङ्कैः चन्द्रायुधव्रणचिह्नैः । “ चन्द्रहासासिरिष्टयः ” इत्यमरः प्रत्यादिष्टा भरणरुचयः प्रत्याहृतभूषणकान्तयः । अमी योधाग्रण्यः एते भटाग्रेसराः । किं कियन्तः । इति कुत्सोक्तिः । स्मरपरवशाः कथं न भवेयुरित्यर्थः ॥ ९ ॥

कामस्यैवं प्रजननभुवं तां पुरीं पश्य गत्वा
मिथ्यालोको वदति जडधीर्नन्विदं लोकमूढम् ।
मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायः स्वापं न वहति भयान्मन्मथः षट्पदज्यम् ॥ १० ॥

कामस्येति ॥ यत्र राजधान्याम् । साक्षात्प्रत्यक्षेण । वसन्तं दि-

---

१ मुद्रालंकारः । ‘सूच्यार्थसूचनं मुद्राप्रकृतार्थपरैः पदैः’ इति लक्षणात् । २ पद्यमिदं मेघदूते नास्ति ॥

धमानम् । धनपतिसखं धनपतेः कुबेरस्य सखा धनपतिसखस्तम् । "राजन्सखेः" इत्यट् । देवम् ईश्वरम् । मत्वा अवबुध्य । मन्मथः कामः । भयात् भयोत्पातेक्षणभीतेः । षट्पदज्यं षट्पदा एव ज्या मौर्वी यस्य तम् । "षट्पदभ्रमरालयः ।" 'मौर्वी ज्या सिञ्जिनी गुणः ।" इत्युभयत्राप्यमरः । चापं धनुर्दण्डम् । प्रायः बाहुल्येन । न वहति न धरति । इति जडधीः मन्दबुद्धिः । मिथ्यालोकः मिथ्यादृष्टिजनः । वदति ब्रूते । इदं मिथ्यादृग्वचः । लोकमूढं ननु लोकमूढ एव हि । एवम् इति । कामस्य मन्मथस्य । प्रजननभुवं जन्मभूमिम् । "जनुर्जननजन्मानि" इत्यमरः । तां पुरीम् । अलकानगरीम् । गत्वा । पश्य प्रेक्षस्व ॥ १० ॥

स्याद्वाऽसत्यं कुकविरचितं काव्यधर्मानुरोधात्
सत्यप्येवं सकलमुदितं जाघटीत्येव यस्मात् ।
सभ्रूभङ्गं प्रहितनयनैः कामिलक्ष्येष्वमोघै-
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥११॥१४॥१०॥

स्यादिति ॥ कुकविरचितं कुत्सितकविकल्पितम् । असत्यं वा मिथ्या वा । स्याद्भवेत् । एवं सत्यपि तथा चेदपि । काव्यधर्मानुरोधात् काव्यधर्मस्य कवितासमयस्य अनुरोधादानुकूल्यात् । सकलं सर्वम् । उदितम् उदयितम् वर्णनाधिकमित्यर्थः । यस्मात् कारणात् । जाघटीत्येव भृशं घटत एव । तस्मात् कारणात् । तस्य मन्मथस्य आरम्भः कामिजनविजयाप्रारम्भः । सभ्रूभङ्गं भ्रूभङ्गेण सहितं यथा तथा । प्रहितनयनैः प्रहितानि प्रयुक्तानि नयनानि येषु तैः । कामिलक्ष्येषु कामिन एव लक्ष्याणि तेषु । अमोघैः सफलैः सार्थकप्रयोगैरित्यर्थः । चापं कदाचिन्मोघमपि स्यादिति भावः । चतुरवनिताविभ्रमैरिव चतुराश्च वनिताश्च तासां विभ्रमैर्विलासैरेव सिद्धः नि-

ष्पन्नः । यदनर्थकरं चैहिकफलं तदप्रयोगो वरम् निश्चितसाधनप्रयोगः वरं निश्चितसाधनप्रयोगः कर्तव्य इत्यर्थः ॥ ११ ॥

स्यादारेका बहुनिगदितं कस्तवेदं प्रतीयात्
सद्वाऽसद्वा तदिति ननु भोः प्रत्ययं ते करोमि ।
तत्रागारे धनपतिगृहादुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ॥ १२ ॥

स्यादिति ॥ तव भवतः । तवेदं पुरवर्णनमित्यर्थः । बहुनिगदितं बहुना भाषितम् । सद्वाऽसद्वा सत्यं वा असत्यं वा । कः प्रतीयादिति आरेका आशङ्का । स्याद्भवेत् । ननु भोः ननु भवन् । "वोशनोश-न्" इत्यादिना भवच्छब्दस्य भोरादेशः । ते भवतः । प्रत्ययं विश्वा-सम् । "प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुषु" इत्यमरः । करो-मि विदधामि । तत्र अलकायाम् । धनपतिगृहात् राजराजनिलयात् । उत्तरेण उत्तरस्मिन्नदूरप्रदेशे । "एनोऽदूरे" इति एनत्यः । अव्यय-मिदम् । अस्मदीयम् अस्माकमिदम् अस्मदीयम् । "दोश्छः" इति छः । अगारं गृहम् । सुरपतिधनुश्चारुणा मणिमयत्वादभ्रंकष-त्वाच्चेन्द्रचापसुन्दरेण । त्वदमरधनुरिति वा पाठः । तवेन्द्रधनुरिव सुन्दरेण । तोरणेन लम्बमानतोरणेन । दूरात् अतिदूरात् । लक्ष्यं प्रेक्ष्यम् । अनेनाभिज्ञानेन दूरत एव ज्ञातुं शक्यमित्यर्थः ॥ १२ ॥

पुष्पोद्गन्धिर्मृदुकिसलयो भृङ्गसङ्गीतहारी
सान्द्रच्छायः सलिलधरणोपान्तपुस्तैणशावः ।
यस्योद्याने कृतकतनयो वर्द्धितः कान्तया मे
हस्तप्राप्यस्तबकनमितो बालमन्दारवृक्षः ॥ १३ ॥ १५ ॥ १२ ॥

पुष्पोद्गन्धिरिति ॥ यस्य अस्मदीयगृहस्य । उद्याने उपवने ।

पुष्पोद्गन्धिः पुष्पाणामुद्गतो गन्धो यस्य सः। मृदुकिसलयः मृदूनि कोमलानि किसलयानि पल्लवानि यस्य सः। "घनं निरन्तरं सान्द्रम्" इत्यमरः। सलिलधरणोपान्तपुस्तैणशावः। सलिलधरणस्य जलाधारस्य उपान्ते स्थितः पुस्तैणशावः प्रतिमारूपो मृगशिशुर्यस्य सः। "पुस्तं लेप्यादिकर्मणि' इति।" "पृथुकः शावकः शिशुः" इति चामरः। हस्तप्राप्यस्तवकनमितः हस्ते प्राप्यैः हस्तापचेयैः स्तवकैः गुच्छैः नमितः नम्रीकृतः। "स्याद्गुच्छकस्तु स्तवकः" इत्यमरः। मे मम। कान्तया कामिन्या। वर्धितः पोषितः। कृतकतनयः कृत्रिमपुत्रः पुत्रत्वेनाभिमन्यमान इत्यर्थः। बालमन्दारवृक्षः बालकल्पवृक्षः। अस्तीति शेषः॥ १३॥

नाहं दैत्यो न खलु दिविजः किन्नरः पन्नगो वा
वास्तव्योऽहं धनदनगरे गुह्यकोऽयं मदीया।
वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैः स्फीता विकचकमलैर्दीर्घवैडूर्यनालैः॥ १४॥

नाहमिति॥ अहम् दैत्यः राक्षसः। न न भवामि। दिविजः स्वर्गजः। किन्नरः किन्नरदेवः। पन्नगो वा नागदेवो वा। न खलु न भवामि। धनदनगरे अलकापुरि। वास्तव्यः वस्तुं योग्यो वास्तव्यः स्थातव्यः। अयमहम् एषोऽहम्। "स्वस्मिन्परोक्षनिर्देशो गमको मदहैन्ययोः" इति वचनात्। स्वस्मिन्मदेनायमिति प्रयोगः। गुह्यकः यक्षदेवः। अस्मिन् गृहोपवने। मरकतशिलाबद्धसोपानमार्गा मरकतमणिभिः आबद्धः सोपानमार्गो यस्याः सा तथोक्ता। दीर्घवैडूर्यनालैः विदूरे भवो वैडूर्यः इति साधुः। वैडूर्याणां विकाराणि वैडूर्याणि। "विकारे" इत्यण्। दीर्घाणि स्निग्धानि वैडूर्याणि नालानि येषां तैः। हैमैः हेम्नो विकाराणि हैमानि तैः कनकमयैरित्यर्थः। विकचकमलैः विकसितसरसिजैः। स्फीता छन्ना वा। मदीया ममेदं

मदीया । "दोश्छः" । वापी च दीर्घिकापि । " वापी तु दीर्घिका " इत्यमरः । अस्तीति शेषः ॥ १४ ॥

तां जानीयाः कमलरजसा ध्वस्ततापांततापां
मत्पुण्यानां सृतिमिव सतीं वापिकां विस्तृतोर्मिम् ।
यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
न ध्यास्यन्ति व्यपगतशुचस्त्वामपि प्राप्य हंसाः॥१५॥१६।१३

तामिति ॥ यस्याः वाप्याः । तोये सलिले । " अम्भोर्णस्तोयपानीयम् " इत्यमरः । कृतवसतयः कृतनिवासाः । त्वामपि मेघमपि । प्रेक्ष्य दृष्ट्वा । व्यपगतशुचः व्यपगताः शुचः शोकाः येषां ते । " मन्युशोकौ तु शुक् स्त्रियाम् " इत्यमरः । वर्षाकालेऽपि अकलुषजलत्वादिसहायाद्विगतदुःखाः सन्तः । हंसाः मरालाः । सन्निकृष्टं सन्निहितं सुगममित्यर्थः । मानसं मानससरोवरम् । न ध्यास्यन्ति न स्मरिष्यन्ति । कमलरजसा पद्मरेणुना । ध्वस्ततापान्ततापां ध्वस्तो नष्टः तापान्तस्य ग्रीष्मस्य तापस्तपनं यस्यास्ताम् । विस्तृतोर्मिं विस्तृता ऊर्मयो यस्यास्ताम् । " भङ्गस्तरङ्ग ऊर्मिर्वा " इत्यमरः । सतीं समीचीनाम् । तां वापिकां दीर्घिकाम् । मत्पुण्यानां मम सुकृतानाम् सृतिमिव सरणमिव " सृतिस्तु गतिमार्गयोः " इति भास्करः । जानीयाः जानीहि ॥ १५ ॥

अन्यच्चास्मिन्नुपवनघने मद्गृहोपान्तदेशे
स्यादाख्येयं मयकि सुतरां प्रत्ययो येन ते स्यात् ।
तस्यास्तीरे विहितशिखरः पेशलैरिन्द्रनीलैः
क्रीडाशैलः कनककदलीवेष्टनप्रेक्षणीयः ॥ १६ ॥

अन्यच्चेति ॥ अस्मिन्नेतस्मिन् । उपवनघने उपवननिरन्तरे । मद्गृहोपान्तदेशे मम गृहपार्श्वप्रदेशे । येन केनचित् । मयकि मय्ये-

व मयकि कुत्सिते मयि मयकि । ते तव । सुतराम् अत्यर्थम् । प्रत्ययः विश्वासः । स्याद्भवेत् । तत् अन्यच्च अपरमपि चिह्नम् । आख्येयं भापणीयम् । स्याद्भवेत् । तस्याः वापिकायाः । तीरे तटे । पेशलैः चारुभिः । इन्द्रनीलैः रत्नैः । विहितशिखरः कृतशृङ्गः । इन्द्रनीलमणिमय इत्यर्थः । कनककदलीवेष्टनप्रेक्षणीयः । कनककदलीनां वेष्टणेन आवरणेन प्रेक्षणीयः दर्शनीयः मनोहर इत्यर्थः । क्रीडाशैलः कृतकगिरिः अस्तीति शेषः ॥ १६ ॥

रत्याधारो रतिकर इवोत्तुङ्गमूर्त्तिर्विनीलः
 शैलो मूले कनकपरिधिर्मे मनोऽद्यानुशास्त् ।
मद्गेहिन्या प्रिय इति सखे चेतसा कातरेण
 प्रेक्षोपान्तस्फुटिततडितं त्वां तमेव स्मरामि ॥१७॥१७॥१४॥

रत्याधार इति ॥ सखे भो मित्र । रत्याधारः क्रीडाधारः । रतिकर इव रतिकरपर्वत इव । उत्तुङ्गमूर्त्तिः उन्नतमूर्त्तिः । विनीलः नीलवर्णः । मूले तले । कनकपरिधिः सुवर्णप्राकारः "परिधिर्यज्ञियकाष्ठे स्यात्प्राकारे परिवेषणे" इति वैजयंती । शैलः क्रीडाद्रिः । अद्य इदानीम् । मे मम । मनः चित्तम् । अनुशासत् प्रबोधयन् । मद्गेहिन्याः मत्प्रियायाः । प्रियः इष्टः । इति हेतोः । कातरेण भ्रान्तेन । चेतसा मनसा । उपान्तस्फुटिततडितम् उपान्तेषु स्फुटिता उज्ज्वलितास्तडितो यस्य तम् । त्वां मेघम् । प्रेक्ष्य दृष्ट्वा । तमेव क्रीडाशैलमेव । स्मरामि चिन्तयामि । एवकाराद्विपयान्तरव्यवच्छेदः । सदृशवस्त्वनुभवादिष्टार्थस्मृतिर्जायत इत्यर्थः । अत्र गिरेः कनकपरिधित्वविनीलमूर्त्तित्वाभ्यां स्फुटिततडितो मेघस्य साम्यमुत्प्रेक्ष्यते ॥१७॥

अथ तस्याः साभिज्ञानं वक्तुमुपक्रमते—

---

इतः पादवेष्टितानि ।

तन्मे वाक्यादपगतभयस्त्वं व्यवस्यात्मनीनं
तीर्थे ध्वाङ्क्षं स्थितमपनुदन्स्याः स्थिरात्मा मदुक्ते ।
तत्रैवास्ते तव च दयिता लप्स्यते लब्धजन्मा
तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी ॥ १८ ॥

तदिति ॥ तत् तस्मात् कारणात् । मे मम । वाक्यात् । त्वं भवान् । अपगतभयः रहितभीतिः सन् । आत्मनीनम् आत्मने हितमात्मनीनम् । "भोगोत्तरपदाभ्यां खः" व्यवस्य निश्चित्य । मदुक्ते मयोक्ते मया प्रणीते । तीर्थे तीर्थस्थाने । "तीर्थं प्रवचने पात्रे लब्धाम्नाये विदांवरे । पुण्यारण्ये जलोत्तारे महासत्यां महामुनौ" इति धनञ्जयः । स्थितं तिष्ठति स्म स्थितस्तम् । ध्वाङ्क्षं वायसं बकं वा । "ध्वाङ्क्षः काकबकौ" इति नानार्थरत्नमालायाम् । अपनुदन् तिरस्कुर्वन् । स्थिरात्मा निश्चलात्मा । स्याः भवेः । तव ते । दयिता च वसुन्धरा नाम पूर्वभवकान्ताऽपि । तत्रैव अलकायामेव । लब्धजन्मा प्राप्तजनना । तन्वी कृशाङ्गी । "श्लक्ष्णं दभ्रं कृशं तनुः" इत्यमरः। "असहनञ्विद्यमानात्-" इत्यादिना ङी । श्यामा युवतिः । "श्यामा यौवनमध्यस्था" इत्युत्पलमालायाम् । शिखरिदशना शिखराण्येषां सन्तीति शिखरिणः कोटिमन्तः । "शिखरं शैलवृक्षाग्रकक्षापुलिनकोटिषु" इत्यमरः । शिखरिणो दशना यस्याः सा शिखरिदशना । एतेनास्या भाग्यवत्त्वं पत्युरायुष्मत्त्वं च सूच्यते । तदुक्तं सामुद्रिके- "स्निग्धाः समानरूपाः स्युः पङ्क्तयः शिखरिणः श्लिष्टाः । दन्ता भवन्ति यासां तासां पादे जगत्सर्वम् । ताम्बूलरसरक्तेपि स्फुटभासः समोदयाः । यस्याः शिखरिणो दन्ता दीर्घं जीवति तत्पतिः" इति । पक्वबिम्बाधरोष्ठी पक्वं परिणतं बिम्बं बिम्बफलमिवाधरोष्ठौ अधस्तनोपरितनदन्तच्छदौ यस्याः सा तथोक्ता । सती । "असहनञ्-" इत्यादिना ङी । आस्ते विद्यते । लप्स्यते त्वया प्राप्स्यते । "डुलभष्-प्राप्तौ" कर्मणि लृट् ॥ १८ ॥

यस्या हेतोस्तव च मम च प्राग्भवेऽभूद्विरोध-
स्तत्रोत्पन्ना निवसति सती साधुना किन्नराणाम्।
द्रष्टा सौम्यं सजलनयना त्वां स्मरन्ति स्मरार्त्ता
मध्येक्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः॥ १९॥

यस्या इति॥ यस्याः वसुन्धरानामकान्तायाः। हेतोः कारणात्। प्राग्भवे कमठमरुभूतिभवे। तव च भवतोऽपि। मम च ममापि। विरोधः विद्वेषः। अभूत् अभवत्। सा वसुन्धरा। अधुना इदानीम्। किन्नराणां यक्षाणाम्। तत्र निवासे अलकापुरि। उत्पन्ना सती जाता सती। निवसति वर्तते। त्वां भवन्तम्। स्मरन्ती चिन्तयन्ती प्राग्भवत्स्मरणेत्यर्थः। स्मरार्त्ता कामार्त्ता। मध्येक्षामा मध्ये कट्यां क्षामा कृशीभूता तथोक्ता। अलुक्समासः। चकितहरिणीप्रेक्षणा भयकम्पितायाः हरिण्याः प्रेक्षणे इव प्रेक्षणे दृष्टी यस्याः सा तथोक्ता। एतेनास्याः पद्मिनीत्वं सूच्यते। तदुक्तं पद्मिनीलक्षणप्रस्तावे-"चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे" इति। निम्ननाभिः गम्भीरनाभिः। अनेन नारीणां 'नाभिर्गम्भीरः कामरसातिरेकः' इति काम सूत्रार्थः सूच्यते। सजलनयना साश्रुनेत्रा। सौम्यं शान्तं यथा तथा। द्रष्टा दृशेर्लुट्। प्रेक्षिता भविष्यति॥ १९॥

द्रष्टा भूयः स्मरपरवशा चन्द्रकान्तोपलान्ते
ध्यायन्ती त्वां सहसहचरं संदिदृक्षुर्लिखित्वा।
यान्ती तस्मान्नयनसलिलैर्दृष्टिमार्गे निरुध्ये-
च्छ्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्याम्॥ २०॥

दृष्ट्वेति॥ भूयः पुनः। स्मरपरवशा मन्मथपीडिता। त्वां भवन्तम्। सहसहचरं सहचरेण सह वर्तते इति सहसहचरस्तम्। "वान्यात्तः" इति विकल्पितः सकारादेशः। संदिदृक्षुः सम्यक् द्रष्टुमि-

चक्षुः । चन्द्रकान्तोपलान्ते चन्द्रकान्तशिलातले । " अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तरेऽन्तकः " इति भास्करः । लिखित्वा विलिख्य । ध्यायन्ती पश्यन्ती । नयनसलिलैः नेत्राश्रुभिः । दृष्टिमार्गे दर्शनमार्गे । निरुद्धे आवृते सति । श्रोणीभारात् नितम्बभारात् अलसगमना न तु जङ्घादोषात् । स्तनाभ्यां पीनोत्तुङ्गपयोधराभ्याम् स्तोकनम्रा ईषदवनता । न तु अवलग्नदोषात् । तस्मात् चन्द्रशिलातलात् । यान्ती गच्छन्ती । द्रष्टा दृशेर्लृट् । प्रेक्षिता भविष्यति ॥ २० ॥

कामावस्थामति वहुतिथिं धारयन्ती त्वयासौ
ज्ञेया साक्षाद्रतिरिव मनोहारिणी तत्र गत्वा ।
नानावेषे वहुविरचिते किन्नरस्त्रीसमाजे
या तत्र स्याद्युवतिविषया सृष्टिराद्येव धातुः ॥२१॥१८॥१९॥

कामावस्थामिति ॥ तत्र निवासे । नानावेषे नाना विविधा वेषा अलङ्कारा यस्य तस्मिन् । वहुविलसिते वहुविलासे । किन्नरस्त्रीसमाजे किन्नरस्त्रीणां समूहे । या कामिनी । धातुः ब्रह्मणः । युवतिविषया युवतय एव विषयो यस्याः सा । आद्या आदौ भवा आद्या प्रथमभूता । सृष्टिरिव सर्जनमिव । स्याद्भवेत् । इति उक्त-वक्ष्यमाणप्रकारेण । वहुतिथिं वहुप्रकाराम् । " वहुगणपूगसङ्घात् तिथुक् " " टिड्ढाणञ्- " इति ङी । कामावस्थां मन्मथावस्थाम् । धारयन्ती बिभ्रती । साक्षात् रतिरिव प्रत्यक्षभूता रतिदेवीव । मनोहारिणी मनोहरा । असौ एषा कन्या । त्वया भवता । तत्र तत्पुरम् । गत्वा प्राप्य । ज्ञेया ज्ञातव्या ॥ २१ ॥

साध्वीं चित्ते विधिनियमितामन्यपौंस्ने निराशां
कन्यावस्थां त्वदुपगमने बद्धकामां सखीनाम् ।

भ्रातुर्वाक्यात्प्रणयविवशां त्वं वितर्क्यान्यथालं
तां जानीयाः परिमितकथां जीवितं मे द्वितीयम् ॥ २२ ॥

सख्यानीतैः-सरसकदलीगर्भपत्रोपवीज्यै-
र्लब्धाश्वासां किमपिकिमपि श्लिष्टवर्णं लपन्तीम् ।
क्षीर्णप्रायां विरहविधुरामावयोर्लब्धसाम्या-
द्दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ॥२३॥ युग्मम् ॥

साध्वीमिति ॥ साध्वीं पतिव्रताम् । "सती साध्वी पतिव्रता" इत्यमरः । अन्यपौंस्ने अन्यपुरुषसमूहे । अन्ये च ते पुमांसश्च अन्यपुमांसः तेषां समूहः अन्यपौंस्नं तस्मिन् । "स्त्रीपुंसात् नञ्स्नञौ भवतः" इति स्नञ् त्यः । निराशाम् आशारहिताम् । कन्यावस्थां कुमार्यवस्थाम् । सखीनां वयस्यानां मध्ये इति शेषः । "आलिस्सखी वयस्या च" इत्यमरः । त्वदुपगमने तवागमने । लब्धकामां रचिताभिलाषाम् । प्रणयविवशां प्रीत्यधीनां । चित्ते अन्तरङ्गे । विधिनियमितां व्रतरूपविधाननिर्मिताम् । परिमितकथां स्तोकवाक्यामित्यर्थः । तां वसुन्धराम् । सखीनां वयस्यानाम् । अन्यथा अन्येन प्रकारेण । वितर्क्य विचार्य । अलं पर्याप्तम् । भ्रातुः सहोदरस्य कमठचरस्य । वाक्यात् वचनप्रामाण्यात् । मे मम द्वितीयं द्विपूरणम् । जीवितं प्राणान् । त्वं भवान् । जानीयाः जानीहि ॥२२॥ सख्यानीतैरिति ॥ आवयोः तव ममापि । लब्धसाम्यात् विहितसमानत्वात् । सहचरे सहाये । मयि यक्षे । दूरीभूते दूरदेशस्थिते सति । विरहविधुरां विरहपीडिताम् । क्षीर्णप्रायां जर्जराङ्गयष्टिम् । सख्यानीतैः सखीभिर्वयस्याभिरानीतैः । सरसकदलीगर्भपत्रोपवीज्यैः सरसरम्भान्तर्गतपत्ररचितव्यजनैः । लब्धाश्वासां प्राप्तजीविताम् । किमपिकिमपि कियत्कियत् । श्लिष्टवर्णं क्लिष्टाक्षरं यथा तथा । लपन्तीं ब्रुवतीम् । चक्रवाकीमिव सहचरचक्रवाके दूरीभूते चक्रवाककान्तामिव । "जाते-

रक्षियशूद्रात्"इति ङी ।" एकाम् एकाकिनीम् । तां त्वं जानीया इति कर्तृकर्मक्रियाणामत्राप्यन्वयः । युग्मम् ॥ २३ ॥

मय्यायाते करकिसलयन्यस्तवक्त्रेन्दुमुग्धा
त्वामेवाहर्निशमभिमनाश्चिन्तयन्ती वियोगात् ।
याता नूनं बत तव दशामाशु मर्तव्यशेषां
गाढोत्कण्ठा गुरुषु दिवसेष्वेषु गच्छत्सु बाला ॥ २४ ॥

मयीति ॥ मयि यक्षे । आयाते आगतेसति । तव भवतः । वियोगात् विरहात् । एषु विरहगुरुषु विरहमहत्सु । दिवसेषु दिनेषु । गच्छत्सु अतीतेषु । बाला सा कामिनी । करकिसलयन्यस्तवक्त्रेन्दुमुग्धा पाणिपल्लवोपरिन्यस्तमुखेन्दुः सा चासौ मुग्धा च तथोक्ता । अहर्निशम् अहोरात्रम् । अभिमनाः उन्मनाः । त्वामिव भवन्तमिव । चिन्तयन्ती ध्यायन्ती । गाढोत्कण्ठा प्रबलविरहवेदना । मर्तव्यशेषां मरणावशिष्टाम् । दशाम् अवस्थाम् । आशु शीघ्रेण । नूनं निश्चयेन । याता गता । बत हन्त । " खेदानुकम्पासन्तोषविस्मयामन्त्रणे बत " इत्यमरः ॥ २४ ॥

तस्याः पीनस्तनतटभरात्सामिनम्राग्रभागा
निश्वासोष्णप्रद्रवितमुखाम्भोजकान्तिर्विरूक्षा ।
चिन्तावेशात्तनुरपचिता सालसापाङ्गवीक्षा
जातामन्ये शिशिरमथिता पद्मिनीवान्यरूपा॥२५॥१९॥२०॥

तस्या इति ॥ पीनस्तनतटभरात् पीनयोः स्तनयोस्तटस्य भरात् भारात् । " भरोतिशयभारयोः " इति भास्करः । सामिनम्राग्रभागा सामि ईषत् " सामि त्वर्धे जुगुप्सिते " इत्यमरः । नम्रः नमनशीलः " नमूकम्यजस्कभ्यः " इत्यादिना रः । अग्रभागो यस्याः सा तथोक्ता । निश्वासोष्णप्रद्रवितमुखाम्भोजकान्तिः निश्वा-

सस्योष्णेन प्रदविता ग्लाना मुखकमलस्य कान्तिर्यस्याः सा तथोक्ता। विरूक्षा अप्रसन्ना । " रूक्षस्त्वप्रेम्ण्यचिक्कणे " इत्यमरः । चिन्तावेशात् चिन्ताक्रान्तेः । अपचिता विश्लिष्टा कृशीभूतेत्यर्थः । सालसापाङ्गवीक्षा अलससहिता सोपेक्षा अपाङ्गस्य वीक्षा वीक्षणं यस्याः सा तथोक्ता । तस्याः वनितायाः । तनुः मूर्त्तिः । शिशिरमथिता शिशिरेण शिशिरकालेन मथिता पीडिता । पद्मिनीव नलिनीव । अन्यरूपा पूर्वाकाररहिता । जाता जायते स्म । मन्ये एवमहं बुध्ये । हिमेन पद्मिनीव विरहेण तस्यास्तनुर्निर्विलासेति तर्कयामीति भावः ॥२५॥

इतोऽर्धचेष्टितानि—

निद्रापायाद्रजनिषु मुहुस्तावकं सम्प्रयोगं
दिध्यासोः स्याद्वदनमपरं त्विन्दुबिम्बानुकारि ।
नूनं तस्याः प्रबलरुदितोच्छूननेत्रं बहूनां
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ॥ २६ ॥

निद्रेति ॥ रजनिषु रात्रिषु । निद्रापायात् निद्राविरहात् । मुहुः पुनःपुनः । तावकं तवायं तावकस्तं तव सम्बन्धम् । " युष्मदस्मदोऽन्यतरस्यां खञ्च " " तवकममकावेकवचने " इत्यत्र तवकादेशश्च । सम्प्रयोगं सङ्गमम् । दिध्यासोः ध्यातुमिच्छोः । तस्याः वनितायाः । इन्दुबिम्बानुकारि चन्द्रमण्डलसदृशम् । वदनं लपनम् । प्रबलरुदितोच्छूननेत्रं प्रबलरुदितेन बहुलरोदनेन उच्छूने स्थपुटिते नेत्रे यस्य तत् तथोक्तम् । "तत्रोच्छूनेतिश्वयतेः" कर्तरि क्तः । "रदाभ्यां" इति तस्य नः । "पचव्यादिति" यञ इक् । "मूर्च्छोनुनासिके चेत्याच्" । बहूनां निश्वासानाम् अधिकतां उच्छ्वासानाम् अशिशिरतया अन्तस्तापोष्णत्वेन भिन्नवर्णाधरोष्ठं भिन्नवर्णौ विच्छायौ अधरोष्ठौ ऊर्ध्वाधोदन्तवाससी यस्य तत् तथोक्तम् । नूनं निश्चयेन । अपरम् अन्यरूपम् । स्यात् भवेत् ॥ २६ ॥

त्वां ध्यायन्त्या विरहशयनाभोगमुक्ताखिलाङ्ग्याः
शङ्के तस्या मृदुतलमवष्टभ्य गण्डोपधानम् ।
हस्तन्यस्तं मुखमसकलव्यक्ति लंबालकत्वा-
दिन्दोर्दैन्यं त्वदुपसरणक्लिष्टकान्तिर्बिभर्त्ति ॥२७॥२०॥२१॥

त्वामिति ॥ विरहशयनाभोगमुक्ताखिलाङ्ग्याः विरहशयनाभोगा-त् विरहोषितशयनस्थानात् मुक्तमखिलाङ्गं यस्यास्तस्याः । त्वां भव-न्तम् । ध्यायन्त्याः स्मरन्त्याः । तस्याः कामिन्याः । "असहनञ्-"इति-ङी । मृदुतलं कोमलतलम् । गण्डोपधानं गण्डोपवर्हम् । " उपधानं तूपवर्हम् " इत्यमरः । अवष्टभ्य अवलम्ब्य । हस्तन्यस्तं हस्ते करे न्यस्यते स्म तथोक्तम् । लम्बालकत्वात् संस्काराभावेन लम्बमानकुन्त-लत्वात् । असकलव्यक्ति असंपूर्णा व्यक्तिः यस्य तत् । मुखं वद-नम् । त्वदुपसरणक्लिष्टकान्तेः तवानुसरणेन मेघाश्रयेण क्लिष्टाऽतीक्ष्णा कान्तिः यस्य तस्य । इन्दोः चन्द्रस्य । दैन्यं शोच्यताम् । बिभर्त्ति । शङ्के एवं शङ्कयामि ॥ २७ ॥

तस्याः पीडां रहयितुमलं तौ च मन्ये मृगाक्ष्या
मद्गेहिन्याः सहसहचरी सेवते यौ द्वितीया ।
रक्ताशोकश्चलकिसलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरबकवृतेर्माधवीमण्डपस्य ॥ २८ ॥

तस्या इति ॥ अत्र गृहोपवने । सहसहचरी विकल्पितः सभा-वः । " वयस्याली सहचरी " इति धनञ्जयः । द्वितीया द्वयोः पूरणा द्वितीया । यौ वृक्षौ । सेवते भजते । कुरबकवृतेः कुरबक एव वृतिरावरणं यस्य तस्य । "सैरेयकस्तु झिंटी स्यात्तस्मिन्कुरबको-रुणे " इत्यमरः । माधवीमण्डपस्य मधौ वसन्ते भवा माधवी तस्याः मण्डपस्तस्य अतिमुक्तलतागृहस्य । " अतिमुक्तः पुण्ड्रकः

स्याद्वासन्ती माधवीलता" इत्यमरः। प्रत्यासन्नौ सन्निकृष्टौ। चलकिसलयः चलानि किसलयानि यस्य सः। अनेन वृक्षस्य पादताडनेषु प्राञ्चलित्वं व्यज्यते। रक्ताशोकः रक्तश्चासावशोकश्च सः। रक्तविशेषणमस्य स्मरोद्दीपकत्वात्कृतम्। "असूनकैरशोकस्तु श्वेतरक्त इति द्विधा। बहुसिद्धिकरः श्वेतो रक्तः स्मरविवर्धनः॥" इत्यशोककल्पे दर्शनात्। कान्तः कमनीयः। "कान्तं मनोहरं रुच्यं मनोज्ञम्" इत्यमरः। केसरश्च वकुलश्च। "अथ केसरे वकुलः" इत्यमरः। तौ च वृक्षौच। मद्गेहिन्याः। "कलत्रं गेहिनी गृहम्" इति धनञ्जयः। मृगाक्ष्याः मृगस्येव अक्षिणी यस्याः सा तथोक्तायाः। तस्याः वनितायाः। पीडां दुःखम्। "पीडा बाधा व्यथा दुःखम्" इत्यमरः। रहयितुं निवारयितुम्। 'रह–त्यागे'। अलं शक्तौ भवत इति मन्ये जाने॥ २८॥

कामस्यैकं प्रसवभवनं विद्धि तौ मन्निवेशे
मद्गेहिन्या विरचिततलौ सेवनीयौ प्रियायाः।
एकः सख्यास्तव सह मया वामपादाभिलापी
काङ्क्षत्यन्यो वदनमदिरां दौहृदच्छद्मनास्याः॥२९॥२१॥१५॥

कामस्येति॥ मन्निवेशे मम सदने। मद्गेहिन्या मद्भार्यया। विरचिततलौ संस्कृताधिष्ठानौ। प्रियायाः भार्यायाः। सेवनीयौ श्रयणीयौ। तौ रक्ताशोककुरवकौ। कामस्य मन्मथस्य। एकं मुख्यम्। "एके मुख्यान्यकेवलाः" इत्यमरः। प्रसवभवनम् उत्पत्तिसदनम्। "प्रसवो जननानुज्ञापुत्रेषु फलपुष्पयोः" इति वैजयन्ती। विद्धि जानीहि। 'विद्–ज्ञाने' लट्। एकः तयोरन्यतरः अशोकः। मया सह तव सख्याः कान्तायाः। वामपादाभिलापी वामपादमभिलपति इत्येवंशीलः तथोक्तः। दौहृदच्छद्मनेत्यत्रापि सम्बन्धनीयं सचा भिलापावित्यर्थः। अन्यः केसरः। दौहृदच्छद्मना दौहृदं वृक्षादीनां प्रसवकारणं संस्कारद्रव्यं तरुगुल्मादीनामकाले। "पुष्पाद्युत्पा-

दकं द्रव्यं दौहृदं स्यात्ततः क्रिया " इति शब्दार्णवात् । तस्य छद्म-
ना व्याजेन । " कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे " इत्य-
मरः । अस्याः सख्याः । वदनमदिरां गण्डूषवृपरसम् । काङ्क्षति
वाञ्छति । मया सहेत्यत्रापि सम्बन्धनीयम् । अशोकबकुलयोः स्त्री-
पादताडनगण्डूषमदिरे दौहृद इति प्रसिद्धम् ॥ २९ ॥

मूलं वोच्चैर्मनसि निहितं लक्ष्यते त्वद्वियोगा-
त्तस्या साद्याध्यवसितमृतेर्बर्हिणाधिष्ठिताग्रा ।
तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि-
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ॥ ३० ॥

मूलमिति ॥ किञ्च तन्मध्ये तयोर्वृक्षयोर्मध्ये । बर्हिणा मयूरेण ।
अधिष्ठिताग्रा अधिष्ठितमग्रं यस्याः सा । स्फटिकफलका स्फटिक-
मयं फलकं पीठं यस्याः सा तथोक्ता । अनतिप्रौढवंशप्रकाशैः अन-
तिप्रौढानाम् अनतिकठोराणां वंशानां प्रकाश इव प्रकाशो येषां तैः ।
तरुणवेणुसमच्छायैः । मणिभिः मरकतशिलाभिः । मूले बद्धा
कृतवेदिकेत्यर्थः । काञ्चनी काञ्चनस्य विकारः काञ्चनी सौवर्णा ।
सा प्रसिद्धा । वासयष्टिः निवासदण्डः । " यष्टिर्दण्डे हारभेदे मधु-
केप्यायुधान्तरे " इति भास्करः । अद्य इदानीम् । तस्याः कामि-
न्याः । मनसि चित्ते । त्वद्वियोगात् तव विरहात् । अध्यवसितमृतेः
अध्यवसिता निश्चिता मृतिर्मरणं यया तस्याः । निहितं प्रतिष्ठितम् ।
उच्चैः महत् । मूलं वा मूलमिव लक्ष्यते दृश्यते ॥ ३० ॥

तां कामिन्यः कुसुमधनुषो वैजयन्तीमिवैकां
मत्वार्चन्ति प्रबलरुदिता सापि साध्वी तदास्यै ।
तालैः शिञ्जावलयसुभगैः कान्तया नर्तितो मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥३१॥२२॥१६॥

तामिति ॥ मे मम । कान्तया भार्यया । शिञ्जद्वलयसुभगैः शिञ्जा भूषणध्वनिः “ भूषणानां तु शिञ्जितम् ” इत्यमरः । “ भिदादयः क्वचित् ” इत्यङ् । शिञ्जाप्रदानि वलयानि तैः सुभगाः रम्यास्तैः । तालैः करतालैः करतलताडनैः । “ तालः कालक्रियामानम् ” इत्यमरः । नर्तितः नाटितः । वः युष्माकम् । सुहृद् सखा । नीलकण्ठो मयूरः । “ नीलकण्ठो भुजङ्गभुक् ” इत्यमरः । दिवसविगमे सायंकाले । यां वासयष्टिम् । अध्यास्ते वासयष्ट्यामध्यास्त इत्यर्थः । “शीङ्स्थासोधेराधारः ” इत्याधारे द्वितीया । तां निवासयष्टिम् । कुसुमधनुषः कामस्य । एकां मुख्याम् । वैजयन्तीमिव पताकामिव । मत्वा बुद्ध्वा । कामिन्यः वनिताः । अर्चन्ति पूजयन्ति । प्रबलरुदिता प्रबलदुःखिता । साध्वी सती । “ सती साध्वी पतिव्रता ” इत्यमरः । सापि प्रियापि । त्वदाप्त्यै तव प्राप्त्यै । अर्चेति अपिशब्देन अर्थवशाद्विभक्तिपरिणामः इति न्यायादर्चतीति क्रियाध्याहारः ॥ ३१ ॥

प्रीतिस्तस्या मम च युवतेर्निर्विवेका ततोऽहं
जानाम्येनां व्यसनपतितां मद्गृहे तच्चरोहम् ।
एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथा
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ॥ ३२ ॥

प्रीतिरिति ॥ तस्याः युवतेः यौवनस्त्रियः । “ यूनस्तिः ” इति तिन्त्यः । मम च ममापि । प्रीतिः स्नेहः । निर्विवेका निर्विभिन्ना विवेकशून्येति ध्वन्यते । तस्याः मम युवतेश्च । निर्विवेका प्रीतिरिति वा सम्बध्यते । ततु तस्मात् । एनाम् एताम् । अन्वादेशे “ इदमः ” इत्येनदादेशः ” मद्गृहे मम सदने । व्यसनपतिताम् दुःखेन निपतिताम् । अहं जानामि अहमवैमि । अहं तच्चरः अहं तस्याः भृत्यः । अतिस्नेहित इति यावत् । भो साधो हे निपुण । “ साधुः समर्थे निपु-

णे च" इति काशिकायाम् । हे मुने इति वा । "तपस्वी संयमी योगी वर्णी साधुश्च" इति धनञ्जयः । हृदयनिहितैः अतिस्मृतैरित्यर्थः । एभिः लक्षणैः पूर्वोक्तलक्षणैः । तोरणादिभिरभिज्ञानैः । द्वारोपान्ते । एकवचनमविवक्षितम् । द्वारोपान्तयोरित्यर्थः । लिखितवपुषौ लिखिते वपुषी आकृती ययोस्तौ तथोक्तौ । शङ्खपद्मौ शङ्खश्च पद्मश्च तौ तन्नामनिधिविशेषौ । "निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेः" इत्यमरः । दृष्ट्वा लक्षयेथाः निश्चिनुयाः । तत्रागारमित्यादिष्वतिसमृद्धवस्तुवर्णनादुदात्ताऽलङ्कारः ॥ ३२ ॥

तस्या दुःखप्रशमनविधौ व्यापृते मत्कलत्रे
मूकीभूतेऽप्यनुचरजने मन्दमन्दायमाने ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥३३॥२३॥१७॥

तस्या इति ॥ तस्याः प्रियायाः । दुःखप्रशमनविधौ दुःखोपशमनकार्ये । मत्कृते । मम प्रियायां व्यापृतायां सत्याम् । अनुचरजनेपि परिचारकजनेपि । मूकीभूते संलापरहिते । मन्दमन्दायमाने मन्दव्यापारवति सति । अधुना इदानीम् । "एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा" इत्यमरः । मद्वियोगेन मम प्रवासेन । भवनं गृहम् । क्षामच्छायम् उत्सवोपरमात् क्षीणकान्ति । नूनं निश्चयेन स्यादिति शेषः । तथाहि । सूर्यापाये अरुणविगमे । कमलं पद्मम् । स्वाम् आत्मीयाम् । अभिख्यां शोभाम् । "उपसर्गादातः" इत्यङ् । न पुष्यति खलु नोपचिनोति हि । सूर्यविरहितपद्ममिव । गृहपतिरहितं गृहमपि न शोभते इति तात्पर्य्यम् ॥ ३३ ॥

पश्यामुष्यामुपवनभुवि प्रेयसीं तां दधाना-
माधिं त्वत्तो विरहविधुरां मद्वचःप्रत्ययेन ।

गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः
क्रीडाशैले प्रथमकथिते रम्यसानौ निषण्णः ॥ ३४ ॥

पश्येति ॥ शीघ्रसम्पातहेतोः शीघ्रसम्पात एव हेतुस्तस्य शीघ्रप्रवेशार्थमित्यर्थः । "हेतौ हेत्वर्थैः सर्वाः प्रायः" इति षष्ठी । "सम्पातितः पतिते योगे प्रवेशे वेदसंविदोः" इति शब्दार्णवे । सद्यः सपदि । कलभतनुतां कलभस्य करिपोतस्य तनुरिव तनुर्यस्य तस्य भावस्तनुता ताम् अल्पशरीरताम् । गत्वा गमित्वा । प्रथमकथिते तस्यास्तीर इत्यादिना पूर्वोपदिष्टे । रम्यसानौ निषदनयोग्य इत्यर्थः । क्रीडाशैले कृतकगिरौ । निषण्णः उपविष्टः सन् । अमुष्याम् अस्याम् । उपवनभुवि उद्यानभूमौ । त्वत्तः भवतः । विरहविधुरां वियोगदुःखिताम् । आधिं मनःपीडाम् । "पुंस्याधिर्मानसी व्यथा" इत्यमरः । दधानां धरन्तीम् । तां प्रेयसीं प्रकृष्टप्रियाम् । मद्वचःप्रत्ययेन मम वचनविश्वासेन । पश्य प्रेक्षस्व ॥ ३४ ॥

नोचेदन्तर्गृहमधिवसेत्सा दशामुद्वहन्ती
गूढं द्रष्टुं समभिलषितां तां तदा तत्स्थ एव ।
अर्हस्यन्तर्भवनपतितां कर्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ ३५ ॥ २४ ॥ १८ ॥

नोचेदिति ॥ नो चेत् अथवा उपवने । नास्ति चेदित्यर्थः । सा प्रिया । दशां विरहावस्थाम् । उद्वहन्ती बिभ्रती । अन्तर्गृहं गृहस्यान्तस्तथोक्तस्तम् । अधिवसेत् तिष्ठेत् । "वसोनूपाध्याङ्" इति द्वितीया । तदा तर्हि । तत्स्थ एव क्रीडाशैलस्थ एव । समभिलषिताम् अभिकाङ्क्षिताम् । तां प्रियाम् । गूढं गुप्तं यथा तथा । द्रष्टुं दर्शनाय । अल्पाल्पभासम् अल्पाल्पा अल्पप्रकारा भाः प्रकाशो यस्यास्ताम् । तद्गुणसदृशे वेति द्विरुक्तिः । खद्योतालीविलसितनिभां खद्योतानामालिस्तस्या विलसितेन स्फुरितेन निभां सदृशाम् । विद्युदुन्मेषदृष्टिं

विद्युदुन्मेषस्तडित्प्रकाशः स एव दृष्टिस्ताम् । अन्तर्भवनपतितां भव नस्यान्तरन्तरभवनं तत्र पतितां प्रविष्टाम् । कर्तुं करणाय । अर्हसि योग्यो भवसि । विद्युद्दृष्टिं गृहान्तर्व्यापारयेत्यर्थः । यथा कश्चित् किञ्चिदन्विष्यन् क्वचिदुन्नते स्थित्वा शनैःशनैः दृष्टिमिष्टदेशे पातयति तद्वदित्यर्थः ॥ ३५ ॥

इतः षड्भिः कुलकम्–द्व्यन्तरितार्धवेष्टितम्—

आलोके ते निपतति पुरा सा बलिव्याकुला वा
त्वत्सम्प्राप्त्यै विहितनियमान्देवताभ्यो भजन्तः ।
बुद्ध्यारूढं चिरपरिचितं त्वद्गतं ज्ञातपूर्वं
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ति ॥ ३६ ॥

अर्ध वेष्टितम्—

आलिख्यातो भवदनुकृतिं चक्षुरुन्मील्य कृच्छ्रा-
त्पश्यन्ती वा सजलनयनं प्राक्तनीं मन्यमाना ।
पृच्छन्ती वा मधुरवचनं सारिकां पञ्जरस्थां
कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति॥३७॥२५॥२२॥

एकान्तरितम्—

उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
गाढोत्कण्ठं करुणविरुतं विप्रलापायमानम् ।
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा
त्वामुद्दिश्य प्रचलदलकं मूर्छनां भावयन्ती ॥ ३८ ॥

द्व्यन्तरितम्—

तन्त्रीरार्द्रां नयनसलिलैः सारयित्वा कथञ्चित्
स्वाङ्गुल्यग्रैः कुसुममृदुभिर्वल्लरीमास्पृशन्ती ।

ध्यायंध्यायं त्वदुपगमनं शून्यचिन्तानुकण्ठी
भूयोभूयः स्वयमपि कृतां मूर्छनां विसरन्ती॥३९॥२६॥२३॥

एकान्तरितम्—

शेषान्मासान् विरहदिवसस्थापितस्यावधेर्वा
जन्मान्यत्वेऽप्यधिगतिमितान्देवभावानुभावात् ।
विन्यस्यन्ती भुवि गणनया देहलीमुक्तपुष्पैः
स्मृत्यारूढान्स्फुटयितुमिव स्वात्मनो मृत्युसन्धीन्४०

बुद्ध्यध्यासात्स्वपन इव विस्पष्टभूयं त्वयामा
संभोगं वा हृदयरचितारम्भमास्वादयन्ती ।
मूर्छासुप्ता समयमथवा श्वासमाना सखीभिः
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः॥ ४१ ॥ २७ ॥२४॥

सर्वविरहिणीसाधारणलक्षणानि सम्भावयति—आलोक इति ॥ वा अथवा । " उपमायां विकल्पे वा " इत्यमरः । त्वत्सम्प्राप्त्यै तव सम्प्राप्तिनिमित्तम् । विहितनियमान् विशिष्टव्रतविशेषान् । " नियमस्तु स यत्कर्म नित्यम गन्तुसाधनम् " इत्यमरः । भजन्ती सेवमाना । देवताभ्यः वलिषु नित्यं प्रोषितागमनेषु च देवताराधनेषु च व्याकुला व्यापृता । वा अथवा । बुद्ध्यारूढं चित्तारूढम् । परिचितं चिराभ्यस्तम् । ज्ञातपूर्वं पूर्वं ज्ञातं तथोक्तम् । 'क्त' इति बहुव्रीहौ पूर्वं निपातः । विरहतनु विरहेण तनूकृतम् । भावगम्यं ज्ञानज्ञेयम् । तत्कार्यस्यादृष्टतरत्वादस्य भावनैवावगम्यत इत्यर्थः । त्वद्गतं त्वां गतम् । त्वयि विद्यमानमित्यर्थः । मत्सादृश्यं मदाकारसाम्यम् मत्प्रतिकृतिमित्यर्थः । लिखन्ती फलकादौ रचयन्ती । सा वनिता । तव आलोके दर्शने । पुरा पूर्वम् अग्रे वा । "स्यात्प्रबन्धे चिरातीते

ते निकटागामिके पुरा " इत्यमरः । निपतति दृष्टिगोचरा भविष्यतीत्यर्थः-द्व्यन्तरितार्धवेष्टितमिदम् ॥ ३६ ॥

आलिख्येति ॥ वा अथवा । अतः अनन्तरम् । भवदनुकृतिम् तवाकृतिम् कचित् फलकादौ । आलिख्य लिखित्वा । प्राक्तनीं प्रागनुभूतविषयाम् । मन्यमाना मन्यते इति मन्यमाना बुध्यमाना । कृच्छ्रात् कष्टात् । चक्षुः नयनम् । जात्येकवचनम् । उन्मील्य उत्पाट्य । सजलनयनं साश्रुनेत्रम् । पश्यन्ती अवलोकयन्ती । वा अथवा । रसिके भो सरसे । त्वं भवती । तस्य भर्तुः । प्रवासिनः स्वामिनः । प्रिया हि इष्टा खलु स्मरसि कच्चित् बुध्यसे कच्चित् । " कच्चित्कामप्रवेदने " इत्यमरः । " स्मृत्यर्थदयेशां कर्म " इति कर्मणि षष्ठी । भर्तारं स्मरसि किमित्यर्थः । इति एवम् । पञ्जरस्थां हिंस्रेभ्यो विहितरक्षणामित्यर्थः । सारिकां स्त्रीपक्षिविशेषाम् । मधुरवचनं मञ्जुलभाषणं यथा तथा । पृच्छन्ती वाचयन्ती । सति आलोके पुरा निपततीत्यत्रोत्तरत्राप्यन्वीयते ॥ ३७ ॥

उत्सङ्ग इति ॥ वा अथवा । हे सौम्य हे साधो । मलिनवसने मलीमसवस्त्रे । " प्रोषिते मलिनाकृतिः " इति शास्त्रादित्यर्थः । उत्सङ्गे ऊरौ । वीणां निक्षिप्य । त्वां भवन्तम् । उद्दिश्य सङ्कीर्त्य । विरचितपदं विरचितानि पदानि यस्य तत्तथोक्तम् । मद्गोत्राङ्कं मम गोत्रं नाम अङ्कः चिह्नं यस्मिन् तन्मद्गोत्रांकं मन्नामाक्षरचिह्नं मदन्वयाङ्कं वा । " गोत्रं तु नाम्नि च " इत्यमरः । गेयं गीतार्हप्रबन्धम् । गीतमिति वा पाठः । गाढोत्कण्ठं गाढा उत्कण्ठा यस्मिन्कर्मणि तत् । करुणविरुतं करुणस्वरं यथा तथा । विप्रलापायमानं प्रलापसमानम् । उद्गातुकामा उच्चैर्गातुं कामोऽभिलाषो यस्याः सा तथोक्ता । देवयोनित्वाद्गान्धारग्रामम् । गातुकामेत्यर्थः । तदुक्तम्—
" षड्जमध्यमनामानौ ग्रामौ गायन्ति मानुषाः । न तु गान्धारनामा वै स लभ्यो देवयोनिभिः ॥ " इति । प्रचलदलकं प्रचलन्तोऽलका

यस्मिन्कर्मणि तत् । मूर्छनां क्रमविशेषविशिष्टस्वरस्थापनाम् । "नम-गेपु विलोमेन स्वादयस्वरपूर्वगाः । पुराणास्थापनौ स्यातामूर्छनाः सप्तसप्त हि " इति गीतरत्नाकरे । भावयन्ती ध्यायंती । अन्यान्वयः प्राग्वदेव । एकान्तरितमिदम् ॥ ३८ ॥

तन्त्रीरिति ॥ अथवा । नयनसलिलैः प्रियतमस्मृतिजनितैः नेत्राश्रुभिः । आर्द्राः सार्द्राः । "आर्द्रं क्लिन्नम्" इत्यमरः । तन्त्रीर्वीणातन्तून् । कुसुममृदुभिः पुष्पवन्मृदुभिः । स्वाङ्गुल्यग्रैः निजाङ्गुलीनामग्रतलैः । कथञ्चित् कृच्छ्रेण । सारयित्वा प्रमृज्य अन्यथा कणितासम्भवादित्यर्थः । वल्लकीं वीणाम् । आस्पृशन्ती स्पर्शनं कुर्वन्ती । त्वदुपगमनं तवागमनम् । ध्यायंध्यायं ध्यात्वाध्यात्वा । "पूर्वाग्रे प्रथमाभीक्ष्ण्ये खमुञ्" इत्याभीक्ष्ण्ये खमुञ् । शून्यचिन्तानुकण्ठी नष्टचिन्तया अनुकूलः कण्ठो यस्याः सा । भूयोभूयः पुनःपुनः । स्वयमधिकृतां स्वयम् आत्मनाऽधिकृतामारब्धाम् । मूर्छनां क्रमविशेषविशिष्टस्वरस्थापनाम् । विस्मरन्ती स्खलन्ती । अन्त्यान्वयः प्राग्वत् । विस्मरणं चात्र दयितगुणस्मृतिजनितमूर्छापदेशादेव । तथा रसाकरे-" वियोगायोगयोरिष्टगुणानां सदा कीर्तनात्स्मृतिः । साक्षात्कारोऽथवा मूर्छा जायते दशधा " इति । मत्सादृश्यमित्यादिना मनःसङ्गवृत्तिः सूचिता । द्व्यन्तरितमिदम् ॥ ३९ ॥

शेषानिति ॥ वा अथवा । जन्मान्यत्वेपि । अतीतवर्तमानभाविभवेपि । विरहदिवसस्थापितस्य विरहस्य प्रथमदिवसात् दिवसे वा स्थापितस्य निश्चितस्य । अवधेः प्रमाणकालस्य । देवभावानुभावात् देवभावो देवत्वं तस्य अनुभावः प्रभावस्तस्मात् । "अनुभावः प्रभावे च सतां च मतिनिश्चयः" इत्यमरः । अधिगतिमितानप्रमितान् शेषान मासान् गतावशिष्टान् । सर्वान्मासान् । देहलीमुक्तपुष्पैः देहली द्वारशाखायाः दारु " ग्रहावग्रहणी देहली " इत्यमरः । तत्र दत्तानि

राशित्वेन निहितानि तैः पुष्पैः कुसुमैः । स्मृत्यारूढान् स्मरणारूढान् । स्वात्मनः स्वजीवस्य । मृत्युसन्धीन् मरणस्य सन्धीन् । "रन्ध्रसंश्लेषयोः सन्धिः" इति धनञ्जयः । स्फुटयितुमिव व्यक्तीकर्तुमिव । गणनया एको द्वावित्यादिसङ्ख्यानेन । भुवि भूमितले । विन्यस्यन्ती-विक्षिपन्ती । कुसुमविन्यासैर्विरहावधेर्मासान् गणयन्तीत्यर्थः ॥४०॥

बुद्ध्यध्यासादिति ॥ वा एवं नास्ति चेत् । स्वपने स्वप्ने । विस्पष्ट-भूयमिव स्पष्टतरत्वमिव । "हत्याभूयं भावे" इति साधुः । बुद्ध्यध्यासात् मतिनिश्चयात् । त्वयामा त्वया सह । "अमा सह समीपे च" इत्यमरः । हृदयरचितारम्भं हृदये मनसि निहितः सङ्कल्पितः आरम्भः उपक्रमः यस्य तम् । यद्वा—हृदये निहिताश्चुम्बनाऽलिङ्गनादयो व्यापारा यस्मिन् तम् । सम्भोगं रतिम् । आस्वादयन्ती अनुभवन्ती । अथवा वा । मूर्च्छासुप्ता मूर्च्छया शयिता । सखीभिः वयस्याभिः । सभयं भयसहितं यथा तथा । आश्वास्यमाना विस्रंभ्यमाणा सा वनिता । ते तव । आलोके दर्शने ॥ निपतति गोचरा भवतीति पूर्वेणान्वयः । अर्थान्तरन्यासेन[1] परिहरति । प्रायेणेति ॥ अङ्गनानां स्त्रियाम् । रमणविरहेषु । एते कथितार्थाः । प्रायेण प्राचुर्येण । विनोदाः कालयापनोपायाः । एतेन सङ्कल्पावस्थोक्ता । तथोक्तम्—"सङ्कल्पो नाथविषयो मनोरथ उदाहृतः" ॥ इति षड्भिः कुलकम् ॥ ४१ ॥

सख्यालापैः सुखविरुतिभिस्तद्विनोदैस्तथाऽन्यैः
सव्यापारामहनि न तथा पीडयेद्विप्रयोगः ।
स्वापापायाद्धृदयनिहितं त्वामजस्रं स्मरन्तीं
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते ॥ ४२ ॥

सख्यालापैरिति ॥ रात्रौ निशायाम् । स्वापापायात् निद्राया अपायात् अभावात् । हृदयनिहितं हृदये स्मृतम् । त्वां भवन्तम् ।

---

१ उक्तिरर्थांतरन्यासस्स्यात्सामान्यविशेषयोरिति लक्षणात् ।

अजस्रम् अनवरतम् । "नित्यानवरताजस्रम्" इत्यमरः । स्मरन्तीं । ते तव । सखीं प्रियाम् । गुरुतरशुचं गुरुतरा शुक् यस्याः सा तां बहुशोकाम् । निर्विनोदां निर्व्यापाराम् । शङ्के तर्कयामि । "शङ्काभयवितर्कयोः" इति शब्दार्णवे । अहनि दिवा । सख्यालापैः सख्या भाषणैः । सुखविरुतिभिः सुखकथाभिः । स्रग्विनोदैः मालाविनोदैः । तथा अन्यैः विलासैः । व्यापारां पूर्वोक्तचित्रलेखनादिव्यापारसहिताम् । विप्रयोगः विरहः । तथा रात्राविव । न पीडयेत् न बाधेत् ॥ ४२ ॥

इतो नवभिः कुलकम्—

एवं प्रायैस्त्वयि सुभगतां व्यञ्जयद्भिर्यथार्थै-
मत्संदेशैः सुखयितुमतः पश्य साध्वीं निशीथे ।
पर्यस्ताङ्गीं कुसुमशयने निस्सुखामाधिरुद्धां
तामुन्निद्रां भवति शयनां सन्नवातायनस्थः ॥४३॥२८॥२५॥

चित्रन्यस्तामिव सवपुषं मन्मथीयामवस्था-
माधिक्षामां विरहशयने सन्निपण्णैकपार्श्वम् ।
तापापास्त्यै हृदयनिहितां हारयष्टिं दधानां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ॥ ४४ ॥

मत्कामिन्या प्रणयरसिकैः सन्निधौ त्वत्प्रियाया
नीता रात्रिः क्षणमिव मया सार्धमिच्छारतैर्या ।
निद्राद्विड्भिर्मुहुरुपचितैः पक्ष्मरुद्भिर्गलद्भि-
स्तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥४५॥ २९॥२६॥

अन्तस्तापं प्रपिशुनयता स्वं कवोष्णेन भूयो
निःश्वासेनाधरकिसलयक्लेशिना विक्षिपन्तीम् ।

शुद्धस्नानात्परुषमलकं नूनमागण्डलम्बं
विश्लिष्टं वा हरिणचरितं लाञ्छनं तन्मुखेन्दोः ॥ ४६ ॥

मद्विश्लेषादुपहितशुचो दूरदेशस्थितस्य
प्राणेशस्य स्वयमनुचिताऽनङ्गबाधस्य जातु ।
मत्संयोगा कथमिव नयेत्स्वप्नजोऽपीति निद्रा-
माकाङ्क्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ॥४७॥३०॥२८

आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा
जन्मन्यस्माद्व्यवहिततरे वेणिका स्मर्यमाणा ।
शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयां
स्वां निन्दन्तीं विरहवपुषां सङ्गमं वा विधाय ॥४८॥

ता वक्रेन्दुग्रसनरसिकां राहुमूर्त्तिं श्रितां वा
व्योमच्छायां मदनशिखिनो धूमयष्टीयमानां ।
स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्तीं
गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥४९॥३१॥२९।

पादानिन्दोरमृतशिशिराञ्जालमार्गप्रविष्टा-
न्निष्टान्बन्धूनिव मृगयितुं संश्रितान् सङ्ग्रहीतुम् ।
पूर्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव
प्रत्याहृत्य स्वनयनयुगं चेतसा धूयमानाम् ॥ ५० ॥

भूयोभूयः शिशिरकिरणे स्वान्कराञ्जालमार्गै-
रातन्वाने पुनरपि गताभ्यागतैः क्लेशमानम् ।
खेदाच्चक्षुः सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेह्नीव स्थलकमलिनीं नप्रबुद्धां नसुप्ताम् ॥५१॥३२॥२७॥

एवमिति ॥ अतः कारणात् । त्वयि भवति सुभगतां रम्यताम् । व्यञ्जयद्भिः प्रकटयद्भिः । एवं कथितरीत्या । प्रायैर्बहुभिः । यथार्थैः तथ्यभूतैः । मत्संदेशैः मम वाचिकैः । सुखयितुम् आनन्दयितुम् । निशीथे अर्धरात्रे । " अर्धरात्रनिशीथौ द्वौ " इत्यमरः । सद्मवातायनस्थः सौधगवाक्षस्थस्सन् । कुसुमशयने पुष्पशय्यायाम् । पर्यस्ताङ्गीं पातितशरीराम् । निःसुखां सुखरहिताम् । आधिरुद्धां मनःपीडार्त्ताम् । " पुंस्याधिर्मानसी व्यथा " इत्यमरः । उन्निद्राम् उत्सृष्टस्वापाम् । अवनिशयनाम् अवनिरेव शयनं यस्यास्तां नियमार्थं भूशायिनीम् । साध्वीं पतिव्रताम् । तां त्वत्सखीम् । पश्य प्रेक्षस्व । तदुक्तं रसाकरे– "सुखायते च पितरौको मित्रदूतशुकादयः । सुखयन्तीष्टकनसुखोपायैर्वियोगिनाम्" इति । अनेन जागरावस्थोक्ता ॥४३॥

चित्रन्यस्तामिति ॥ चित्रन्यस्तां चित्रलिखिताम् । सवपुषं शरीरसहिताम् । मन्मथीयां मदनसम्बन्धाम् । अवस्थामिव दशामिव । आधिक्षामां मनोव्यथया कृशीभूताम् । क्ष्यायतेः कर्त्तरि क्तः । "क्षः" इति क्तस्य मः । विरहशयने विरहोचितशय्यायाम् । पल्लवादिरचिततल्प इत्यर्थः । सन्निपण्णैकपार्श्वां सन्निपण्णं न्यस्तम् एकं पार्श्वं यस्यास्ताम् । अत एव । तापापास्त्यै तापनिवारणाय । हृदयनिहितां हृदये निक्षिप्ताम् हारयष्टिं हारलताम् । " यष्टिर्दण्डे हारभेदे मधुकेप्यायुधान्तरे " इति भास्करः । दधानां वहन्तीम् । प्राचीमूले प्राच्याः पूर्वदिशो मूले । उदयगिरिप्रान्त इत्यर्थः । प्राचीग्रहणं क्षीणावस्थाद्योतनार्थम् । मूलग्रहणं दृश्यत्वार्थं । कलामात्रशेषां कलैव शेषो यस्यास्ताम् । सुधांशोश्चन्द्रस्य । तनुमिवमूर्त्तिमिव । स्थिताम् तां पश्येति पूर्वेणैवान्वयः । अनेन कार्श्यावस्थोक्ता ॥ ४४ ॥

मत्कामिन्या इति ॥ त्वत्प्रियायाः तव भार्यायाः । सन्निधौ समीपे । मया सार्धम् । मत्कामिन्या मद्वल्लभया । प्रणयरसिकैः प्रीतिरसविशेषैः । इच्छारतैः अभीष्टनिधुवनैः । या रात्रिः निशा । क्षण-

मिव समयमिव । नीता यापिता । तामेव तद्रात्रिमेव । विरहमहतीं विरहेण पृथुभूताम् । महत्त्वेन प्रतीयमानामित्यर्थः । निद्राद्विड्भिः निद्राविरोधिभिः । मुहुः पुनःपुनः । उपचितैः अवतीर्णैः । पक्ष्मरुद्भिः पक्ष्मरोधयद्भिः । " पक्ष्माक्षिरोम्णि किञ्जल्के तन्त्वाद्यंशेप्यणीयसि " इत्यमरः । गलद्भिः स्रवद्भिः । उष्णैः अशिशिरैः । अश्रुभिः अस्रैः । " नेत्राम्बुरोदने चास्रमश्रु च " इत्यमरः । यापयन्तीं गमयन्तीम् । " यातेर्ण्यन्ताच्छतृत्यः " " ह्रीव्लीरिक्नायि " इत्यादिनाप् । तां पश्येत्यन्वयः । स एव कालः सुखिनामल्पः प्रतीयते दुःखिनां तु विपरीत इति भावः । एतेन लज्जात्यागो व्यज्यते ॥४५॥

अन्तस्तापमिति ॥ स्वं स्वकीयम् । अन्तस्तापम् अन्तर्गतं विरहतापम् । प्रपिशुनयता प्रकर्षेण सूचयता । कवोष्णेन मन्दोष्णेन । " कोष्णं कवोष्णं मन्दोष्णम् " इत्यमरः । अधरकिसलया क्लेशिना दशनच्छदपल्लवनिवाधिना । भूयः मुहुः । निश्वासेन निश्वसनेन । तन्मुखेन्दोः तस्याः वदनचन्द्रमसः । हरिणरचितं मृगविहितम् । विश्लिष्टं शिथिलितम् । लाञ्छनं वा चिह्नमिव । शुद्धस्नानात् विरहिणीत्वाद्गन्धस्नेहादिरहितस्नानात् । परुषं कर्कशम् । गंडलंबम् "सुप्सुपा"इति समासः । गण्डपर्यन्तावलम्बी । अलकं चूर्णकुन्तलम् । नूनम् अवश्यम् । विक्षिपन्तीं चालयन्तीम् । तां पश्येत्यन्वयः ॥ ४६ ॥

मद्विश्लेषादिति ॥ मद्विश्लेषात् मम वियोगात् । उपहितशुचः प्राप्तदुःखस्य । दूरदेशस्थितस्य दविष्ठदेशस्थस्य । अनुचितानङ्गबाधस्य अनुचिता अयोग्या अनङ्गस्य मदनस्य बाधा यस्य तस्य । प्राणेशस्य दयितस्य । स्वप्नजोपि स्वप्नावस्थाजन्योपि साक्षात्सम्भोगासम्भवादिति भावः । मत्संयोगः मम सम्भोगः । स्वयं जातुस्वकीयम् । कथं केन प्रकारेण । उपनयेदिति आगच्छेदिति आशयेति शेषः । " प्रार्थनायां लिङ् ।" नयनसलिलोत्पीडरुद्धावकाशां नयनसलिलोत्पीडनान् अश्रुवत्या रुद्धावकाशाम् आक्रान्तावस्थां दुर्लभा-

मित्यर्थः। निद्रां स्वापम्। "स्वान्निद्राशयनं स्वापः" इत्यमरः। आकाङ्क्षन्तीम् अभिलपन्तीम्। स्वप्नहेतुत्वादिति भावः तां पश्य ॥४७॥

आद्य इति ॥ आद्ये प्राक्तने। विरहदिवसे वियोगदिने। दाम पुष्प माल्यम्। हित्वा त्यक्त्वा। या शिखा चूडा। "शिखा चूडा केशपाशः" इत्यमरः। बद्धा ग्रथिता। अस्मादेतस्माज्जन्मनः। व्यवहिततरे अन्तरिततरे। जन्मनि भवे। स्मर्यमाणा चिन्त्यमाना। या वेणिका प्रवेणी। "वेणिः प्रवेणी शीर्षण्यशिरस्यौ विशदे कचे" इत्यमरः। शापस्य अरविन्दराजकृतधिक्कारस्य। अन्ते अवसाने। विगलितशुचा व्यपगतशुचेति वा पाठः। वीतशोकेन मया। उद्वेष्टनीयाम् उद्वेष्टितुं योग्याम्। तां शिखां वेणिकां च। वा अथवा विरहवपुषां वियोगमूर्तीनाम्। सङ्गमं संसर्गम्। विधाय कृत्वा। स्वाम् आत्मानम्। निन्दन्तीं कुत्सयन्तीम्। तां पश्य ॥ ४८ ॥

तामिति ॥ वक्रेन्दुग्रसनरसिकां वक्रमिवेन्दुस्तस्य ग्रसने स्वीकारे रसिकां प्रीताम्। श्रिताम् आगताम्। राहुमूर्तिं राहुदेहम्। वा इव। व्योमच्छायाम् आकाशच्छविम् श्यामलामित्यर्थः। मदनशिखिनः मन्मथज्वलनस्य। "शिखिनौ वह्निबर्हिणौ" इत्यमरः। धूमयष्टीयमानां धूमयष्टीयतेऽसौ तथोक्ताम् धूमदण्डोपमामित्यर्थः। स्पर्शक्लिष्टां स्नेहद्रव्यायोगात् स्पर्शे सति केशमूलेषु सव्यथामित्यर्थः। कठिनविषमां कठिना चासौ विषमा च निम्नोन्नता ताम्। "खञ्जकुब्जादिवदन्यतरस्य प्राधान्यविवक्षायां "विशेषणं व्यभिचार्येकार्थं कर्मधारयश्च" इति समासः। ताम् एकवेणीम् एकीभूतप्रवेणीम्। "पूर्वकाले" इत्यादिना तत्पुरुषः। तथाभूतां शिखाम्। अयमितनखेन "यम उपरमे" यम्यन्ते स्म यमिताः शमिता इत्यर्थः। न यमिताः इति नञ् समासः। अयमिताः अतर्कितोपान्ता नखा यस्य तेन। करेण हस्तेन। गण्डाभोगात् कपोलप्रदेशात्। "गण्डौ

कपोलविस्फोटौ" इत्यमरः । असकृत् मुहुर्मुहुः । तारयन्तीम् अपसारयन्तीम् । तां पश्य । असकृत्सारणेन चित्तविभ्रमदशा सूच्यते ॥

पादानिति ॥ इष्टान् अभिमतान् । बन्धून् बान्धवान् । मृगयितुम् अन्वेषयितुम् । संश्रितानिव आश्रितानिव । जालमार्गप्रविष्टान् गवाक्षविवरागतान् । अमृतशिशिरान् अमृतमिव शिशिरान् । सुधावदतिहितस्पर्शान् । इन्दोः सुधांशोः । पादान् रश्मीन् । "पादा रश्म्यङ्घ्रितुर्यांशाः" इत्यमरः । पूर्वप्रीत्या पूर्ववदानन्दकरा भविष्यन्तीत्यर्थः । सङ्ग्रहीतुं सङ्ग्रहणाय । अभिमुखं सम्मुखं यथा तथा । गतं यातम् । तथैव तत्प्रकारेणैव । सन्निवृत्तं प्रत्यागतम् । स्वनयनयुगं निजनेत्रद्वयम् । प्रत्याहृत्य अपहृत्य । चेतसा मनसा । धूयमानां कम्पमानाम् । तां पश्य । चन्द्ररश्मिस्पर्शे विरहिणां दुःखमेवेति भावः ॥ ५० ॥

भूय इति ॥ शिशिरकिरणे शिशिराः तुषाराः किरणाः यस्य तस्मिन् चन्द्रे । भूयोभूयः पुनःपुनः । स्वान् स्वकीयान् । करान् किरणान् । जालमार्गैः गवाक्षविवरैः । पुनरपि आतन्वाने पुनरपि विस्तार्यमाणे सति । गताभ्यागतैः याताभ्यायातैः । क्लिश्यमानं विबाध्यमानम् । चक्षुः दृष्टिः । खेदात् विषादात् । सलिलगुरुभिः अश्रुभरितैः । पक्ष्मभिः नेत्रलोमभिः । छादयन्तीं वारयन्तीम् । अत एव । साभ्रे मेघसहिते । अह्नि दिवसे । दुर्दिन इत्यर्थः । न प्रबुद्धां न विकसिताम् । न सुप्तां न मुकुलिताम् । उभयत्रापि नञ् । नशब्दस्य "सुप्सुपा" इति समासः । स्थलकमलिनीमिव स्थलपद्मिनीमिव । स्थिताम् । तां त्वत्सखीम् । पश्य प्रेक्षस्वेति पूर्वेणान्वयः । एतेन विषयद्वेषाख्यं सूचितम् । नवभिः कुलकम् ॥ ५१ ॥

सा संन्यस्ताभरणमबला पेलवं धारयन्ती

वीताहारा नयनसलिलैराप्लुतापाण्डुगण्डम् ।

शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रं
त्वामप्यन्तर्विचलितधृतिं तां दशां नेतुमर्हेत् ॥५२॥

सेति ॥ अबला न विद्यते बलं यस्याः सा दुर्बला । वीताहारा त्यक्तजेमना । "जेमनं लेह आहारः" इत्यमरः । संन्यस्ताभरणं त्यक्ताभरणम् । पेलवं कृशम् । "पेलवं विरलं तनु" इत्यमरः । पेशलमिति वा पाठः । पेशलं कोमलम् । "कोमलं मृदु पेशलम्" इति धनञ्जयः । नयनसलिलैः अश्रूदकैः । आप्लुतापाण्डुगण्डम् । आप्लुतावार्द्रितौ आपाण्डू ईषत्पाण्डू गण्डौ यस्य तत् तथोक्तम् । "आप्लुतः स्नातके स्नाते" इति विश्वः । शय्योत्सङ्गे शयनतले । दुःखदुःखेन दुःखप्रकारेण । "रिद्गुणस्सदृशः" इत्यादिना द्विरुक्तिः । असकृत् अनेकशः । निहितं विन्यस्तम् । गात्रं शरीरम् धारयन्ती वहन्ती । सा त्वत्सखी । अन्तर्विचलितधृतिम् अन्तःप्रकम्पितधैर्यम् "धृतिर्धारणधैर्ययोः" इत्यमरः । त्वामपि भवन्तमपि । तां दशां तदवस्थाम् । नेतुं प्रापयितुम् । अर्हेत् योग्या भवेत् । तां दृष्ट्वा त्वमपि दुःखितो भवसीत्यर्थः ॥ ५२ ॥

अत्रात्यन्ताशक्तया मूर्च्छावस्था सूच्यते—

शय्योपान्ते भृशमपसुखा मत्स्यलोलं लुलन्ती
बद्धोत्कम्पश्वसितविवशा कामपात्रायिता सा ।
त्वामप्यास्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥५३॥२३॥२०॥

शय्योपान्त इति ॥ शय्योपान्ते शय्यापार्श्वे । अपसुखा सुखरहिता । मत्स्यलोलं मत्स्यानांलोलं चञ्चलं यथा तथा । "लोलश्चलसतृष्णयोः" इत्यमरः । भृशम् अत्यन्तम् । लुलन्ती लुठन्ती । बद्धोत्कम्पश्वसितविवशा सम्बद्धोत्कम्पनश्वासयोरधीना । कामपात्रायिता कामपात्रा-

यते स्म तथोक्ता मन्मथावस्थास्पदा। सा दयिता। त्वामपि भवन्तमपि। नवजलमयं नवाम्बुरूपम्। आस्रं बाष्पम्। "अस्रं आस्रश्च पुलिङ्गौ क्लेशे च रुधिरेऽश्रुणि" इति वैजयन्ती। अवश्यम् सर्वदा। मोचयिष्यति मुञ्चयिष्यति। मुचेः द्विकर्मकत्वम्। तथाहि। प्रायः प्रायेण। "प्रायो भूम्नि" इत्यमरः। आर्द्रान्तरात्मा मृदुहृदयः। मेघस्तु द्रवान्तःशरीरः। सर्वः सर्वजनोपि। करुणावृत्तिः करुणामयावृत्तिरन्तःकरणवर्तनं यस्य सः। भवति। अस्मिन्नवसरे सर्वथा त्वया शीघ्रमनन्तरदशापरिहाराय गन्तव्यमित्यभिप्रायः। सम्भोगो विप्रयोगश्चेति शृङ्गारो द्विधा। विप्रलम्भे स्त्रीणामवस्था दश। तदुक्तं शृङ्गारमञ्जर्याम्—"दृक्प्रीतिश्च मनस्सक्तिः सङ्कल्पो जागरस्तथा। अरतिर्लज्जात्यागो मोहो मूर्छा मृतिर्दश" इति। अत्र चित्रलेखनतदीक्षणाद्यभिप्रायेषु चक्षुःप्रीत्याद्यवस्थाभेदो बुद्धिमद्भिरवसेयः॥५३॥

नन्वीदृशीं दशां प्राप्तेति कथं त्वया निर्णीतमित्याशयेनाह—

बन्धुप्रीतिं गुरुजन इवादृत्य कान्ताद्वितीये
जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मात्।
संवासाच्च व्यतिकरमिमं तत्त्वतो वेद्मि तस्मा-
दित्थंभूतां प्रथमविरहे तामहं तर्कयामि॥ ५४॥

बन्धुप्रीतिमिति॥ गुरुजन इव मातृपित्रादाविव। कान्ताद्वितीये द्वितयकान्ताजने। अस्य स्त्रीजने इत्यर्थः। बन्धुप्रीतिं बान्धवानुरागम्। जाने जानामि। अस्मात् कारणात्। संवासाच्च संवसनं संवासस्तस्मादपि। इमं व्यतिकरं व्यसनमिदम्। "व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोः" इति विश्वः। तत्त्वतः परमार्थतः। वेद्मि जाने। तस्मात् कारणात्। अहम्। प्रथमविरहे आद्यविप्रलम्भे। प्रथमग्रहणं दुःखातिशयद्योतनार्थम्। तां त्वत्सखीम्। इत्थंभूतां पूर्वोक्तापन्नावस्थाम्। तर्कयामि निश्चिनोमि॥ ५४॥

ननु सुभगमानिनामेष स्वभावः यदात्मनि स्त्रीणामनुरागप्रकटनं तत्राह–

तन्मे सत्यं सकलमुदितं निश्चिनु स्वार्थसिद्ध्यै
स्निग्धां वृत्तिं मनसि घटयन् येन साध्यानुविद्धम् ।
वाचालं मां न खलु सुभगंमन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद्भ्रातरुक्तं मया यत् ॥५५॥२४॥२१॥

तदिति ॥ भ्रातः भो सहोदर । यत् यस्मात् कारणात् । मया यक्षेण । उक्तं कथितम् । निखिलं सकलम् । अचिरात् क्षिप्रमेव । प्रत्यक्षं दृष्टिविषयम् । भविष्यतीति शेषः । येन कारणेन । सुभगंमन्यभावः सुभगमात्मानं मन्यभावः सुभगमात्मानं मन्यते इति सुभगंमन्यः । "कर्तृस्वः" इति खशः ॥ "खित्यरुः–" इत्यादिना मम् । तस्य भावः तथोक्तः । सुन्दरमानित्वम् । साध्यानुस्यूतम् । मां यक्षम् । वाचालं बहुभाषिणम् । "वागालापौ" इत्यालच्यः । "स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक्" इत्यमरः । न करोति खलु न विदधाति हि । वृथासौन्दर्याभिमानात्प्रलापिनं न करोतीत्यर्थः । तत्तस्माद्धेतोः स्वार्थसिद्ध्यै स्वार्थस्य दिव्यभोगानुभवस्य सिद्ध्यै साधनाय । मनसि चित्ते । स्निग्धां विश्वस्ताम् । वृत्तिं वर्त्तनाम् । घटयन् रचयन् । मे मम सकलमुदितं समस्तं वचनम् । "उक्तं भाषितमुदितम्" इत्यमरः । सत्यं तथ्यम् । निश्चिनु निश्चिनुयाः ॥ ५५ ॥

भूयः प्रीत्यै भवतु सुदती सा मदाज्ञाकृतस्ते
स्निग्धं चक्षुस्त्वयि निदधती दृष्टमात्रे पुरा यत् ।
रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम् ॥ ५६ ॥

भूय इति ॥ यत् यस्मात् पुरा पूर्वम् । दृष्टमात्रे आलोकितमात्रे । त्वयि भवति । अलकैश्चूर्णकुन्तलैः । रुद्धापाङ्गप्रसरं रुद्धोऽपाङ्गयोः प्रसरो विस्तारो यस्य सः तथोक्तम् । अञ्जनस्नेहशून्यम् अञ्जनस्य स्नेहः स्निग्धत्वम् । तेन शून्यं विकलम् । अपि च किञ्च । मधुनः वृष्यरसस्य । प्रत्यादेशात् प्रतिषेधात् । "प्रत्यादेशो निराकृतिः" इत्यमरः । विस्मृतभ्रूविलासं विस्मृतो भ्रुवोर्विलासो येन तथोक्तम् । स्निग्धं स्नेहयुतम् । चक्षुः नयनम् । निदधती निक्षिपन्ती । सा सुदती शोभना दन्ता यस्याः सा सुदती । "वयसि दन्तस्य दतृ" इति दत्रादेशः । मदाज्ञाकृतः ममाज्ञां करोतीति मदाज्ञाकृत् तस्य सन्देशहरस्येत्यर्थः । ते तव । भूयः पुनः । प्रीत्यै सन्तोषाय । भवतु अस्तु इत्याशीः ॥ ५६ ॥

मत्प्रामाण्यादसुभिरसने निश्चितात्मा त्वमेनां
भोक्तुं याया धनदनगरीं तत्प्रमाणाय सज्जे ।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्या
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥५७॥३५॥३२ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचिते
मेघदूतवेष्टितवेष्टिते श्रीपार्श्वाऽभ्युदये
भगवत्कैवल्यवर्णनं नाम
तृतीयः सर्गः ॥ ३ ॥

मत्प्रमाण्यादिति ॥ मत्प्रमाण्यात् अहमेव प्रामाण्यं तस्मात् मद्वचनप्राधान्यादित्यर्थः । असुनिरसने प्राणनिराकृतौ । "पुंसि भूम्न्यसवः प्राणाः" । 'प्रत्याख्यानं निरसनम्" इत्युभयत्राप्यमरः । निश्चितात्मा निर्णीतस्वरूपः । त्वं भवान् । एनां प्रियाम् । भोक्तुम् अनुभवनाय । धनदनगरीं अलकापुरीम् । यायाः गच्छेः । त्वयि भवति । तत्प्रमाणा तस्य वचनस्य निश्चयनिमित्तम् । सज्जे सन्नद्धे । "सन्नद्धो

वर्मितः सज्जः " इत्यमरः । आसन्ने समीपगते सति । स्वकुशलवार्ताशंसिनि सतीति शेषः । उपरिस्पन्दि उपरि ऊर्ध्वभागे स्पन्दन्ते स्फुरतीत्युपरिस्पन्दि । तथा च निमित्तनिधाने । " स्पन्दान्मूर्ध्नि च्छत्रलाभः " सातिपट्टशुभं भूयिष्टप्राप्तिः। दृशोरूर्ध्वमपाङ्गे हानिमादिशेत् " इति । मृगाक्ष्याः एणलोचनायाः । नयनं लोचनम् । वाममिति शेषः । "वामभागश्च नारीणां श्रेष्ठः पुंसश्च दक्षिणः । दाने देवादिपूजायां स्पन्देऽलङ्करणेऽपि च " इति वामभागप्रशंसनात् । मीनक्षोभात् शफरावट्टनात् । चलकुवलयश्रीतुलां चलस्य कुवलयस्य श्रिया शोभया तुलां सादृश्यम् । एष्यति गमिष्यत्येव शङ्के शङ्कयामि । तुलार्थैर् हि तुलोपमानाभ्यामित्यत्र सदृशपर्य्यायस्यैव तुलाशब्दस्य प्रतिषेधात् । असादृश्यवाचित्वात्तद्योगेऽपि तृतीयासमासः ॥ ५७ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचिते मेघदूतवेष्टितवेष्टिते पार्श्वाभ्युदये तद्व्याख्यायां च सुबोधिकाख्यायां भगवत्कैवल्यवर्णनं नाम तृतीयः सर्गः ॥ ३ ॥

---

# अथ चतुर्थः सर्गः ४.

इतः पादवेष्टितानि—

संदिष्टं च प्रणयमधुरं कान्तया मे द्वितीयैः
प्राणैः प्राणा नवनववरः सन्निति त्वां प्रतीदम् ।
तत्कर्त्तुं स्वं त्वरय लघुनः किंकिमेवं न कुर्या
वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयैः ॥ १ ॥

संदिष्टमिति ॥ मे मम । द्वितीयैः द्वयोः पूरणैः । प्राणैः असुभिः नियतलिङ्गत्वात्प्राणभूतयेत्यर्थः । कान्तया च प्रिययापि । प्राणाः असवः । प्राणा इति सर्वत्र पुंस्त्वं बहुत्वं प्राणभूत इत्यर्थः । नवनववरः अभिनवप्रियः । वीप्सायां द्विः । सन्निति तत्पुरुष इति । त्वां

प्रति। इदम् एतत्। प्रणयमधुरं प्रीतिसुभगं यथा तथा। संदिष्टं संदिश्यते स्म संदिष्टं भाषितम्। न केवलमहमेव ब्रवीमि कान्तयापि इदं संदिष्टमिति भावः। तत् कार्यम्। कर्तुं विधातुम्। त्वम् आत्मानम्। लघुनः शीघ्रात्। "लघुक्षिप्रमरं द्रुतम्" इत्यमरः। इति नपुंसकत्वात् पञ्चम्येकवचनरूपमिदम्। त्वरय सम्भ्रमय। मदीयैः मत्सम्बद्धैः। कररुहपदैः नखपदैः। "पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम्" "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्युभयत्राप्यमरः। मुच्यमानः परिहीयमाणः युद्धे अन्यापन्न इत्यर्थः। अस्याः प्रियायाः। वामश्च मनोहरोपि सन्। "वामो वक्रं मनोहरे" इति धनञ्जयः। तामपि प्राप्येत्यर्थः। एवम् उक्तरीत्या। किं किं न कुर्याः किंकिं कार्यं न कुर्वीथाः। सर्वं कुर्या एवेति यावत्॥ १॥

एतावज्जल्पमानेपि ध्यानैकतानं योगिनं प्रति पुना रटति—

भोभो भिक्षो मयि सहरुपि क्व प्रयास्यस्यवश्यं
त्वामुद्धेति प्रणिपतनकैः सारयिष्ये तदग्रम्।
न प्राणान्स्वान्घटयितुमलं तावको निर्भयो वा
मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या॥ २॥

भोभो इति॥ भोभोः भिक्षो हे यते। "भृशाभीक्ष्ण्ये" इति द्विः। मयि यक्षे। सहरुपि रोषसहिते सति। "वान्यार्थे" इति विकल्पेन सहस्य सभावः। क्व कुत्र। प्रयास्यसि एष्यसि। त्वां भवन्तम्। उद्धेतिप्रणिपतनकैः उद्धृतखड्गपातनैः। तदग्रं खड्गाग्रम्। अवश्यं निश्चयेन। सारयिष्ये यापयिष्यामि। चिरपरिचितं चिराभ्यस्तम्। मुक्ताजालं मौक्तिकभूषणम्। दैवगत्या दैववशेन। त्याजितः। त्यजधातोर्ण्यन्तात्कर्मणि क्तः। परिहारितः। तावकः तव सम्बन्धी। युष्मदस्मदे यत् तवकादेशश्च। निर्णयो वा निश्चयो वा।

अहं मुक्ताजालादिविभूषणरहित इत्यभिप्राय इत्यर्थः। स्वान् निजान्। प्राणान् असून्। घटयितुं सम्बन्धयितुम्। नालं न शक्तः॥ २॥

किं ते वैरिद्विरदनघटाकुम्भसम्भेदनेषु
प्राप्तस्थेमा समरविजयी वीरलक्ष्म्याः करोऽयम्।
नास्मत्खड्गः श्रुतिपथमगाद्रक्तपानोत्सवानां
सम्भोगान्ते मम समुचितो हस्तसंवाहनानाम्॥ ३॥

किमिति॥ वैरिद्विरदनघटाकुम्भसम्भेदनेषु वैरिगजानां समूहस्य कुम्भस्थलविदारणेषु। प्राप्तस्थेमा लब्धस्थिरभावः। "वर्णदृढादिभ्यः ष्यञ् चाण् च" इति भावे इमन्। "प्रियस्थिर—" इत्यादिना स्थादेशः। समरविजयी सङ्ग्रामविजयशीलः। "अस्त्रियां समरानीकरणाः" इत्यमरः। सम्भोगान्ते अनुभवनावसाने। मम यक्षस्य। हस्तसंवाहनानां करमर्दनानाम्। "संवाहनं मर्दनं स्यात्" इत्यमरः। समुचितः सुयोग्यः। वीरलक्ष्म्याः करः जयलक्ष्मीहस्तभूतः। अयमस्मत्खड्गः एषोऽस्मत्करवालः। ते तव। श्रुतिपथोत्र रन्ध्रम्। नागात्किम् नायासीत्किम्। तन्महिमानं नाऽश्रृणोः किमिति प्रश्नः॥ ३॥

अस्युद्गीर्णे मयि सुरभटास्तेऽपि बिभ्यत्यसभ्यः
कस्त्वं स्थातुं भण मम पुरः किं न जिह्रेषि भिक्षो।
भावत्कोऽयं मदसिविततताखण्डनात्तत्पुरस्ता-
द्यास्यन्यूरुः सरसकदलीस्तंभगौरश्चलत्वम्॥ ४॥३६॥३२॥

अस्युद्गीर्ण इति॥ मयि यक्षे। अस्युद्गीर्णे उद्गीर्णः निष्कोशीकृतः उद्गीर्णोऽसिर्यस्य येन सोऽस्युद्गीर्णस्तस्मिन्। "प्रहरणात्सप्तमी" इति विकल्पितपूर्वनिपातः। अस्युद्गीर्णः उद्गीर्णासिरित्यपि भवतीत्यर्थः। खड्गमयि नीते सति। ते सुरभटा अपि प्रसिद्धाः देवयोधाश्च।

विभ्यति भयस्था भवन्ति। असभ्यः सभायामसाधुः सभाभीरुरित्यर्थः। मम पुरः ममाग्रे। स्थातुं स्थानाय। कः कियानित्यर्थः। त्वं भवान्। भण ब्रूहि। भिक्षो भो मुमुक्षो। "भिक्षुः परिव्राट्" इत्यमरः। किं न जिह्रेषि लज्जां किं न चेयेसि। "ह्री लज्जायां" सन्नन्ताह्रद्। मद्‌सिवितताखण्डनात् मम खड्ग विस्तृताविधारणात्। सरसकदलीस्तंभगौरः परिपक्वो न शुष्कश्च स विवक्षितः तत्रैव पाण्डिमसद्भावात् स चासौ कदलीस्तम्भश्च स इव गौरः। "गौरः शरीरे सिद्धार्थे शुक्लपीते सितेरुणे" इति मालायाम्। भावत्कः भवदीयः। "भवतष्ठण्छसि" इति ठण्। "दोसिसुस्" इत्यादिना कादेशः। ऊरुः। "सक्थि क्लीवे पुमानूरुः" इत्यमरः। तत्पुरस्तात् तस्य खड्गस्य पुरस्तात् अग्रतः। चलत्वं कम्पनम्। यास्यति एष्यति ॥ ४ ॥

यस्मिन्पुंसां परिभवकलङ्काङ्कनं स्याद्विपक्षा-
द्वीरालापे सति मदवतो वीरगोष्टीषु वक्त्रम्।
विद्वन्मन्यो भणतु स भवानेव मानोन्नतानां
तस्मिन्काले जलद यदि सा लब्धनिद्रासुखा स्यात् ॥ ५ ॥

यस्मिन्निति ॥ जलद भो मेघ। यस्मिन् यस्मिन्काले। वीरगोष्टीषु शूरगोष्टीषु। वीरालापे सति वीरकथाभाषणे सति। "स्यादाभाषणमालापः" इत्यमरः। मदवतः गर्वयुतात्। विपक्षात् प्रतिपक्षजनात्। पुंसां पुरुषाणाम्। वक्त्रं मुखम्। परिभवकलङ्काङ्कनं तिरस्कारकलङ्कचिह्नम्। स्याद्भवेत्। तस्मिन्काले तदवसरे। सा लब्धनिद्रा लब्धा चासौ निद्रा चेति कर्मधारयः। प्राप्तस्वापा। असुखा अहिता। यदि स्यात् भवेच्चेत्तर्हि। मानोन्नतानां मानेन अभिमानेन उन्नतानाम् उत्कृष्टानाम्। "मानश्चित्तसमुन्नतिः" इत्यमरः। मध्ये इति शेषः। विद्वन्मन्यः विद्वांसमात्मानंमन्यते इति तथोक्तः। स भवानेव त्वमेव। भणतु ब्रूहीत्यर्थः। भवच्छब्दप्रयोगे प्रथमपुरुषः५

या ते बुद्धिर्मदुपचरिताद्बिभ्यती लुप्तसञ्ज्ञा
मूकावस्थां त्वयि विदधती रुन्धती सत्त्ववृत्तिम् ।
सावष्टम्भं भव भटतरो वार्धयुद्धे स्थिरः स-
न्नन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व ॥ ६ ॥

येति ॥ ते तव । या बुद्धिः यज्ज्ञानम् । मदुपचरितात् ममैव चरणात् । कर्तरि क्तः । बिभ्यती भयमाप्नुवन्ती । लुप्तसञ्ज्ञा नष्टचैतन्या । "सञ्ज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचने" त्यमरः । त्वयि भवति । मूकावस्थाम् अवाग्दशाम् । "अवाचि मूकः" इत्यमरः । विदधती विदधातीति तथोक्ता । शतृप्रत्ययः । "नृदुक्" इति ङी । सत्त्ववृत्तिं बलवद्वर्त्तनम् । रुन्धती आवारयन्ती । स्यादिति शेषः । एनां बुद्धिम् । स्तनितविमुखः गर्जितपराङ्मुखः सन् भयादकूजन्निति ध्वन्यते । याममात्रं प्रहरमात्रम् । "द्वौ यामप्रहरौ समौ" इत्यमरः । सहस्व क्षमस्व । प्रार्थनायां लोट् । याममात्रादेव युद्धपूर्त्तिर्भविष्यतीति भावः । अर्द्धयुद्धे वा अर्द्धसङ्ग्रामे वा । स्थिरः सन् दृढो भवन् । सावष्टम्भम् अवष्टम्भेन सहवर्तनं यस्मिन्कर्मणि तत् । अन्वास्य स्थित्वा । भटतरः प्रकृष्टभटः । भव रणभीरुर्माभूरित्यर्थः ॥ ६ ॥

मा भूद्भीतिस्तव सुरभटत्रासिगर्ज्जोर्ज्जितेऽसि-
प्राप्ते योद्धुं मयि किमभियाने मृतिर्वीरलक्ष्म्याः ।
वीरंमन्ये त्वयि मयि तथाऽन्यत्र वा प्रेमभङ्गो
मा भूदस्याः प्रणयिनि जने स्वप्नलब्धे कथञ्चित् ॥ ७ ॥

मा भूदिति ॥ सुरभटत्रासिगर्ज्जोर्ज्जिते देवभटानां भीतिकरगर्जनेन ऊर्ज्जिते बलिष्ठे मयि । योद्धुं योधनाय । असिप्राप्ते प्राप्तोऽसिः येन सोऽसिप्राप्तस्तस्मिन् । अत्रापि वा पूर्वनिपातः । खड्गं बिभ्रति सति । तव ते भीतिः भयम् । मा भूत् मा स्म जनि । वीरल-

क्ष्म्याः जयश्रियः । अभियाने अभिगमने सति । मृतिः मरणम् किम् । मरणं सम्भवतीत्यर्थः । वीरंमन्ये वीरमात्मानं मन्यते तस्मिन् त्वयि मेघे । मयि यक्षे तथा । अन्यत्र वा पुरुषान्तरे वा । कथञ्चित् कृच्छ्रेण । स्वप्नलब्धे स्वप्नप्राप्ते । प्रणयिनि प्रेमवति । जने लोके । अस्याः वीरलक्ष्म्याः । प्रेमभङ्गः प्रीतिभञ्जनम् । मा भूत् । " माङि लुङ् " इति माङ्योगे लुङ् ॥ ७ ॥

निस्सङ्गस्त्वं नहि भुवि भयस्याङ्गमङ्गाङ्गसङ्गात्
किं वा जीवन्मतक भवतोऽप्यस्ति भीरङ्गनानाम् ।
कृत्वा युद्धे विदधति मतिं नन्विमे योधमुख्याः
सद्यः कण्ठच्युतभुजलताग्रन्थिगाढोपगूढम् ॥ ८ ॥२७॥२४॥

निस्सङ्ग इति ॥ जीवन्मन्यत इति जीवन्मतः अज्ञातो जीवन्मतो जीवन्मतकः तत्सम्बोधनं हे अस्पष्टचैतन्य । " कुत्सिताल्पाज्ञाते " इति कप्प्रत्ययः। त्वं भवान्। निस्सङ्गः संसर्गरहितः । भुवि भूमौ । भयस्य भीतेः । अङ्गम् अवयवः । नहि न भवसि । अङ्गाङ्गसङ्गात् परस्पराङ्गसंसर्गात् । भीः भीतिः । अङ्गनानां स्त्रीणाम् । अस्ति विद्यते । भवतोऽपि तवाऽपि । अस्ति किंवा विद्यते किमु । यद्वत्स्त्रीणां सङ्गभीतिर्भवति तद्वत् । इमे प्रत्यक्षभूताः । योधमुख्याः भटाग्रण्यः । " भटा योधाश्च योद्धारः " इत्यमरः । युद्धे आयोधने । मतिं बुद्धिम् । कृत्वा विधाय । सद्यः तदैव । कण्ठच्युतभुजलताग्रन्थि कण्ठाच्च्युतः स्रस्तो भुजलतयोर्ग्रन्थिर्बन्धो यस्य तथोक्तम् । गाढोपगूढं गाढालिङ्गनम् । " नपुंसके भावे क्तः । " ननु निश्चयेन विदधति कुर्वन्ति ॥ ८ ॥

लक्ष्मीं क्षीणां स्ववपुषि सतीमुद्यमाख्येन दोषा
प्रोत्थाप्यालं भव युधि सतामाश्रितानुग्रहोर्थः ।

शंसन्तीदं ननु नवघनाघर्मतप्तक्षतां क्ष्मां
प्रोत्थाप्यैनां स्वजलकणिकाशीतलेनानिलेन ॥ ९ ॥

लक्ष्मीमिति ॥ स्ववपुषि स्वशरीरे । सतीं विद्यमानां साध्वीं वा । क्षीणां कृशाम् । तां लक्ष्मीं श्रियम् । उद्यमाख्येन उद्यम एव आख्या यस्य । तेन प्रयत्नाख्येन । दोषा भुजेन । " भुजबाहू प्रवेष्टो दोः " इत्यमरः । प्रबोध्य । युधि युद्धे । " समित्याजिसमिद्युधः" इत्यमरः । अलं समर्थः । भव तथाहि । सतां सत्पुरुषाणाम् । आश्रितानुग्रहः आश्रितजनरक्षणम् । अर्थः प्रयोजनम् । स्यादिति शेषः । " अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु " इत्यमरः । नवघनाः नवीनमेघाः । घर्मतप्तक्षतां घर्मेण तप्ता सा चासौ क्षता च ताम् । एनां क्ष्मां तां भूमिम् । " क्ष्मावनिर्मेदिनी मही " इत्यमरः । स्वजलकणिकाशीतलेन स्वजलबिन्दुशीतलेन । अनिलेन वायुना । प्रोत्थाप्य आह्लाद्य । इदं मदुक्तं कार्यम् । ननु स्फुटम् । शंसन्ति सूचयन्ति ॥

कीर्तिं च स्वां कुरु कुसुमितां स्वोद्यमाम्बुप्रसेकैः
सद्वल्लीं वा प्रधनविषयैरुन्नतानां क्रमोऽयम् ।
कुर्यात्किन्नो नवजलमुचां कुं क्षतान्तामनेहा
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ॥ १० ॥

कीर्तिमिति ॥ प्रधनविषयैः सङ्ग्रामविषयैः । " युद्धमायोधनं जन्यं प्रधनं प्रविदारणम् " इत्यमरः । स्वोद्यमाम्बुप्रसेकैः स्वप्रयत्नजलसेचनैः । स्वां निजाम् । कीर्तिं यशः । सद्वल्लीं वा सल्लतामिव । कुसुमितां कुसुमानि सञ्जातानि अस्यामिति कुसुमिता ताम् । "सञ्जातं तारकादिभ्यः" इतीतचः । कुरु विधेहि । अयम् एषः । उन्नतानां महताम् । क्रमः परिपाटी । स्यादिति शेषः । नवजलमुचां नूतननीरदानाम् । अनेहा कालः । "कालो दिष्टोप्यने-

ह्यऽपि " इत्यमरः । क्षतान्तां शान्तस्वभावाम् । " अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेन्तरेऽन्तिके " इति वैजयन्ती । कुं भुवम् । "क्ष्मा धरित्री क्षितिश्च कुः" इति धनञ्जयः । मालतीनां जातीनाम् । " सुमना मालती जातिः " इत्यमरः । अभिनवैः प्रत्यग्रैः । प्रत्यग्रोऽभिनवो नव्यः " इत्यमरः । जालकैः मुकुलैः । " क्षारको जालकं क्लीबे कलिका कोरकः पुमान् " इत्यमरः । समं साकम् । प्रत्याश्वस्तां स्वशिशिरानिलसम्पत्पुनरुज्जीविताम् । श्वसेः कर्तरि क्तः । ननु निश्चयेन । आधत्ते धरति । कुर्यात्किं नो इति वा पाठः। किं न करोति ॥

मत्प्रातीप्यं समरशिरसि प्राप्य दृष्टावधानः
क्षीणायुस्त्वं कुरु सुरवधूं काञ्चिदापूर्णकामाम् ।
द्यामारोहन्सहजमणिभाभूषितोम्भोदयाने
विद्युद्गर्भे स्तिमितनयनां त्वत्सनाथे गवाक्षे ॥ ११ ॥

मत्प्रातीप्यमिति ॥ समरशिरसि सङ्ग्रामाग्रे । मत्प्रातीप्यं मम प्रातिकूल्यम् । प्राप्य लब्ध्वा । दृष्टावधानः आलोकितसाहसः । " अवधानं तु साहसम् " इति धनञ्जयः। त्वं क्षीणायुः क्षीणमायुर्यस्य स मृतः सन्नित्यर्थः। विद्युदेव गर्भोन्तःस्थो यस्य तस्मिन्नन्तर्लीनविद्युतीत्यर्थः । " गर्भोपवरकेऽन्तःस्थे नौकुक्षिस्थार्भकोत्तमे " इति शब्दार्णवे । अम्भोदयाने जलवाहने । द्यां दिवम् " द्योदिवौ द्वे स्त्रियामभ्रम् " इत्यमरः । आरोहन् उद्गच्छन् । सहजमणिभाभूषितः सहजमणीनां भाभिः कान्तिभिः भूषितो मण्डितः सन् । त्वत्सनाथे त्वया सहिते " सानाढप्रभमित्याहुः सहिते चित्ततापिनि " इति शब्दार्णवे । गवाक्षे वातायने । स्तिमितनयनां कोसाविति विस्मितनेत्राम् । काञ्चित् सुरवधूम् । काञ्चन देवस्त्रियम् । आपूर्णकामां सम्पूर्णाभिलाषाम् । कुरु विधेहि । वृणीष्वेत्यर्थः ॥ ११ ॥

यद्येतत्तेऽध्यवसितमतिप्रौढमानोद्धुरस्य
ध्यानाभ्यासं शिथिलय ततो योद्धुकामो निकामम् ।

अस्युत्खातः पटुतरगिरं प्रोज्झ्य वाचंयमित्वं
वक्तुं धीरस्तनितवचनो मानिनीं प्रक्रमेथाः ॥१२॥३८॥३५॥

यदीति ॥ अतिप्रौढमानोद्धुरस्य अतिचतुरेण मानेन प्रवृद्धस्य । ते भवतः । एतत् इदं वचः । यदि चेत् । अध्यवसितं निश्चितं स्यात् ततः तस्मात् । निकामं यथेष्टम् । योद्धुकामः योधनाय योद्धुं कामयत इति तथोक्तः । ध्यानाभ्यासं ध्यानपरिचयम् । शिथिलय शमनं कुरु । वाचंयमित्वं मौनित्वम् । "वाचंयमो व्रती" इति खजन्तो निपातः । प्रोज्झ्य व्युत्सृज्य । अस्युत्खातः उत्खन्यते स्म उत्खातः उद्गीर्णः उत्खातोऽसिर्यस्यासावस्युत्खातः । विकल्पितः पूर्वनिपातः । धीरस्तनितवचनः धीरं स्तनितमेव वचनं यस्य स तथोक्तः सन् । मानिनीं मानोऽस्यास्तीति मानिनी तां गर्वशालिनीम् । पटुतरगिरम् अतिपटुवाचम् । वक्तुं भाषितुम् । प्रक्रमेथाः उपक्रमस्व । "प्रोपाभ्यां समर्थाभ्याम्" इति तङ् ॥ १२ ॥

भीते शस्त्रं यदि भटमते वावहीम्यस्त्रशून्ये
स्त्रींमन्ये वा चरणपतिते क्षीणके वा स कश्चित् ।
पादस्पृष्ट्या शपथयति वा जातु हिंसां भुजिष्यं
भर्तुर्मित्रं प्रियमभिदधे विद्धि मामम्बुवाहम् ॥ १३ ॥

भीत इति ॥ भटमते भटश्रेष्ठे । भीते बिभेति स्म भीतः तस्मिन् भयंमाप्ते । अस्त्रशून्ये शस्त्रहीने । "आयुधं तु प्रहरणं शस्त्रमस्त्रम्" इत्यमरः । स्त्रींमन्ये स्त्रियमात्मानं मन्यते तथोक्तस्तस्मिन् । वा अथवा । चरणपतिते पादयोः पतिते । क्षीणके क्षीणकान्तौ । वा अथवा । पादस्पृष्ट्या पादस्पर्शेन । शपथयति प्रतिज्ञां कुर्वति । स कश्चित् कश्चिदहम् । जातु कदाचित् । दैन्यं करोतीत्यर्थः । वा अथवा । "कदाचिज्जातु" इत्यमरः । यदि चेत् शस्त्रम् अस्त्रं वावहीमि भृशं वहामीति तथोक्तः श्लुगन्तः । तर्हि । हिंसां प्राणिहिंसादोषम् । अभिद-

धे ब्रवीसि । केवलं जीवहिंसैव न शूरत्वमिति भावः । मां यक्षम् । भर्तुः राजराजस्य । अम्बुवाहम् अम्बु वहतीत्यंबुवाहस्तम् अम्बुवाहनामानम् ।भुजिष्यं भृत्यम्।“नियोज्यकिङ्करप्रेष्यभुजिष्यपरिचारकाः” इत्यमरः । प्रियं हितम् । मित्रं सखायम् । विद्धि जानीहि । अम्बुवाहाह्वयो धनदानुचरोऽहम् । तवापि प्रियमित्रमिति निश्चिन्विति भावः ॥ १३ ॥

तन्मा भैषीर्विहतगरिमा हस्तमुत्क्षिप्य पादा-
वाश्लिष्य त्वं मम यदि च ते जीवनेस्त्युत्सुकत्वम् ।
किञ्चित्प्रीत्यै प्रिययुवतितो मान्यथा त्वं गृहीर्मां
तत्सन्देशैर्मनसि निहितैरागतं त्वत्समीपम् ॥ १४ ॥

तदिति ॥ तत् तस्माद्धेतोः । मा भैषीः मा बिभीहि । ते तव । जीवने जीविते । उत्सुकत्वं तत्परत्वम् । यदि चास्ति विद्यते चेत्तर्हि । त्वं भवान् । विहतगरिमा रहितगुरुस्वभावः सन् । “वर्णदृढादिभ्यः” इत्यादिना इमन्त्यः । “प्रियस्थिर–” इत्यादिना गुरोर्गरादेशः । हस्तं पाणिम् । उत्क्षिप्य उद्धृत्य । मम मे चरणौ । आश्लिष्य आलिङ्ग्य । प्रिययुवतितः प्राणकान्तायाः सकाशात् । किञ्चित् ईषत् । प्रीत्यै प्रेम्णे । मनसि चित्ते । निहितैः स्थापितैः । तत्सन्देशैः युवतिवाचिकैः । त्वत्समीपं भवन्निकटं प्रति । आगतम् आगच्छति स्म आगतस्तम् । मां यक्षम् । त्वं भवान् । अन्यथा अपरप्रकारेण । मा गृहीः मा गृहाण । तस्याः सन्देशहरत्वात् न विरोधीति विभावयेत्यर्थः ॥ १४ ॥

सद्यः क्लृप्तो जलदसमयो यो मया कालमेघै-
रारुद्धद्यु व्यवधि सहसा सोप्यनेनात्मशक्त्या ।
ध्वान्तस्यैव प्रतिनिधिरहो योषितां जीवनार्थं
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानाम् ॥ १५ ॥

सद्य इति ॥ मया यक्षेण। कालमेघैः कृष्णजलदैः। आरुद्धद्यु आरुद्धा द्यौर्नभो यस्मिन्कर्मणि तत्। यः जलदसमयः। पथि मार्गे। श्राम्यतां खिद्यमानानाम्। प्रोषितानां प्रवासिनाम्। वृन्दानि निकुरम्बानि। "स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्" इत्यमरः। जीवनार्थं प्राणधारणार्थम्। त्वरयति सम्भ्रमयति। ध्वान्तस्यैव अन्धकारस्यैव। प्रतिनिधिः प्रतिकृतिः। "प्रतिकृतिरर्चा पुंसि प्रतिनिधिरुपमोपमानं स्यात्" इत्यमरः। सोऽपि तादृशोऽपि। जलदसमयः। अनेन मुनिना। आत्मशक्त्या निजसामर्थ्येन। सहसा शीघ्रेण। "अतर्किते तु सहसा" इत्यमरः। अहो आश्चर्यम्। व्यवधि अच्छेदि। "विपूर्वस्य वध् हिंसायां" धातोर्लिङ् ॥ १५ ॥

सोऽयं योगी प्रकटमहिमा लक्ष्यते दुर्विभेदो
विद्यासिद्धो ध्रुवमभिमना यन्ममाप्यात्तनाशा।
कर्तुं शक्ता नवघनघटा या मनांस्यध्वगानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ १६ ॥ २९ ॥ २६ ॥

स इति ॥ या अध्वगानां पथिकानाम्। मनांसि चित्तानि। मन्द्रस्निग्धैः मन्द्राश्च ते स्निग्धाश्च तैः। खञ्जकुब्जादिवत् अन्यतर-प्राधान्येन विशेषणमित्यादिना कर्मधारयः। ध्वनिभिः शब्दैः। अबलावेणिमोक्षोत्सुकानि अबलानां स्त्रीणां वेणयः तासां मोक्षे मोक्षणे मोचन इत्यर्थः। उत्सुकानि कर्तुं विधातुम्। शक्ता समर्था। मम मत्सम्बन्धिनी। नवघनघटा प्रत्यग्रमेघमाला। यत् यस्मात्कारणात्। आत्तनाशा प्राप्तविलयाभूत्। तस्मात्। सोऽयं योगी स एष मुनिः। प्रकटमहिमा प्रथितप्रभावः। दुर्विभेदः अभेद्यः। विद्यासिद्धः विद्यया सिध्यति स्म तथोक्तः। अभिमानाः क्वचिदप्यासक्तचेताः। ध्रुवं निश्चलम्। लक्ष्यते दृश्यते ॥ १६ ॥

इत्याध्यायन्पुनरपि मुनिं सोभणीद्युद्धशौण्डो
वीरश्रीस्त्वामिह वनतरौ मन्मथाक्लेशमुक्ता।

पश्यन्त्यास्ते दशमुखपुरोद्यानवृक्षे सति स्या-
दित्याख्याते पवनतनयं मैथिलीवोन्मुखी सा ॥ १७ ॥

इतीति ॥ स दैत्यः । युद्धशौण्डः युद्धे मत्तः । " मत्ते शौण्डोत्कटक्षीवा " इत्यमरः । इति एवंप्रकारेण । आध्यायन् चिन्तयन् । पुनरपि । मुनिं योगिनम् । अभणीत् अब्रवीत् । इति कथितरीत्या । आख्याते आभाषिते सति । स्यादिति यथोक्तं तथैव भवेदिति । दशमुखपुरोद्यानवृक्षे दशमुखस्य रावणस्य पुरोद्यानस्य लङ्कोपवनस्य वृक्षे पादपे । विषयसप्तमी " वटे गावः सुशेरते " इतिवत्। मैथिली सीता । पवनतनयमिव हनूमन्तमिव । इह वनतरौ वनवृक्षे । मन्मथाक्लेशमुक्ता मदनस्याक्लेशेन रहिता। सा वीरश्री जयलक्ष्मीः । उन्मुखी उद्गतमुखी सती । त्वां भवन्तम् । पश्यन्ती प्रेक्षमाणा आस्ते वर्तते । वीरश्रीः प्रेक्षाभिधानात् युद्धसन्नद्धो भवेति ध्वन्यते ॥ १७ ॥

सङ्ख्ये सङ्ख्यां सुभटविषयां पूरयन्नस्मदीये
हित्वा भीतिं त्वमधिशयितो वीरशय्यां यदास्याः ।
प्रत्यासीदत्यपहितरसा वीरलक्ष्मीस्तदेषा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य संभाव्य चैव ॥ १८ ॥

सङ्ख्य इति ॥ अस्मदीये अस्माकमिदमस्मदीयं तस्मिन् । सङ्ख्ये युद्धे । " मृधमास्कन्दनं संख्यम् " इत्यमरः । सुभटविषयां सुयोधृगोचराम् । सङ्ख्यां गणनाम् । पूरयन् सम्पूर्णं वितन्वन् । त्वं भवान् । भीतिं भयम् । "भीतिर्भीः साध्वसं भयम्" हित्वा मुक्त्वा । यदा यदवसरे । वीरशय्यां वीरशयनम् । अधिशयितः सुप्तः । स्याः भवेः । तदा तत्समये । एषा वीरलक्ष्मीः असौ वीरश्रीः । अपहितरसा प्रकटितशृङ्गाररसा। उत्कण्ठोच्छ्वसितहृदया उत्कण्ठया औत्सु-

क्येन । उच्छ्वसितं विकसितं हृदयं यस्याः सा तथोक्ता । "उत्कण्ठोत्कलिके समे" इत्यमरः । त्वां भवन्तम् । वीक्ष्य दृष्ट्वा । सम्भाव्य चैव सत्कृत्यापि । प्रत्यासीदति आसन्नमागच्छति ॥ १८ ॥

अथ मायामयीं स्त्रीसंहतिं कल्पयन् गानमाविर्भावयति—

मन्ये श्रोत्रं परुषपवनैर्दूषितं ते मदुक्तां
व्यक्ताकूतां समरविषयां संकथां नो शृणोति ।
तत्पारुष्यप्रहरणमिदं भेषजं विद्धि गेयं
श्रोष्यत्यस्मात्परमवहितं सौम्यसीमन्तिनीनाम् ॥ १९ ॥

मन्य इति ॥ ते तव श्रोत्रं श्रवणम् । परुषपवनैः निष्ठुरानिलैः । "निष्ठुरं परुषम्" इत्यमरः । दूषितं निन्दितं सत् । "ऋदुपो णौ" इत्यृत् । व्यक्ताकूतां प्रकटिताभिप्रायाम् । समरविषयां सङ्ग्रामगोचराम् । "अस्त्रियां समरानीकरणाः" इत्यमरः । मदुक्तां मयोक्ताम् संकथां वार्ताम् । नो शृणोति नाकर्णयति । इति मन्ये जाने । सौम्य भो साधो । अथवा । सौम्यसीमन्तिनीनां सौम्याश्च ताः सीमन्तिन्यश्च तासां सुन्दरस्त्रीणाम् । "सौम्यं तु सुन्दरे सोमदेवते" "नारी सीमन्तिनी वधूः" इत्यमरः । इदं श्रूयमाणमेतत् । गेयं गानम् । तत्पारुष्यप्रहरणं पवनपरुषत्वदोषनिवारणम् । भेषजम् औषधम् । "भेषजौषधभैषज्यानि" इत्यमरः । विद्धि जानीहि । अस्मादेतद्गानात् । अवहितम् अप्रशस्तं सत् । परं स्फुटम् । श्रोष्यति आकर्णयिष्यति ॥ १९ ॥

श्रव्यं गेयं नयनसुभगं रूपमालोकनीयं
पेयस्तासां वदनसुरभिः स्पृश्यमाघ्रायमङ्गम् ।

---

१ आकूतं तदत्र भावस्सोप्यभीष्टो विभाव्यते ।

२ आवेध्यारोप्य विक्षेप्य बंधनीयैरभूषितं । यद् भूषितमिवाभाति तद्रूपमिति कथ्यते ।

कामाङ्गं ते समुचितपदं सङ्गमं सानुवन्धं
 कान्तोपान्तात्सुहृदुपगमः सङ्गमात्किञ्चिदूनः॥२०॥४०॥३७॥

श्रव्यमिति ॥ तासां सीमन्तिनीनाम् । गेयं गीतम् । ते तव । श्रव्यं श्रवणीयम् । सानुवन्धं सम्वन्धसहितम् । नयनसुभगं नेत्ररमणीयम् । रूपं देहसौरूप्यम् । आलोकनीयं दर्शनीयम् । वदनसुरभिः मुखसुगन्धः । पेयः पातुं योग्यः । अङ्गम् अवयवः । स्पृश्यं स्प्रष्टुं योग्यम् । आघ्रायम् आघ्रातुं योग्यम् । कामाङ्गं कामावयवभूतम् । सानुवन्धं सम्वन्धसहितम् । अनुकूलमित्यर्थः । इदमेतत् । "सङ्गमं शतमानार्मे शंवलाव्ययताण्डवम्" इत्यमरः पुन्नपुंसकशेषः । ते तव । समुचितं सुयोग्यम् । भवतीति शेषः । तथाहि । कान्तोपान्तात् । कान्ताया उपान्तस्तस्मात् । सुहृदुपगमः मित्रागमनम् । "कान्तोदन्तः सुहृदुपनतः" इति वा पाठः । सुहृदुपनतः सुहृन्मुखेन उपनतः प्राप्तः । कान्तोदन्तः कान्ताया उदन्तो वृत्तान्तस्तथोक्तः । "वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्" इत्यमरः । सङ्गमात् कान्तासम्पर्कात् । किञ्चिदूनः कियन्न्यूनः । तद्वदेवानन्दकर इति भावः ॥ २० ॥

तस्माद्वासः किसलयमृदु त्वन्मुखस्थायि दिव्यं
 ताम्बूलं च प्रणयमचिराद्योषितां मानयोच्चैः ।
व्यर्थक्लेशां विसृज विरसामार्यवृत्तिं मुनीनां
 तामायुष्मन्मम च वचनादात्मनश्चोपकर्त्तुम् ॥ २१ ॥

तस्मादिति ॥ तस्मात् कारणात् । आर्य भो पूज्य । आयुष्मन् । प्रशंसायां मतुः । हे परोपकारश्लाघ्यजीवन इत्यर्थः । मम वचनाच्च मे प्रार्थनायाश्च । आत्मनः स्वस्य । उपकर्तुं च परोपकारेणात्मानं कृतार्थयितुमपीत्यर्थः । उपकारक्रियायां प्रतिकर्मत्वेऽपि । तस्यानुक-

रोत्यादिवत् । सम्बन्धमात्रविवक्षायामात्मेति षष्ठीवचनं न विरुध्यते । व्यर्थक्लेशां निष्फलायासाम् । विरसां रसरहिताम् । तां मुनीनां वृत्तिं तद्यतिवर्तनम् । विसृज त्यज । किसलयमृदु पल्लवकोमलम् । वासः वस्त्रम् । "वस्त्रमाच्छादनं वासः" इत्यमरः । मुखस्थायि वदनस्थायि । मुखे स्थाप्यते इत्येवंशीलम् । दिव्यम् अनर्घम् । ताम्बूलं वीटिकाम् । योषितां स्त्रीणाम् । प्रणयं च प्रीतिमपि । अचिरात् शीघ्रेण । त्वं भवान् । उच्चैरधिकम् । मानय सम्भावय ॥ २१ ॥

श्रेयोमार्गः किल मुनिवरैः सेव्यते सौख्यहेतोः
सौख्यं द्वेधा सुरयुवतिजं मुक्तिलक्ष्म्याश्रयं च ।
दूरे मुक्तिः सुलभमितरत्सेव्यमन्योऽपि विद्वान्
ब्रूयादेवं तव सहचरो रामगिर्याश्रमस्थः ॥ २२ ॥

श्रेय इति ॥ मुनिवरैः यतिश्रेष्ठैः । सौख्यहेतोः सुखनिमित्तम् । श्रेयोमार्गः मोक्षमार्गः । "श्रेयो निःश्रेयसामृतम्" इत्यमरः । सेव्यते आराध्यते । किल "वार्त्तासम्भाव्ययोः किल" इत्यमरः । तथाहि । सौख्यं सुखमेव सौख्यम् । सुरयुवतिजं देववनिताजनितम् । मुक्तिलक्ष्म्याश्रयं च मोक्षलक्ष्मीसमाश्रयं चेति । द्विधा द्विविधं भवतीति शेषः । मुक्तिः मोक्षः । दूरे विप्रकृष्टदेशे । वर्तते इति शेषः । इतरत् अन्यत् । सुरयुवतिजं सुखम् । सुलभं सुखेन लभ्यते तत् । सेव्यमाराध्यम् । एवम् इत्थम् । तव भवतः । सहचरः सहायः मुनीन्द्र इत्यर्थः । रामगिर्याश्रमस्थः रामगिरेः चित्रकूटस्य आश्रमे निवासे तिष्ठतीति तथोक्तः । अन्योपि अपरोऽपि । न केवलमहमेवेत्यपि शब्दार्थः । विद्वान् विपश्चित् । ब्रूयात् वदेत् ॥ २२ ॥

विद्युद्वल्लीविलसितनिभाः सम्पदश्चञ्चलत्वा-
ल्लब्धाभोगा नियतविपदस्तत्क्षणादेव भोगाः ।

तस्माल्लोकः प्रणयिनि जने स्थास्नुभावव्यपाया-
दव्यापन्नः कुशलमवले पृच्छति त्वां नियुक्तः ॥ २३ ॥

विद्युदिति॥ सम्पदः श्रियः। चञ्चलत्वात्। विद्युद्वल्लीविलसितनिभाः तडिल्लताविलासमानाः।लब्धाभोगाः लब्ध आभोगो येषां ते।"आभोगः परिपूर्णता" इत्यमरः। भोगाः इन्द्रियविषयाः। तत्क्षणादेव तत्समयादेव। नियतविपदः नियता विपद्विपत्तिर्येषां ते तथोक्ताः भवन्ति। तस्मात् कारणात्। अबले न विद्यते बलं यस्य तस्मिन् दुर्बले। प्रणयिनि प्रणयोऽस्यास्तीति प्रणयी तस्मिन् प्रेमवति। जने लोके। स्थास्नुभावव्यपायात् स्थिरतरभावस्य व्यपगमात्। तिष्ठतीत्येवंशीलः स्थास्नुः। "ग्लास्थस्नुः" इति स्नुत्यः॥ "स्थास्नुः स्थिरतरः स्थेयान्" इत्यमरः। अव्यापन्नः अप्राप्तविपत्तिः। "आपन्न आपत्प्राप्तः स्यात्" इत्यमरः। वियुक्तः वियोगदुःखी। नियुक्त इति वा पाठः। लोकः जनः। त्वाम्। कुशलं क्षेमम्। "कुशलं क्षेममस्त्रियाम्" इत्यमरः। पृच्छति शृणोति। "दुहि याचि रुचि प्रच्छि" इत्यादिना पृच्छतेर्द्विकर्मकत्वम्॥ २३॥

तद्भोक्तव्ये स्वयमुपनते शीतकत्वं समुज्झे-
र्मृत्युव्याघ्रो द्रुतमनुपदी वाममन्विच्छतीतः।
आयुष्मत्त्वं कुशलकलितं नन्विहाशाधि नित्यं
पूर्वाशास्यं सुलभविपदां प्राणिनामेतदेव ॥ २४ ॥४१॥२८॥

तदिति॥ इतः एतस्मात्। मृत्युव्याघ्रः मृत्युरेव व्याघ्रः। द्रुतं शीघ्रम्। अनुपदी अनुपद्यते इत्येवंशीलस्तथोक्तः अनुगामी। वामं प्रतिकूलम्। "वामं प्रतिकूलेऽपि" इति हलायुधः। "वामो वक्रे मनोहरे" इति धनञ्जयः। अन्विच्छति अभिलषति। तत् तस्मात्। स्वयमुपनते स्वयमेवाप्ते भोक्तव्ये अनुभवनीये वस्तुनि। शीतकत्वम्

औदासीन्यम् । समुज्झेः व्युत्सृज । ननु भो साधो । इह अस्मिन्नव-
सरे । कुशलकलितं क्षेमयुतम् । नित्यं स्थिरम् । आयुष्मत्त्वं दीर्घजी-
वित्वम् । आशाधि प्रार्थय । तथाहि सुलभविपदां सुलभा विपदो
येषां तेषां चलसम्पदाम् इत्यर्थः । प्राणिनाम् असुभृताम् । एतदेव
आयुष्मत्त्वमेव । पूर्वाशास्यं पूर्वमभिलषणीयम् । स्यादिति शेषः ॥२४॥

मायया नारीरूपं दर्शयति—इतोऽर्धवेष्टितानि—

सैषा बाला प्रथमकथिता पूर्वजन्मप्रिया ते
पश्यायाता रहसि परिरभ्यानुमोदं नयेत्त्वाम् ।
अङ्गेनाङ्गं तनु च तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रवमविरतोत्कण्ठमुत्कण्ठितेन ॥ २५ ॥

सेति ॥ ते तव । पूर्वजन्मप्रिया प्राग्भवकान्ता । प्रथमकथिता
प्राग्भाषिता । सैषा सेयम् । बाला युवतिः । "नितम्बिन्यबला बा-
ला" इति धनञ्जयः । आयाता आगता । पश्य प्रेक्षस्व । "पाघ्रा-
ध्मा" इत्यादिना दृशेः पश्यादेशः । तनुना कृशेन । अङ्गेन देहेन । तनु
च कृशं च । अङ्गं देहम् । गाढतप्तेन भृशं संतप्तेन अस्रेण बाष्पाम्बुना ।
तप्तं विरहदुःखोष्णम् । अस्रद्रवम् अश्रुधाराम् । "रोदनं चास्रमश्रु च"
इत्यमरः । उत्कण्ठितेन उत्कृष्टवेदनया । अविरतोत्कण्ठम् अविच्छि-
न्नवेदनाम् । अत्रान्यथान्वयोपायः । तनुना कृशेन । गाढतप्तेन उष्ण-
तरेण । सास्रेण अस्रेण सहितं सास्रं तेन । उत्कण्ठितेन सञ्जातोत्क-
ण्ठेन । अङ्गेन निजदेहेन । तनु च कृशं च । तप्तं विरहदग्धम् ।
अस्रद्रवम् अश्रुक्लिन्नम् । अविरतोत्कण्ठम् अविच्छिन्नवेदनम् । अङ्गं
स्वदेहम् । रहसि एकान्ते । परिरभ्य आलिङ्ग्य । त्वां भवन्तम् । अनु-
मोदम् आनुकूल्यम् । नयेत् प्रापयेत् । अत्र समानानुरागित्वज्ञापनात्
नायके नायिकायाः स्वसमानावस्थात्वम् ॥ २५ ॥

---

१ तत्प्राप्तीच्छां ससंकल्पामुत्कंठां कवयो विदुः ॥

दूरागाढप्रणयदिवसो मन्मथेनातिभूमिं
नीतो बिभ्यत्त्वदभिसरणादुत्सुकः स्त्रीजनस्त्वाम् ।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥२६॥४२॥३९॥

दूरेति ॥ दूरागाढप्रणयदिवसः दूरागाढो दृढः प्रणयस्य विश्वासस्य दिवसो यस्य तथोक्तः । मन्मथेन मदनेन। अतिभूमिं विपत्तिम् । नीतः प्रापितः । बिभ्यत् त्वदभिसरणात् तवाभिगमनात् । उत्सुकः लालसः । दूरवर्त्ती दूरस्थः न वागन्तुं शक्यत इत्यर्थः। वैरिणा विरोधिना । विधिना दैवेन । " विधिर्विधाने दैवेपि " इत्यमरः । रुद्धमार्गः प्रतिबद्धवर्त्मा । स्त्रीजनः अवलालोकः । समधिकतरोच्छ्वासिना दीर्घनिश्वासवता। ताच्छीलिको णीन्। उष्णोच्छ्वासं तीव्रविरहश्वासम् । " तिग्मं तीक्ष्णं खरं तीव्रं चण्डमुष्णवशस्मृतिः " इति हलायुधः । त्वां भवन्तम् । तैः सङ्कल्पैः स्वसंवेद्यैर्मनोरथैः । एकीभवतीत्यर्थः ॥ २६ ॥

सोऽयं त्वत्तः प्रणयकणिकामप्यलब्ध्वा विलक्षो
दूरात्सेवां तव वितनुते पश्य साधो वधूनाम्।
शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ॥ २७ ॥

स इति॥ यः सखीनां वयस्यानाम् । पुरस्तादग्रे । आननस्पर्शलोभात् त्वन्मुखसम्पर्कलोभात् यदपि । शब्दाख्येयं शब्देन रवेणाख्येयम् उच्चैर्वाच्यमपि । यत्तद्वचनमपीति शेषः । ते तव । कर्णे श्रोत्रे। कथयितुं वक्तुम् । लोलः अलसः।अभूत् किल अभवत् खलु । "लोलुपे लोलुभो लोलो लम्पटो चालसेऽपि च" इति यादवः । सोऽयम् वधूनां स्त्रीणाम् । सार्थः समूहः । " सङ्घसार्थौ तु जन्तुभिः " इत्य-

मरः । त्वत्तः त्वत्सकाशात् । प्रणयकणिकामपि प्रेमलेशमपि । अलब्ध्वा अनवाप्य । विलक्षः विस्मयोपेतः । " विलक्षो विस्मयान्वितः" इत्यमरः । तव भवतः । सेवां सेवनम् । दूरात् दविष्ठात् । वितनुते कुरुते । पश्य प्रेक्षस्व ॥ २७ ॥

योऽसौ स्त्रीणां प्रणयमधुरो भावगम्योऽधिकारः
कामाभिख्यां दधदविरलं लोकरूढा प्रसिद्धिः ।
सोतिक्रांतः श्रवणविषयं लोचनाभ्यामदृष्ट-
स्त्वामुत्कंठाविरचितपदं मन्मुखेनेदमाह ॥२८॥४३॥ ४० ॥

य इति ॥ योऽसौ । स्त्रीणां वनितानाम् । प्रणयमधुरः प्रणयेन प्रेम्णा मधुरः मनोहरः । कामाभिख्यां मन्मथाभिधानम् । अविरलं सन्ततम् । "सततानारताश्रान्तसन्ततविरतानिशम्" इत्यमरः। दधत् धरत् । भावगम्यः चित्तज्ञेयः । अधिकारः नियोगः। लोकरूढा लौकिकी प्रसिद्धिः। यथा स्त्रीपुंसयोर्भावविशेषस्यैव कामसञ्ज्ञेति लोकरूढिरित्यर्थः । श्रवणविषयं श्रोत्रगोचरम् । अतिक्रान्तः अतीतः । लोचनाभ्यां नयनाभ्याम् । अदृष्टः अविलोकितः । अतिदूरत्वाच्छ्रोतुं विलोकितुं वा अशक्य इत्यर्थः । सः अधिकारः । त्वाम् । उत्कण्ठाविरचितपदम् उत्कण्ठाविरचितानि पदानि सुप्तिङन्तशब्दानि वाक्यानि वा यस्य तथोक्तम् । " पदं शब्दे च वाक्ये च " इति विश्वः । इदं वक्ष्यमाणं योगिनीत्यादिकम् । मन्मुखेन मम मुखेन । आह ब्रवीति । स एव मद्व्यवधानेन ब्रूत इत्यर्थः ॥ २८ ॥

योगिन्योगप्रणिहितमनाः किंतरां ध्येयशून्यं
ध्यायस्येव स्मर ननु धियाध्यक्षवेद्यं मतं नः ।
श्यामास्वंगं चकितहरिणीप्रेक्षिते दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनं बर्हभारेषु केशान् ॥ २९ ॥

योगिन्निति ॥ योगिन् भो मुने । योगप्रणिहितमनाः ध्यानैकतानमनाः सन् । एवम् एवंविधम् । ध्येयशून्यं ध्यानविषयशून्यम् ।[1] विज्ञानाद्वैतमित्यर्थः । किंतराम् ईषदसमाप्तं किं किंतराम् । "अव्ययैर्ल्किंतिङः" इति तिङाम् । तस्वन्नित्यादिनाऽव्ययम् । ध्यायसि स्मरसि । सदृशवस्तुदर्शनमाह । श्यामास्विति । श्यामासु प्रियङ्गुलतासु । "श्यामामहिलयाह्वया । लतागोविन्दिनीगुन्द्राप्रियङ्गुः फलिनी फली" इत्यमरः । अङ्गं शरीरम् । तथा च । चकितहरिणीप्रेक्षिते भीतैणीप्रेक्षणे । दृष्टिपातं नयनव्यापारम् । "पातस्तु परिनेतुना" इति भास्करः । शशिनि चन्द्रे । वक्त्रच्छायां मुखकान्तिम् । तथा शिखिनां बर्हिभारेषु पिच्छसमूहेषु । केशान् कचान् । धिया बुद्ध्या । ननु निश्चयेन । अध्यक्षवेद्यं प्रत्यक्षविषयम् । नः अस्माकम् । मतं चार्वाकमतमित्यर्थः । स्मर चिन्तय । सौकुमार्यादिकं स्त्रीविषयं ध्यायेत्यर्थः ॥

इतः पादवेष्टितानि—

पश्यामुष्मिन्नवकिसलये पाणिशोभां नखानां
छायामस्मिन् कुरवकवने सप्रसूने स्मितानाम् ।
लीलामुद्यत्कुसुमितलतामंजरीष्वस्मदीया
मुत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान् ॥ ३० ॥

पश्येति ॥ अमुष्मिन् एतस्मिन् । कुरवकवने । नवकिसलये प्रत्यग्रपल्लवे । "पल्लवोऽस्त्री किसलयम्" इत्यमरः । पाणिशोभां हस्तकान्तिम् । अस्मिन् सप्रसूने । एतस्मिन् पुष्पसहिते । "प्रसूनं कुसुमं सुमम्" इत्यमरः । कुरबकवने करण्टकवने । नखानां कररुहाणाम् । छायां द्युतिम् । उद्यत्कुसुमितलतामञ्जरीषु उद्गच्छत्पुष्पितवल्लरीषु । "वल्लरिर्मञ्जरी स्त्रियौ" इत्यमरः । अस्मदीयाम् अस्माकं सम्बद्धाम् ।

1 ध्यानस्य स्मृतित्वेन सदृशादृष्टचिंताद्यास्स्मृतिबीजस्य बोधकाः इति येन तज्जनकसामग्रीमाह

स्मितानाम् ईषद्धसितानाम् । लीलां विलासम् । प्रतनुषु स्वल्पासु । नदीवीचिषु नदीतरङ्गेषु । भ्रूविलासान् भ्रूभङ्गविधीन् । अत्र वीचीनां विशेषणोपादाने अयुक्तगुणग्रहणदोषः । भ्रूसाम्यनिर्वाहाय महत्त्वदोषनिवारणार्थत्वात्तस्य । तदुक्तं रसाकरे । "ध्वन्युत्पादे च सोत्कर्षे भावोक्ता दोषवारणाः । विशेषणाद्विशेष्यस्य नास्य युक्तगुणग्रहः" इति । भ्रूपताकानीति पाठे भ्रुवः पताका इवेत्युपमितसमासः । उत्पश्यामि तर्कयामि । पश्य त्वमपि प्रेक्षस्वेत्यर्थः ॥ ३० ॥

> साद्दश्यं नः स्फुटमिति यथा दृश्यते सर्वगामी
> ध्येयं साक्षात्सुखफलमिदं योगिनां कामदायि ।
> मिथ्याध्यातेर्मुनिषु विधये हे तपोलक्ष्मि तद्व-
> द्धैतैकस्थं क्वचिदपि न ते चंडि साद्दश्यमस्ति॥३१॥४४॥४१॥

साद्दश्यमिति ॥ चण्डि कोपने । गौरादित्वात् ङी । "चण्डीप्रणयिनी तथा" इति धनञ्जयः। "चण्डी कात्यायनी हिंस्रा कोपना स्त्रीषु सम्मता" इति विश्वः। उपमानकथनमात्रेण न न कोपितव्यमित्यर्थः । हे तपोलक्ष्मि तप एव लक्ष्मीस्तत्सम्बुद्धिः । योगिनां मुनीनाम् कामदायि अभीष्टप्रदम् । साक्षात्सुखफलं प्रत्यक्षसुखफलम् । इदम् एतत् । ध्येयं ध्यानार्हम् । सर्वगामि सर्वजीवगमनशीलम् । इति एवम् । नः अस्माकम् । साद्दश्यम् एतद्दार्ष्टान्तिकत्वम् । स्फुटं व्यक्तम् । यथा यद्वत् । दृश्यते तद्वत् तदिव । मुमुक्षुमिथ्याध्यातेः अतत्त्वध्यानस्य । विधये विधानाय । "विधिर्विधाने दैवे च" इत्यमरः । क्वचिदपि वस्तुनि । एकस्थम् एकत्रस्थितम् । ते तव । युष्मदस्मदोरलिङ्गत्वात्त्रिलिङ्गेषु समानत्वम् । साद्दश्यं साम्यम् । नास्ति हन्त । "हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः" इत्यमरः । अतो न बिभेमीत्यर्थः । एतावद्ध्यानविघ्नकरणेऽपि तद्ध्यानस्य भङ्गो नास्तीति ध्वन्यन्तरेणाहेति भावः ॥ ३१ ॥

हा धिग्मूढिं यदयमृषिपः स्वामसाध्वीमजानन्
त्वय्यासक्तिं मुहुरुपगतोऽस्मास्वनादर्यभूच्च ।
चेतोमय्यां यदनुकमितां ध्यायति प्रेयसीं वा
त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायां ॥ ३२ ॥

हेति ॥ यत् यस्मात् । अयम् एषः । ऋषिपः मुनीन्द्रः । " ऋषिर्यतिर्मुनिर्मोक्षुः " इति धनञ्जयः । त्वां भवन्तम् । असाध्वीम् असतीम् । अजानन् अनवबुध्यमानः । त्वयि भवत्याम् । आसक्तिंकाङ्क्षाम् । मुहुः पुनःपुनः । उपगतः उपयातः सन् । अस्मासु इष्टसम्बन्धिषु । अनादरी अप्रेमवान् । अभूत् आसीत् । च पुनः । यत् यस्मात् । प्रणयकुपितां प्रणयकोपिनीम् । त्वां भवन्तीम् । तपोलक्ष्मीं प्रेयसीं वा । प्रकृष्टप्रियामिव । अनुकमितां अनुवाञ्छितां सन् । " ण्वुतृच् " इति तृत्यान्तः । चेतोमय्यां चेतोविकारायाम् । शिलायां शिलापट्टे । धातुरागैः धातव एव वाय्वादय एव रागा रञ्जनद्रव्याणि । "धातुर्वातादिशब्दादिगैरिकादित्वगादिषु " इति यादवः । " चित्रादिरञ्जकद्रव्ये लाक्षादौ प्रणयेच्छयोः । सारङ्गादौ च रागं स्यादरुणे रञ्जने पुमान् " इति शब्दार्णवे । तैः । आलिख्य तिर्माय । ध्यायति चिन्तयति । तस्माद्धेतोः । मूढिं मौढ्यम् । हा धिक् । " हा विषादशुगर्तिषु " कु धिग्भर्त्सननिन्दयोः" इत्युभयत्राप्यमरः । चेतःशिलायां कुपितावस्थायुक्तां तपोलक्ष्मीं प्रकृतिं प्राणधातुभिर्विरच्य ध्यायतीति भावः ॥ ३२ ॥

इतः कतिचिद्भिः पद्यैर्विरहपरवशायाः स्त्रियो दैन्यं प्रादुर्भावयति-

भोभो साधो मम कुरु दयां देहि दृष्टिं प्रसीद
प्रायस्साधुर्भवति करुणार्द्रीकृतस्वांतवृत्तिः ।
योगं तावच्छिथिलय मनाक् प्रार्थनाचाटुकारै-
रात्मानं ते चरणपतितं यावदिच्छामि कर्तुं ॥ ३३ ॥

भोभो इति ॥ भोभो साधो भोभो मुने । "भृशाभीक्ष्ण्या" इत्यादिनाद्विः । मम मे । दयां कारुण्यम् । कुरु विधेहि । दृष्टिं दर्शनम् । देहि देयाः । प्रसीद प्रसन्नो भव । साधुः मुनिः सज्जनो वा । प्रायः प्राचुर्येण । करुणार्द्रीकृतस्वान्तवृत्तिः अगनाद्रां इदानीमाद्रां क्रियते स्म आर्द्रीकृता करुणया कृपया आर्द्रीकृता मृदुभूता स्वान्तस्य चित्तस्य वृत्तिर्वर्त्तनं यस्य सः । कारुण्योपशान्तचित्तवृत्तिरित्यर्थः। भवति यावत् यत्पर्यन्तम् । प्रार्थनाचाटुकारैः प्रियवचनकरणैः । आत्मानं मामबलाम् । ते मुनेः पूर्ववन्द्योः । चरणपतितं पादयोर्विनतम् । कर्तुं करणाय। इच्छामि वाञ्छामि। तावत् तावत्पर्यन्तम् । मनाक् ईषत्। योगं ध्यानम् । शिथिलय विश्लेषय ॥ ३३ ॥

त्वत्सादृश्यं मनसि गुणितं कामुकीनां मनोहृत्
कामाबाधां लघयितुमथोद्रष्टुकामा विलिख्य ।
यावत्प्रीत्या किल बहुरसं नाथ पश्यामि कोष्णै-
रस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे ॥ ३४ ॥

त्वदिति ॥ अथो अनन्तरे । नाथ भो प्रिय । यावत् यदवसरे । "यावत्तावच्च साकल्येऽवधौ मानेऽवधावरणे" इत्यमरः । बहुरसं बहवो रसाः शृङ्गारादयो यस्मिन् तत् । कामुकीनां कामिनीनाम् । "वृपस्यन्ती तु कामुकी"इत्यमरः । मनोहृत् मनोहरम्।मनसि चित्ते। गुणितम् अभ्यस्तम्।"अभ्यस्ते गुणिताहते"इत्यमरः। त्वत्सादृश्यं भवत्साम्यम् । द्रष्टुकामा आलोकितुकामा सती । कामबाधां कामपीडाम् । लघयितुं लघूकर्तुम् । विलिख्य लिखित्वा । प्रीत्या सन्तोषेण । पश्यामि प्रेक्ष्ये । तावत् तदवसरे । मुहुरुपचितैः पुनःपुनः प्रवृद्धैः । कोष्णैः ईषदुष्णैः । "कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिपु तद्वति" इत्यमरः । अस्रैः अश्रुभिः । "अस्रमश्रुणि शोणिते" इति विश्वः ।

मे मम । दृष्टिः चक्षुः । आलुप्यते किलआव्रियते किल । ततो दृष्टि-प्रतिबन्धात्त्वद्रूपदर्शनं प्रतिबध्यत इति भावः ॥ ३४ ॥

तीव्रावस्थे तपति मदने पुष्पबाणैर्मदंगं
तल्पेऽनल्पं दहति च मुहुः पुष्पभेदैः प्रक्लृप्ते ।
तीव्रापायत्वदुपगमनं स्वप्नमात्रेपि नापं
क्रूरस्तस्मिन्नपि न सहते संगमं नौ कृतांतः ॥३५॥४५॥४२॥

तीव्रेति ॥ तीव्रावस्थे तीव्रावस्थायुक्ते । मदने मन्मथे । मदङ्गं मम शरीरम् । पुष्पबाणैः कुसुमशरैः । तपति सन्तापयति सति । पुष्पभेदैः कुसुमच्छेदैः । प्रक्लृप्ते रचिते । तल्पे शयनतले । मुहुः शश्वत् । अनल्पं बहुलं यथा तथा । दहति च प्रतपति सति । तीव्रापाया तीव्रः अपायो यस्याः सा तथोक्ता सती । स्वप्नमात्रे स्वप्ने एव स्वप्न-मात्रं तस्मिन्नपि । जाग्रदवस्थायां तु न चेदपीति शेषः । त्वदुपगमनं तव सङ्गमम् । नापं नागमम् । "आप्लृ व्याप्तौ" इति धातोर्लुङि 'स-र्त्तिशास्ति' इत्यादिना लङ् । क्रूरो घातुकः । "नृशंसो घातुकः क्रूरः" इत्यमरः । कृतान्तो दैवम् । "कृतान्तो यमसिद्धान्तदैवा-कुशलकर्मसु" इत्यमरः । तस्मिन्नपि स्वप्नमात्रेऽपि । नौ आवयोः । "वान्नावौ द्वित्वे" इत्यस्मदो नावादेशः । सङ्गमं संयोगम् । न सहते न मर्षति । स्वप्नसङ्गतिरप्यावयोरसहमानं दैवं साक्षात् सङ्गतिं न सहत एवेति अपिशब्दार्थः ॥ ३५ ॥

इतः पूर्वार्धपादवेष्टितपश्चार्धवेष्टितानि-

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
रुत्तिष्ठासुं त्वदुपगमनप्रत्ययात्स्वप्नजातात् ।
सख्यो दृष्ट्वा सकरुणमृदुव्यावहासिं दधानाः
कामोन्मुग्धाः स्मरयितुमहो संश्रयंते विबुद्धां ॥३६॥

मामिति ॥ स्वप्नजातात् स्वप्नसम्भूतात् । त्वदुपगमनप्रत्ययात् तवागमनविश्वासात् । निर्दयाश्लेपहेतोः निर्दयाश्लेपो गाढालिङ्गनं स एव हेतुस्तस्य दृढसंश्लेपार्थमित्यर्थः।"हेतौ हेत्वर्थैः"इति षष्ठी । आकाशप्रणिहितभुजम् आकाशे निर्विषये प्रणिहितौ प्रसारितौ भुजौ यस्मिन्कर्मणि तत् । उत्तिष्ठासुम् उत्थातुमिच्छुम् । मां कामिनीम् । दृष्ट्वा प्रेक्ष्य। सकरुणमृदुव्यावहासिं करुणासहितं मृदुं व्यावहासिं हास्यम् । दधानाः दधतीति दधानाः । कामोन्मुग्धाः कामेन मूढाः । सख्यः वयस्यः । विबुद्धां प्रबुद्धवतीम् । स्मरयितुं स्वप्नावस्थां ज्ञापयितुम् । संश्रयन्ते समीपमागच्छन्ति । अहो आश्चर्यम् ॥ ३६ ॥

निद्रासंगादुपहितरतेर्गाढमाश्लेपवृत्ते-
लब्धायास्ते कथमपि मया स्वप्नसंदर्शनेषु ।
विश्लेपस्स्याद्विहितरुदितैराधिजैराशुबोधैः
कामोऽसह्यं घटयतितरां विप्रलंभावतारं ॥ ३७ ॥

निद्रासङ्गादिति ॥ निद्रासङ्गात् निद्रासम्बद्धात् । स्वप्नसंदर्शनेषु सुप्तस्य विज्ञापनं स्वप्नः । सुप्तस्य विज्ञाने । "दर्शनं समये शास्त्रे दृष्टौ स्वप्नेक्षणे सवित्" इति शब्दार्णवे । स्वप्न इति संदर्शनानि विज्ञानानि तथोक्तानि । चूतवृक्षवत् सामान्यविशेषभावेन सहप्रयोगः । तेषु । मया कान्तया । कथमपि महतापि यत्नेन । लब्धायाः गृहीतायाः दृष्टाया इति यावत् । उपहितरतेः प्रवृद्धप्रीतेः । ते तव । गाढं दृढम् । आश्लेपवृत्तेः आलिङ्गनवृत्तेः । आधिजैः पुनः पीडाप्रभवैः । "पुंस्याधिर्मानसी व्यथा" इत्यमरः । विहितरुदितैः विहितरोदनैः । आशुबोधैः शीघ्रबोधैः क्षणनिद्राभङ्गैरित्यर्थः । बोधैः प्रबोधैः जागरणैरित्यर्थः । आशु शीघ्रम् । विश्लेपः विगमनम् । स्याद्भवेत् । तथाहि । कामः मन्मथः । असह्यं तीव्रम् । विप्रलम्भावतारं विप्रयोगावतरणम् । घटयतितराम् उत्कृष्टं सन्दर्भयति । आशुप्रबोधवशात्स्वप्नजो व्याश्लेषो दृढं न प्राप्यत इति भावः ॥ ३७ ॥

तांतां चेष्टां रहसि निहितां मन्मथेनास्मदङ्के
त्वत्संपर्कस्थिरपरिचयावाप्तये भाव्यमानम् ।
पश्यन्तीनां न खलु वहुशो न स्थलीदेवतानाम्
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥३८॥४६॥४३॥

तामिति ॥ रहसि एकान्ते । अस्मदङ्के अस्माकं शरीरे । मन्मथेन कामेन । निहितां स्थापिताम् कृतामित्यर्थः । त्वत्सम्पर्कस्थिरपरिचयप्राप्तये । तव संसर्गस्य चिराभ्यासप्राप्तये । भाव्यमानां तांताम् । वीप्सायां द्विः। चेष्टां व्यापृतिम्। पश्यन्तीनां साक्षात्कुर्वन्तीनाम्। स्थलीदेवतानां स्थलदेवतानाम् । "द्वावप्यन्यलिङ्गौ स्थलं स्थली" इत्यमरः । वनदेवतानामित्यर्थः । मुक्तास्थूलाः मौक्तिकानीव स्थूलाः अश्रुलेशाः वाष्पविन्दवः । तरुकिसलयेषु वृक्षपल्लवेषु । आननचेलाञ्चलेन । अश्रुधारणसमाधिर्ध्वन्यते । वहुशो भूरिशः । न पतन्तीति न खलु किन्तु पतन्त्येवेत्यर्थः । निश्चये नञ्द्वयप्रयोगः । तथा च स्मृतिनिश्चयसिद्धार्थे नञ्द्वयप्रयोगः इति ।"महात्मगुरुदेवानामश्रुपातः क्षितौ यदि । देशभ्रंशो महादुःखं मरणं च भवेद्ध्रुवं" इति ॥३८॥

संक्षिप्येत क्षणमिव कथं दीर्घयामा त्रियामा
प्राणाधीशे विधिविघटिते दूरवर्तिन्यभीष्टे ।
इत्थं कामाकुलितहृदया चिन्तयन्तीं भवन्तम्
प्राणारक्षं श्वसिमि वहुशश्चक्रवाकीव तप्ता ॥ ३९ ॥

संक्षिप्येतेति ॥ विधिविघटिते विधिवियोजिते । अभीष्टे समीहिते । प्राणाधीशे प्राणनायके । दूरवर्त्तिनि सति । दीर्घयामा दीर्घा यामाः प्रहराः यस्याः सा विरहवेदनया तथा प्रतीयमानेत्यर्थः । त्रियामा रात्रिः । "त्रियामा क्षणदा क्षपा" इत्यमरः । आद्युत्तरयोर्धयामयोर्दिनव्यवहारात्क्षपायास्त्रियामता । क्षणमिव क्षणकालपरिमाणमिव । कथं केन वा प्रकारेण । संक्षिप्येत लघुक्रियेत । इत्थम्

अनेन प्रकारेण । कामाकुलितहृदया कामेन आकुलितं भ्रान्तं हृदयं चित्तं यस्याः सा । चक्रवाकीव चक्रवाकवनितेव । तप्ता विरहदग्धा । प्राणारक्षं प्राणानामारक्षस्तम् अनुपालकम् । भवन्तं त्वाम् । चिन्तयन्ती स्मरन्ती सती । बहुशः बहुवारम् । श्वसिमि उच्छ्वासं विदधामि ॥ ३९ ॥

ज्योत्स्नापातं मम विषहितुं नोतरां शक्नुवन्त्याः
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
आचित्तेशप्रथमपरिरम्भोदयादित्यभीक्ष्णम्
ध्यायामीदं मदनपरतासर्वचिन्तानिधानम् ॥ ४० ॥

ज्योत्स्नापातमिति ॥ आचित्तेशप्रथमपरिरम्भोदयात् प्राणेशस्य प्रथमस्य परिरम्भस्यालिङ्गनस्योदय उद्भवस्तस्य पर्यन्तम् । "अभिविधौ वाङ्या गादाङ्" इति पञ्चमी । "आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे ।" "परिरम्भः परिष्वङ्गः संश्लेष उपगूहनम्" इत्युभयत्राप्यमरः । ज्योत्स्नापातं चन्द्रिकापतनम् । विषहितुं सोढुम् । नोतरां शक्नुवन्त्याः अत्यर्थमशक्नुवन्त्याः । मम मे । सर्वावस्थासु निखिलदशासु सर्वदेत्यर्थः । अहरपि दिनमपि । मन्दमन्दातपं मन्दोमन्दो मन्दप्रकारः आतपो यस्मिन् तत् । "रीढुणः सदृशे वा" इति द्विरुक्तिः । "कर्मधारयवदुत्तरेषु" इति कर्मधारयवद्भावात् सुपो लुक् । मन्दमन्दातपम् अत्यल्पसन्तापम् । कथं स्यादिति केन वोपायेन भवेदिति । अभीक्ष्णं शश्वत् । मदनपरतासर्वचिन्तानिधानं मदनपरतायाः मन्मथपरवशतायाः सर्वाश्च ताश्चिन्ताश्च तासां निदानं प्रथमं कारणम् । "निदानं त्वादिकारणम्" इत्यमरः । इदमेतत् । ध्यायामि मन्मथस्यावेशे स्मरामि ॥ ४० ॥

कामावेशे महति विहितोत्कण्ठमाबाधमाने
त्वय्यासक्तिं गतमनुगतप्राणमेतद्धृयं च ।

इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे

गाढोष्णाभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥४१॥४७॥४४

कामावेश इति ॥ महति अनल्पे । कामावेशे मन्मथस्यावेशे तदवस्थाप्रवेश इत्यर्थः । विहितोत्कण्ठं विहितमुत्कण्ठं यथा तथा । आवाधमाने आवाधत इत्यावाधमानस्तस्मिन् सति व्यथयति सति । चटुलनयने चञ्चलदृशि अनासक्तदृष्टावित्यर्थः । त्वयि भवति । आसक्तं प्रीतिगतं प्राप्तम् । मे मम । चेतः चित्तम् । चटुलनयने त्वयि । अनुगतप्राणम् अनुगता अनुकूलतां गताः प्राप्ताः प्राणा यस्य तत् । मे चेतश्च । दुर्लभप्रार्थनं दुःप्राप्ययाचनम् अलभ्यमानमनोरथमित्यर्थः । एतद्वयं च एतयोर्द्वयमपि । गाढोष्णाभिः अतितीव्राभिः । त्वद्वियोगव्यथाभिः भवद्वियोगपीडाभिः । इत्थम् एवम् । अशरणम् अनाथम् । कृतं विहितम् । "शरणं गृहरक्षित्रोः" इत्यमरः ॥ ४१ ॥

तानप्राक्षं मदनविवशा युष्मदीयप्रवृत्तिम्

प्रत्यावृत्तान् हिमवदनिलान् कातरा मत्समीपम् ।

भित्त्वा सद्यः किसलयपुटान्देवदारुद्रुमाणाम्

ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ॥ ४२ ॥

तानिति ॥ ये वायवः । देवदारुद्रुमाणां देवदारुवृक्षाणाम् । किसलयपुटान् पल्लवपुटान् । सद्यः तत्क्षणमेव । भित्त्वा विभिद्य । तत्क्षीरस्रुतिसुरभयः तत्पल्लवानां क्षीरस्रुतिभी रसस्यन्दनैः सुरभयः सुगन्धाः । दक्षिणेन अवाचीनमार्गेण । प्रवृत्ताः निर्गताः । तान् मत्समीपं मम निकटदेशम् । प्रत्यावृत्तान् प्रत्यागतान् । हिमवदनिलान् हिमवत्पर्वतसम्बधिनो वातान् हिमवदचलतः प्रस्थायिनो दक्षिणस्थमलयाचलस्य देवदारुद्रुमाणां गन्धमवाप्य पुनरागतान् वायूनित्यर्थः । मदनविवशा मन्मथाक्रान्ता । कातरा अधीरवत्यहम् ।

" अधीरे कातरस्त्रस्ते भीरुभीरुकभीलुकाः " इत्यमरः । युष्मदीय-प्रवृत्तिं भवत्सम्बन्धिक्षेमवार्ताम् । " दोश्छः " इति छत्वः । " वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात् " इत्यमरः । अप्राक्षम् अपृच्छम् । " पृच्छ ज्ञीप्सायां लुङ् ॥ तव कुशलोदन्तं तानशृणवमिति भावः ॥ ४२ ॥

इष्टे वस्तुन्यतिपरिचितं यत्तदप्यङ्गनानाम् ।
प्रीतेर्हेतुर्भवति नियतं यत्त्वदङ्गानुरोधात् ॥
आलिंग्यन्ते गुणवति मया ते तुषाराद्रिवाताः ।
पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥४३॥ ॥४८॥४५॥

इष्ट इति ॥ यत् यस्माद्धेतोः । गुणवति गुणोस्यास्तीति गुणवान् तस्मिन् गुणविशिष्टे । इष्टे अभिमते । यद्वस्तुनि । अतिपरिचितम् अत्यभ्यस्तम् । तत् तदपि । इष्टवस्तुनि परिचितवस्तुष्वपि । अङ्गनानां वनितानाम् । प्रीतेः प्रेम्णः । नियतं निश्चितम् । हेतुः कारणम् । भवति । तस्माद्धेतोः । एभिः एतैः । पूर्वं प्राक् । तव ते । अङ्गं शरीरम् । स्पृष्टं भवेद्यदि संश्लिष्टं स्याच्चेत् । किलेति सम्भाव्यमेत-दिति बुद्धिरित्यर्थः । " वार्तासम्भाव्ययोः किल " इत्यमरः । ते तुषाराद्रिवाताः ते हिमवदचलानिलाः । त्वदङ्गानुरोधात् तव शरी-रानुवर्तनात् । " अनुरोधोऽनुवर्तनम् " इत्यमरः । तव शरीरं यथा तथेत्यर्थः । मया कान्तया । आलिङ्ग्यन्ते आश्लिष्यन्ते ॥ ४३ ॥

तन्मे वीर प्रतिवचनकं देहि युक्तं वृथाशाम् ।
माकार्षीर्मा यदि च रुचितं ते तदाभाष्यमेतत् ॥
नन्वात्मानं बहुविगणयन्नात्मनैवावलम्बे ।
तत्कल्याणि त्वमपि नितरां मा गमः कातरत्वम् ॥ ४४ ॥

तदिति ॥ तत् तस्मात् । वीर भो दानवीर । " शूरो वीरश्च

विक्रान्तः ” इत्यमरः । मे मम कान्तायाः । युक्तिं युक्तियुक्तम् । प्रतिवचनकं प्रत्युत्तरम् । देहि देयाः । माम् । वृथाशां व्यर्थाभिलाषवतीम् । मा कार्षीः मा कृथाः । ननु भो प्रिये । अहम् । विगणयन् योगान्ते सत्यमेवं विहरिष्यामीति मनस्यावर्तयन् । आत्मानं माम् । आत्मनैव स्वेनैव । प्रकृत्यादिभ्य उपसङ्ख्यानात्तृतीया । अवलम्बे धारयामि यथाकथंचिज्जीवामीत्यर्थः । तत् तस्मात् कारणात् । कल्याणि भो सौभाग्यवति । “बह्वादेः” इति ङी । अनेन सौभाग्येनाहं जीवामीत्याशयः । त्वमपि अहमिव भवत्यपि । नितराम् अत्यन्तम् सुतरां वा । कातरत्वम् अधीरत्वम् । “ अधीरे कातरस्त्रस्ते ” इत्यमरः । मा गमः मा गच्छ । गमेर्लुङ् । इत्येतद्वचः । ते तव । यदि च । रुचितं चेत् तर्हि । तदा तत्समये । भाष्यं वक्तव्यम् । एवं वक्तुमभिलाषा चेत् ब्रूहीति भावः ॥ ४४ ॥

एवं प्रायां निकृतिमसुरः स्त्रीमयीमाशु कुर्वन्
व्यर्थोद्योगः समजनि मुनौ प्रत्युतागात्स दुःखम् ।
कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण॥४५॥ ॥४९॥४६॥

एवमिति ॥ मुनौ पार्श्वनाथे । असुरः दैत्यः । एवम् । प्रायां बहुलाम् । “ प्रायो भूम्न्यन्तगमने ” इत्यमरः । स्त्रीमयीं स्त्रीविकाराम् स्त्रीप्रकृतिं वा । निकृतिं शाठ्यम् । “ कुसृतिर्निकृतिः शाठ्यम् ” इत्यमरः । आशु शीघ्रम् । कुर्वन् वितन्वन् । व्यर्थोद्योगः निष्फलप्रयत्नः । समजनि समजायत । प्रत्युत किं पुनः । सः दैत्यः । दुःखं व्यथाम् । अगात् अगमत् । तथाहि एकान्तं केवलम् । अत्यन्तमिति वा पाठः । अत्यन्तं नियतम् । सुखं सौख्यम् । पुरुषस्य उपनतं प्राप्तमिति प्रश्नः । एकान्ततः नियमेन । दुःखं वा दुःखमपि । कस्यापनतम् । किन्तु । दशा सुखदुःखयोरवस्था ।

चक्रनेमिक्रमेण चक्रस्य रथाङ्गस्य नेमिस्तदन्तश्चक्रम् । " चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधीः पुमान् " इत्यमरः । तस्याः क्रमेण क्रमशः । नीचैरधस्तात् । उपरि च ऊर्ध्वमपि । गच्छति प्रवर्तते जन्तोः सुखदुःखे पर्यावर्तेते । न ध्रुवभूते इत्यर्थः ॥ ४५ ॥

इतः पूर्वार्धपादवेष्टितेन पश्चार्धपादवेष्टितम्—

यस्मिन्काले समजनि मुनेः केवलं ज्ञानसम्प-
द्यस्मिन्दैत्यो गिरिमुदहरन्मूर्ध्नि चिक्षेप्सुरस्य ।
तत्कालं सा शरदुदभवद्वक्तुकामेतिवोच्चैः
शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ ॥ ४६ ॥

यस्मिन्निति ॥ यस्मिन् यस्मिन्काले । दैत्यः असुरः । अस्य पार्श्वतीर्थनाथस्य । मूर्ध्नि मस्तके । " मूर्धा ना मस्तकोऽस्त्रियाम् " इत्यमरः । चिक्षेप्सुः क्षेप्तुमिच्छुः । गिरिं पर्वतम् । उदहरत् धरति स्म । तस्मिन् काले । मुनेः पार्श्वनाथस्य । केवलज्ञानसम्पत् कैवल्यबोधसम्पत्तिः । समजनि जायते स्म । शार्ङ्गपाणौ शार्ङ्गं पाणौ यस्य तस्मिन् विष्णौ । 'प्रहरणात्सप्तमी च' इति पाणिशब्दस्य विकल्पतः पूर्वनिपातः । भुजगशयनात् भुजगः शेष एव शयनं तस्मात् । उत्थिते उत्तिष्ठते स्म उत्थितः तस्मिन्सति । मे मम । शापान्त इति । शपनावसानमिति । सा शरत् शरदृतुः । तत्कालं शापकालम् । उच्चैः अधिकम् । वक्तुकामा वा वक्तुं कामा तथोक्ता वक्तुमिच्छन्तीव । वाशब्द इवार्थे । उदभवत् उद्बभूव । शरत्कालादिरेव हरिप्रबोधनकालः । तस्मिन् शरत्कालादौ स्वामिनः केवलज्ञानं समजायतेति भावः ॥ ४६ ॥

ज्योत्स्नाहासं दिशिदिशि शरत्तन्वती प्रादुरासी-
द्दैत्यस्यास्य प्रहसितुमिवासानवृत्तिं दुरन्ताम् ।
वैमल्येन स्फुटसिति दिशां रुन्धती वोष्णकालं
मासानन्यान्गमय चतुरो लोचने मीलयित्वा ॥ ४७ ॥

ज्योत्स्नेति ॥ शरत् शरत्कालः । अस्य दैत्यस्य कमठचरासुरस्य । दुरन्तां दुष्टोऽन्तो यस्यास्तां दुःखफलाम् । अज्ञानवृत्तिम् अबोधवर्तनाम् । प्रहसितुमिव अपहसितुमिव । दिशिदिशि ककुभिककुभि । वीप्सायां द्विः । सर्वास्वपि दिशास्वित्यर्थः । ज्योत्स्नाहासं ज्योत्स्नैवहासस्तम् । तन्वती तनोतीति तन्वती शतृत्यः। "नृद्धक्" इति ङी। लोचने नयने । मीलयित्वा निमील्य । अन्यान् शेषान् । चतुरो मासान् मासचतुष्टयम् । गमय यापय । इति एवम् । दिशाम् आशानाम् । वैमल्येन नैर्मल्येन । उष्णकालं निदाघम् । "निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः" इत्यमरः । स्फुटं व्यक्तम् । रुन्धतीव आवृण्वतीव । प्रादुरासीत् प्रादुर्बभूव । प्रकाशमाना बभूवेत्यर्थः । "प्राकाश्ये प्रादुराविः स्यात्" इत्यमरः । षण्णाम् ऋतूनाम् त्रिकालत्वेनाभिमननात् वर्षाकालान्तर्भूतशरदृतोः सकाशात् अन्यान् हिमशिशिरात्मकस्य हेमन्तस्य चतुरो मासानतीत्य वसन्तग्रीष्मात्मको निदाघकालो भविष्यतीति भावः ॥ ४७ ॥

> जाताकम्पासननियमितः सावधिर्नागराजः
> कान्तां स्माह प्रथममधिपं पूजयावोऽद्य गत्वा ।
> पश्चादावां विरहगुणितं तं तमेवाभिलाषं
> निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥४८॥ ॥५०॥४७

जातेति ॥ जाताकम्पासननियमितः जात आकम्पो यस्य तज्जाताकम्पं तच्च तदासनं च तेन नियमितः नियुक्तः । सावधिः अवधिज्ञानसहितः । नागराजः धरणेन्द्रः । कान्तां पद्मावतीम् । आह स्म उवाच । अद्य इदानीम् । आवां त्वं चाहं चावाम् । त्यदादिरित्येकशेषसमासः । गत्वा यात्वा । प्रथमं पूर्वम् । अधिपं सर्वज्ञम् । पूजयावः महयावः । पश्चादनन्तरम् । परिणतशरच्चन्द्रिकासु परिणता प्रौढा शरच्चन्द्रिका शरदिन्दुकौमुदी यासां तासु । "चन्द्रिका

कौमुदी ज्योत्स्ना" इत्यमरः। क्षपासु निशासु। "त्रियामा क्षणदा क्षपा" इत्यमरः। विरहगुणितं विरहे गुणितम् एवमेवं करिष्याव इति मनस्यावर्त्तितमिति भावः। तंतम्। वीप्सायां द्विः। सर्वमित्यर्थः। अभिलापं तर्पम्। "कामोऽभिलापस्तर्पश्च" इत्यमरः। एवं नियमेन। निर्वेक्ष्यावः भोक्ष्यावः। "निर्वेशो भृतिभोगयोः" इत्यमरः॥ ४८॥

पूर्वपश्चार्धयोरर्धवेष्टितमेव—

प्रस्थानेऽस्य प्रहतपटहे दिव्ययानावकीर्णे
कश्चित्कान्ता तदनुगजनः सस्मितं वीक्षते स्म।
भूयश्चाह त्वमसि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा॥ ४९॥

प्रस्थान इति॥ प्रहतपटहे प्रहतास्ताडिताः पटहा यस्मिन् तस्मिन्। दिव्ययानावकीर्णे दिव्ययानैर्विमानैरवकीर्णे। अस्य नागराजस्य। प्रस्थाने गमने। "प्रस्थानं गमनं गमः" इत्यमरः। पार्श्वतीर्थनाथस्य केवलज्ञानकल्याणयात्रायामित्यर्थः। कश्चित्कोपि। तदनुगजनः तस्य अनुगच्छतीति तदनुगः स चासौ जनश्च तथोक्तः नागेन्द्रानुचरः। "भृत्योथ भृतकः पत्तिः पदातिः पदनोऽनुगः" इति धनञ्जयः। कान्तां निजपत्नीम्। सस्मितं स्मितेन सहितं यथा तथा ईक्षते स्म ईशाञ्चक्रे। भूयश्च पुनरपि। आह ब्रवीति। पुरा पुराशब्दश्चिरातीते। "स्यात्प्रबन्धे चिरातीते निकटागामिके पुरा" इत्यमरः। पुरा पूर्वम्। शयने शय्यायाम्। मे मम। कण्ठलग्ना गलाश्लिष्टा। त्वं भवती। गलबद्धस्य कथमन्यगमनं न सम्भवेदित्यर्थः। निद्रां गत्वा निद्रां प्राप्य। किमपि केन वा निमित्तेनेत्यर्थः। सस्वरं सशब्दम्। उच्चैरित्यर्थः। रुदती रोदनं कुर्वती। विप्रबुद्धा प्रबोधवती। असि भवसि॥ ४९॥

यत्तद्वृत्तं स्मरसि सुभगे मामुपालब्धुकामा
मन्ये त्वीषत्कुपितमिव मे दर्शयन्ति प्रपासि
सान्तर्हासं कथितमसकृत्पृच्छतोसि त्वया मे ।
दृष्टः स्वप्ने कितव रमयन्कामपि त्वं मयेति ॥५०॥ ॥५१॥४८॥

यत्तदिति ॥ सुभगे भो सौभाग्यवति । असकृत् बहुशः। पृच्छतः शृण्वतः । मे मम । कितव भो धूर्त । त्वं भवान् । कामपि कामपि प्रियाम् । रमयन् क्रीडयन् । मया स्वप्ने दृष्टोसि ईक्षितोऽसीति । त्वया कामिन्या । सान्तर्हासम् अन्तर्हासेन सहितम् यथा तथा । कथितं भाषितम् । यद्वृत्तं यद्वर्त्तनम् । माम् उपालब्धुकामा मां हन्तुकामा । स्मरसि ध्यायसि । तु पुनः। ईषत्कुपितं प्रणयकोपम् । मे मम । दर्शयन्तीव प्रकाशयन्तीव । प्रपासि पालयसि। जाने मन्ये । इति पूर्वेणान्वयः ॥ ५० ॥

दृष्ट्वाहीन्द्रं स्थितमधिजिनं सत्सपर्यं सजानिं
प्रालेभेऽसौ सभयमसुरो मुक्तशैलोपयातुम् ।
रुद्धश्चैवं धरणपतिना भो भवान्मा पयासी-
देतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा ॥ ५१ ॥

दृष्ट्वेति ॥ अधिजिनं जिनमधिकृत्य प्रवर्तमानं तथोक्तं तस्मिन् । "लब्धप्रथ" इत्यादिनाव्ययीभावः। जिनेन्द्राभिमुखमित्यर्थः। स्थितं तिष्ठति स्म स्थितस्तम् । सत्सपर्यं सती सपर्या यस्य तम् । "सपर्या चार्हणा समा" सजानिं सह जायया वर्तत इति सजानिस्तम् । "जायाया जानिः" इति बहुव्रीहावादेशः । अहीन्द्रं धरणीधरेन्द्रम् । दृष्ट्वा प्रेक्ष्य । असावसुरः एष दैत्यः । सभयं भयसहितं यथा तथा। मुक्तशैलः त्यक्तपर्वतः सन् । तन्मुनीन्द्रस्योपरिक्षिप्तमुद्धृतं गिरिं भुवि निक्षिप्येत्यर्थः । अपयातुम् अपगन्तुम्। प्रारेभे उपचक्रमे । च पुनः।

भो भवान् हे दैत्य त्वम् । एतस्मात् अस्मात् । अभिज्ञानदानात् अभिज्ञायत इत्यभिज्ञानं लक्षणं तस्य आदानं वितरणं तस्मात् । मां नागेन्द्रम् । कुशलिनं क्षेमवन्तम् । विदित्वा ज्ञात्वा । मा पयासीत् भवच्छब्दयोगात् मोपगच्छेत्यर्थः । एवम् इत्यभयदानेन । धरण-पतिना धरणेशेन । रुद्धः व्यवस्थापितः ॥ ५१ ॥

पूर्वार्धपादवेष्टितं पश्चार्द्धार्धवेष्टितम्—

देवस्यास्य प्रियसहजकः पूर्वजन्मन्यभूस्त्वं
स्त्रीकाम्यंस्तं प्रसभमवधीर्वैरकाम्यंस्तदैनम् ।
तत्ते मौढ्यात्कृतमनुचितं मर्षितं न त्वयापि
मा कौलीनादसितनयने मय्यविश्वासनी भूः ॥ ५२ ॥

देवस्येति ॥ पूर्वजन्मनि कमठचरमरुभूतिभवे । अस्य देवस्य । मरुभूतिचरस्यास्य पार्श्वतीर्थनाथस्य । त्वं भवान् । प्रियसहजकः सह जायत इति सहजः स एव सहजकः प्रियश्चासौ सहजकश्च तथोक्तः । कमठनामा प्रियभ्रातृकः । अभूः अभवः । तदा तत्काले । स्त्रीकाम्यन् स्त्रीमिच्छत्यात्मन इति । वैरकाम्यन् सन् । तमेनं स्वामिनम् । प्रसभं सहसा । "प्रसभस्तु बलात्कारो हठः" इत्यमरः । अवधीः जघनिथ । 'वध हिंसायां' लुङ् । तत् तत्कार्यम् । ते तव । मौढ्यात् अज्ञानात् । अनुचितम् अयुक्तम् । कृतमपि विहितमपि । त्वया भवता । न मर्षितं न शमितम् । निरपराधिनं न वधामीति न निश्चितमित्यर्थः । मयि नागेन्द्रे । असितनयने असिते रक्ते नयने यस्य तस्मिन् सति कौलीनात् कुले भवात् कौलीनात् लोकवादात् । "स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्" इत्यमरः । मय्यविश्वासनी भूः प्रागनविश्वासनः इदानीमविश्वासनो मा भूनिति तथोक्तम् । अविश्वासवान्मा भूरित्यर्थः ॥ ५२ ॥

धीकृत्यैनं मुहुरथ सजूकृत्य तं सोऽहिराजो
भक्त्या भर्तुश्चरणयुगुले प्राणमत्स्नेहनिघ्नः ।
स्नेहानाहुः किमपि विरहे ह्रासिनस्तेप्यभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥५३॥ ॥५२॥४९

धीकृत्येति ॥ अथ अनन्तरे । सोऽहिराजः नागेन्द्रः । तम् एनं दैत्यम् । मुहुः पुनःपुनः । धीकृत्य स्थिरीकृत्य । धिकृत्येति पाठे । स नागेन्द्रः । एनं दैत्यम् । मुहुः पुनःपुनः । धिकृत्य तदपराधोद्भावनेन निर्भर्त्स्य । अथ तमसुरम् । सजूकृत्य सम्बन्धीकृत्य । भक्त्या गुणानुरागेण । भर्तुः अर्हत्स्वामिनः । चरणयुगुले पादारविन्दद्वये । स्नेहनिघ्नः स्नेहाधीनः । " अधीनो निघ्न आयत्तः " इत्यमरः । प्राणमत् प्रणति स्म । अत्र स्नेहनिघ्न इत्यनेन नागेन्द्रपद्मावत्योः प्राग्भवे दह्यमानकाष्ठान्तर्गतस्य सर्पयुगुलस्य पार्श्वनाथेन कृतोपकारो व्यज्यते । न च दीर्घकालविप्रकर्षात् पूर्वस्नेहनिवृत्तिशङ्कत्याह— स्नेहानिति । किमपि किं वा निमित्तम् । अन्योन्यविप्रकर्षे सति । ह्रासिनः ध्वंसिनः नश्वरानित्यर्थः । स्नेहान् प्रेम्णः । आहुः ब्रुवन्ति । तत्तथा न भवतीत्यभिप्रायः । तेऽपि तेऽपि स्नेहाः । अभोगात् विरहभोगात् हेतोः । प्रसज्यप्रतिषेधे नञ्समास इष्यते । इष्टे समीहिते वस्तुनि । ये उपचितरसाः उपचितो रसः स्वादो येषां ते तथोक्ताः प्रवृद्धतृष्णास्सवन्त इत्यर्थः । "रसो गन्धरसास्वादे तिक्तादौ विषरागयोः " इति विश्वः । प्रेमराशी भवति स्नेहाऽतिशयी भवति । वियोगसहिष्णुत्वमापाद्यन्ते इत्यर्थः । स्नेहप्रेम्णोरवस्थाभेदाद्भेदः । तदुक्तम् " आलोके नाभिलाषो रागस्नेहौ ततः प्रेम । परिश्रृङ्गारयोगवियोगाविप्रलम्भाश्च " इति । एतदेव स्फुटीकृतं रसाकरे—"प्रेमादिदृक्षोरम्येषु तच्चिन्ताऽभिलाषः तत्सङ्गबुद्धिः स्यात्स्नेहः तत्प्रवणक्रियाः तद्वियोगासहं प्रेम अतीव तत्सहवर्तनं श्रृङ्गारः तत्समक्रीडासंयोगः सप्तधा क्रमः" इति ॥ ५३ ॥

संक्षेपाच्च स्तुतिमुरगराट् कर्तुमारब्ध भर्तुः
श्रेयस्सूते भवति भगवन्भक्तिरल्पाप्यनल्पम् ।
श्रेयस्कामा वयमत इतो भोगिनीं नोऽनुकूला-
माश्वास्यैनां प्रथमविरहे शोकदष्टां सखीं ते ॥ ५४ ॥

संक्षेपादिति ॥ उरगराट् नागराजः । भर्तुः तीर्थेशस्य । स्तुतिं च स्तोत्रमपि । "स्तवः स्तोत्रं स्तुतिर्नुतिः" इत्यमरः । संक्षेपात् समासात् । कर्तुं करणाय । आरब्ध उपचक्रमे । भगवन् भो स्वामिन् । भवति त्वयि । भक्तिः गुणानुरागः । अल्पापि अल्पीयस्यपि । अनल्पं महत् । श्रेयः भद्रम् । सूते विदधाति । अतः अस्मात्कारणात् । श्रेयस्कामाः श्रेयोभिलाषिणः । वयं भाक्तिकाः । ते तव । प्रथमविरहे आद्यविप्रलम्भे । शोकदष्टां दुःखाक्रान्ताम् । प्रथमविरहोदग्रशोकमिति वा पाठः । प्रथमविरहादुदग्रः उन्नतः शोको यस्यास्ताम् । एनां सखीम् त्वद्भक्तिप्रियाम् । आश्वास्य उज्जीव्य । नः अस्माकम् । अनुकूलाम् अनुरूपाम् । भोगिनीं भोगवतीं नागस्त्रीम् । प्राप्ता इति भावः ॥ ५४ ॥

तमेवार्थं स्पष्टयति–

सैषा सेवा त्वयि विदधति श्रेयसी मे दुरापं
यन्माहात्म्यात्पदमधिगतं कान्तयाऽमा मयेदम् ।
यस्माच्चैनं तदनुचरणे नाहमुज्झन्विहारं
तस्मादद्रिस्त्रिनयनवृषोत्खातकूटान्निवृत्तः ॥ ५५ ॥

सेति ॥ यन्माहात्म्यात् यस्याः भक्तेः सामर्थ्यात् । कान्तयामा वनितया सह । "अमा सह समीपे च" इत्यमरः । मया फणीशेन । दुरापं दुर्दुःखेन आप्यत इति दुरापं आप्तुमशक्यम् । इदं पदम् एतं नागेन्द्रपदम् । "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः ।

अधिगतं प्राप्तम् । यस्माच्च कारणात् । अहम् अहीशः । तदनुचरणेन तस्याः भक्तेरनुकूलाचरणेन । एनं प्रकृतम् । विहारं लीलाविहरणम् । उज्झन् त्यजन् । त्रिनयनवृषोत्खातकूटात् त्रिनयनस्य त्रिनेत्रदिगीशस्य वृषेण वृषभेन "सुकृते वृषभे वृषः" इत्यमरः । उत्खाता अवतारिताः कूटाः शिखराणि यस्य तस्मात् । "कूटोऽस्त्री शिखरं शृङ्गम्" इत्यमरः । तस्माद्द्रेः कैलासात् । निवृत्तः व्यावृत्तोस्मि । त्वद्भक्त्यैव प्रकृतं विहारं त्यक्त्वा निवृत्त इत्यर्थः । सैषा त्वद्भक्तिः । मे मम । श्रेयसे सुखाय । त्वयि जिनेन्द्रे । सेवां सेवनम् । विदधाति बिभर्त्ति ॥ ५५ ॥

तन्मे देव श्रियमुपरि मां तन्वतीयं त्वदङ्घ्र्यो-
भक्तिर्भूयान्निखिलसुखदा जन्मनीहाप्यमुत्र ।
कान्तासङ्गैरलमघवशाद्गृध्नुतां वर्धयद्भिः
साभिज्ञानं प्रहितवचनैस्तत्र युक्तैर्ममापि ॥ ५६ ॥

तदिति ॥ तत् तस्माद्धेतोः । देव भो स्वामिन् । उपरि माम् उत्तरफलरूपाम् । श्रियं सम्पदम् । तन्वति कुर्वति । इह अस्मिन् । अमुत्रापि परत्रापि । जन्मनि भवे । निखिलसुखदा निखिलानि सुखानि ददातीति तथोक्ता । त्वदङ्घ्र्योः तव पादयोः । "पदङ्घ्रिश्चरणोऽस्त्रियाम्" इत्यमरः । इयं भक्तिः गुणानुरागः । मे मम । भूयात् भवतु । अघवशात् मोहनीयाख्यपापवशात् । गृध्नुताम् अभिलाषुकत्वम् । "गृध्नुस्तु गर्धनः । लुब्धोभिलाषुकः" इत्यमरः । वर्द्धयद्भिः एधयद्भिः । साभिज्ञानं सलक्षणं यथा तथा । प्रहितवचनैः प्रहितकुशलैरिति वा पाठः । प्रहितं प्रेषितं वचनं कुशलं वा येषु तैः । तत्र तत्कार्ये । युक्तैरपि विशिष्टैरपि । कान्तासङ्गैः वनितासंसर्गैः । मम भुजगराजस्य । अलं पर्याप्तम् । अनादिकर्मवशात् पुनः काङ्क्षां वर्धयन्तः ।

कान्तासंसर्गा मा भूवन् । निखिलश्रेयस्करी त्वद्भक्तिरेव भूयादिति प्रार्थना ॥ ५६ ॥

भूयो याचे सुरनुत मुने त्वामुपारूढभक्तौ
दैत्ये चास्मिन्प्रणयमधुरां देहि दृष्टिं प्रसीद ।
चित्तोद्योगैरनुशयकृतैश्चास्य गात्रात्प्रपित्सु
प्रातः कुन्दप्रसवशिथिलं जीवितं धारयेदम् ॥५७॥५३॥५०

भूय इति ॥ सुरनुत भो देवस्तुत । मुने मन्यते केवलज्ञानेन लोकालोकस्वरूपमिति मुनिः तत्सम्बोधनं हे योगीन्द्र । त्वां भवन्तम् । भूयः पुनः । याचे प्रार्थयामि । उपारूढभक्तौ सम्प्राप्तभजने शरणं गते इत्यर्थः । अस्मिन् दैत्येच एतदसुरेऽपि । प्रणयमधुरां प्रीतिकोमलाम् । दृष्टिं दर्शनम् । देहि देयाः । प्रसीद प्रसन्नो भव । अनुशय कृतैः पश्चात्तापविहितैः । चित्तोद्योगैः चित्तोद्वेगैरिति वा पाठः । चित्तोद्वेगैः निजापराधस्मरणजनितमनोभयैः । अस्य दैत्यस्य । गात्रात् शरीरात् । प्रपित्सु प्रपतितुमिच्छु प्रपित्सु प्रयियासु । प्रातः कुन्दप्रसवशिथिलं प्रभातकुन्दकुसुममिव शिथिलं दुर्लभम् । इदं जीवितम् एतज्जीवनम् । धारय स्थापय । निजापराधस्मरणानुशयात् पापभीतेश्च दैत्यस्य गात्रान्निर्यज्जीवितं प्रसन्नदृष्ट्या समाश्वास्य पालयेति भावः ॥ ५७ ॥

स्तुत्यन्तेऽसौ व्यरचयदिव च्छत्रमुच्चैः फणालिं
भर्तुर्भक्त्या दधदधिशिरः स्वां वितत्य प्रमोदात् ।
व्यात्तैर्वक्त्रैर्ध्रुवमिति मुनिं वक्तुकामस्तदानीं
कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे ॥ ५८ ॥

स्तुत्यन्त इति ॥ स्तुत्यन्ते स्तोत्रावसाने । तदानीं तत्समये । असौ नागेन्द्रः । सौम्य भो मनोहराङ्ग । "सौम्यं तु सुन्दरे सोमदैवते"

इत्यमरः । मे मम । त्वया भवता सह । वन्धुकृत्यं वान्धवकार्यम् । इदम् एतत् । व्यवसितम् निश्चितम् । कच्चित् । "कच्चित्कामप्रवेदने" इत्यमरः । इति एवं । व्यात्तैः विदारितैः । वक्त्रैः मुखैः । मुनिं पार्श्व-नाथं प्रति । प्रमोदात् प्रहर्षात् । ध्रुवं निश्चयेन । वक्तुकामः भाषि-तुमिच्छुस्सन् । स्वां स्वकीयाम् । फणालिं फणानामावलिम् । "स्फटायां तु फणा द्वयोः" "वीथ्यालिरावलिःपङ्क्तिः" इत्यमरः । वितत्य विस्तृत्य । भक्त्या अनुरागेण । भर्त्तुः तीर्थनाथस्य । अधिशिरः शिरोऽधिकृत्याधिशिरः तस्मिन् । "शब्दप्रथा–" इत्यव्ययीभावः । दधत् धरन् । उच्चैः महत् । छत्रमिव आतपत्रमिव । व्यरचयत् विरराज । कमठकृतोपसर्गव्यपोहनाय नागेन्द्रः स्वविक्रियया भुजगफणालिं तन्मस्तकस्योपरि विततानेति भावः ॥ ५८ ॥

इतः पादवेष्टितान्येव–

देवी चास्य प्रचलदलका लोलनेत्रेन्दुवक्त्रा
दिव्यं छत्रं व्यरचयदहो धैर्यमित्यालपन्ती ।
दैत्यस्याद्रिर्यदभिदलनं शक्तियोगेऽपि कर्त्तुं
प्रत्यादेशान्न खलु भवतो धीरतां कल्पयामि ॥ ५९ ॥

देवीति ॥ प्रचलदलका प्रचलन्तः अलकाश्चूर्णकुन्तलाः यस्याः सा तथोक्ता । लोलनेत्रा लोले चञ्चले नेत्रे यस्याः सा । "लोलश्च-लसतृष्णयोः" इत्यमरः । इन्दुवक्त्रा इन्दुरिव वक्त्रं यस्याः सा इन्दु-वक्त्रा । अस्य नागेन्द्रस्य । देवी च कान्ताऽपि । यत् यस्मात् । दैत्यस्य असुरस्य । अद्रेः पर्वतस्य । तेन पातितस्येति भावः । अभिदलनं विदारणम् । कर्तुं विधानाय । शक्तियोगेऽपि सामर्थ्यसम्भवेऽपि । प्रत्यादेशात् प्रतिवचनात् । करिष्यामीति प्रतिभाषणादित्यर्थः । "उक्तिराभाषणं वाक्यमादेशो वचनं वचः" इति शब्दार्णवे । भवतः अनन्तशक्तिमतस्तव । धीरतां धीरत्वम् । न कल्पयामि खलु न

समर्थयामि हि । किं तर्हि । प्रत्युत्तया भावेऽपि निश्चिनोम्येवेति भावः । तस्माद्धेतोः अहो धैर्यमिति । आश्चर्यं धीरत्वमिति । आलपन्ती ब्रुवन्ती । दिव्यं दिवि भवम् । आतपवारणं व्यरचयत् अस्रजत् ॥ ५९ ॥

तच्छायायां समधिकरुचिं देवमुत्पन्नबोधं
बद्धास्थानं शरणमकृतत्यक्तवैरः स दैत्यः ।
श्रेयोऽस्मभ्यं समभिलषितं वारिवाहो यथा त्वं
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः ॥ ६० ॥

तस्मिति ॥ तच्छायायां तयोर्नागेन्द्रफणातच्छत्रयोः छायायामनातपे । समधिकरुचिं समधिका प्रवृद्धा रुचिः कान्तिर्यस्य तम् । उत्पन्नबोधं सञ्जातकेवलज्ञानम् । अनेन तदुपसर्गावसर एव नागेन्द्रपद्मावतीभ्यां फणावलिच्छत्रद्वयं विरचितमिति पुराणार्थः सूच्यते । बद्धास्थानं बद्धं शक्राधिष्टेन धनदेन विरचितम् आस्थानं समवसरणं यस्य तं देवं पार्श्वतीर्थनाथम् । स दैत्यः कमठचरोऽसुरः । त्यक्तवैरः मुक्तविरोधः सन् । शरणं रक्षितारम् । "शरणं गृहरक्षित्रोः" इत्यमरः । अकृत अकरोत् । 'डुकृञ् करणे' लुङि तङ् । वारिवाहः मेघः । याचितः प्रार्थितः सन् । निःशब्दोऽपि निर्गर्जितोऽपि । चातकेभ्यः पक्षिविशेषेभ्यः । अभिलषितं वाञ्छितम् । जलम् उदकम् । यथा यद्वत् प्रदिशति तद्वदित्यर्थः । त्वं तीर्थनाथो भवान् । अस्मभ्यं नः । श्रेयः अभ्युदयनिःश्रेयससम्पत्तिम् । प्रदिशसि प्रदाता भवसि । इह परत्र जन्मनि सुखदाता भवसीति भावः ॥ ६० ॥

प्रत्युत्कीर्णो यदि च भगवन्भव्यलोकैकमित्रात्
त्वत्तः श्रेयः फलमभिमतं प्राप्नुयादेव भक्तः ।
प्रत्युक्तः किं फलति जगते कल्पवृक्षः फलानि
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥६१॥५४॥५१॥

प्रत्युत्कीर्ण इति ॥ भगवन् भो पार्श्वनाथ । भक्तः भाक्तिकजनः । त्वां प्रत्युत्कीर्णः अभ्युदयादिसुखं मम देहीति प्रतिवाक्योत्कीर्णः । यदि च चेत्तर्हि भव्यलोकैकमित्रात् भव्यलोकानां भाक्तिकजनानाम् । एकं मुख्यं मित्रं श्रेयस्सुखं तस्मात् । "लोकस्तु भुवने जने" "एके मुख्यान्यकेवलाः" इत्युभयत्राप्यमरः । त्वत्तः भवत्सकाशात् । अभिमतं वाञ्छितम् । श्रेयःफलं सौख्यफलम् । प्राप्नुयादेव उपलभेदेवेति निश्चयः । तथाहि । कल्पवृक्षः सुरद्रुमः । जगते सुकृतिने लोकाय । फलानि अभीष्टवस्तूनि । प्रत्युक्तैः दिशामीति प्रत्युत्तरैः । फलति किं निष्पादयति किम् । किं तर्हि । सतां सत्पुरुषाणाम् । प्रणयिषु विनयवत्सु जनेषु । ईप्सितार्थक्रियैव अभिमतार्थप्रदानमेव । प्रत्युक्तं हि प्रतिवचनं हि । क्रिया केवलमुत्तरमित्यर्थः । "नीचो वदति न कुरुते न वदति सुजनः करोत्येव"। इति तात्पर्यम् ॥ ६१ ॥

सह्रीकस्ते कथमपि पुरो वर्त्तितुं सङ्कटेऽहं
दूराद्वक्तुं निकृतिबहुलः पापकृद्वैरदग्धः ।
सौजन्यस्य प्रकटय परां कोटिमात्मन्यसङ्गा-
देतत्कृत्वा प्रियमनुचितप्रार्थनादात्मनो मे ॥ ६२ ॥

सह्रीक इति ॥ निकृतिबहुलः तिरस्कारप्रचुरः । शठत्वभरितो वा । "कुसृतिर्निकृतिः शाठ्यम्" इत्यमरः । पापकृत् पापं करोतीति तथोक्तः । दुष्कर्मास्रवान् । "ह्रस्वस्य तक् पिति कृति" इति तगागमः । वैरदग्धः वैरेण चिरानुबद्धविरोधेन दग्धः सन्तप्तः । पापकृद्वैरदग्ध इत्येकपदं वा । पापकृच्चासौ वैरश्च तेन दग्धः । अहं दैत्यपाशः । सह्रीकः लज्जासहितः सन् । दूरात् विप्रकृष्टात् । वक्तुं भाषितुम् । ते भवतस्तव । पुरः अग्रतः । वर्त्तितुं स्थातुम् । कथमिव किमिव । सङ्कटे उद्युक्तोऽस्मि । मे । अनुचितप्रार्थनात् अयोग्ययाचनात् । असङ्गात् निःसङ्गात् । आत्मनः स्वस्य । अप्रियम् उपेक्षात्मकम् ।

एतत् वक्ष्यमाणकार्यम्। कृत्वा निर्वर्त्य। आत्मनि स्वस्मिन्। सौजन्यस्य साधुत्वस्य। परां कोटिम् अत्यन्तप्रकर्षम्। "कोटी सङ्ख्याप्रकर्षयोः" इत्यमरः। प्रकटय प्रादुर्भावय। "उपकारिषु यः साधुः साधुत्वे तस्य को गुणः। अपकारिषु यः साधुः स साधुः सद्भिरुच्यते" इति वचनबलात्। अपकारिणि मय्युपकारं विधाय सुजनत्वं व्यञ्जयेति भावः॥ ६२॥

> अत्राणं मामपघृणमतिप्रौढमायं दुरीहं
> पश्चात्तापाच्चरणपतितं सर्वसत्त्वानुकम्प।
> पापापेतं कुरु सकरुणं त्वाद्य याचे विनम्रः
> सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या॥ ६३॥

अत्राणमिति॥ सर्वसत्त्वानुकम्प सर्वेषु सत्त्वेषु अनुकम्पा यस्य तस्य सम्बोधनम्। "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः। अद्य इदानीम्। विनम्रः नमनशीलः सन्। "नम्रकम्पिस्म्यजस" इत्यादिना रप्रत्ययः। त्वा भवन्तम्। "त्वामौ द्वितीयायाः" इति त्वादेशः। याचे प्रार्थये। सौहार्दात् सुहृद्भावात्। विधुर इति वा विधुरो वियुक्त इति हेतोर्वा। "विधुरस्तु प्रविश्लिष्टः।" "इति हेतु प्रकरणे" इत्युभयत्राप्यमरः। मयि विषये। अनुक्रोशबुद्ध्या वा अनुकम्पामय्या मत्या वा। "कृपा दयाऽनुकम्पा स्यादनुक्रोशोऽपि" इत्यमरः। अपघृणं दयारहितम्। "कारुण्यं करुणा घृणा" इत्यमरः। अतिप्रौढमायं प्रवृद्धमायम्। दुरीहं दुष्टाभिप्रायम्। "इच्छा काङ्क्षा स्पृहेहा तृड् वाञ्छा लिप्सा मनोरथः" इत्यमरः। पश्चात्तापात् अनुतापात्। प्रकृतदोषस्मरणोद्भूतचित्तसन्तापादित्यर्थः। चरणपतितं पादयोरानतम्। अत्राणम् अशरणम्। "त्रातं त्राणं रक्षितमवितं गोपायितं च गुप्तं च" इत्यमरः। माम् असुरपाशम्। पापापेतं दुष्कर्मरहितम्। सकरुणं करुणया सहितम्। कुरु विधेहि॥ ६३॥

इत्थङ्कारं कमठदनुजः स्वापकारं प्रमार्जन्
भूयः स्माह प्रकटितमहाभोगभोगीन्द्रगूढः ।
लोकाह्लादी नव इव घनो देव धर्माम्बु वर्षन्नि-
ष्टान्देशान्विचर जलदप्रावृषा सम्भृतश्रीः ॥ ६४ ॥

इत्थंकारमिति ॥ इत्थंकारम् इत्थमेव इत्थङ्कारम् । "वर्णात्कारः" इति स्वार्थे कारत्यः । अनेन प्रकारेण । कमठदनुजः कमठचरासुरः । स्वापकारं स्वेनकृतापकृतिम् । प्रमार्जन् क्षालयन् । भूयः पुनः । आह स्म ब्रवीति स्म "ब्रुवस्तिप्पञ्च" इत्यादिना णश्प्रत्ययः । आहादेशश्च । देव भो सर्वज्ञ । जलद हे सद्धर्मामृताम्भोद । प्रावृषा वर्षाभिः । "स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः" इत्यमरः । सम्भृतश्रीः प्राप्तशोभः । नवः नवीनः । घन इव मेघो यद्वत् तद्वत् । प्रकटितमहाभोगभोगीन्द्रगूढः प्रकाशितो महाभोगो नागशरीरं यस्य तथोक्तः स चासौ भोगीन्द्रश्च तेन गूढः संवृतः । लोकाह्लादी जगत्सन्तोषकारी । धर्माम्बु धर्मामृतम् । वर्षन् सिञ्चन् । इष्टान् समीहितान् । देशान् जनपदान् । विचर विहर । श्रीविहारोद्यतो भवेत्यर्थः । अत्र भोगीन्द्रगूढत्वेन प्रावृड्जलदोपमा धर्माम्बुवर्षितेन जलदसम्बुद्धिश्च निश्चीयते । लोकाह्लादित्वम् इष्टदेशविहारश्च उभयत्र समावेव ॥६४॥

यत्त्वन्मौढ्याद्बहुविलसितं न्यायमुल्लङ्घ्य वाचां
तन्मे मिथ्या भवतु च मुने दुष्कृतं निन्दितस्वम् ।
भक्त्या पादौ जिन विनमतः पार्श्वमेतत्प्रसादात्
मा भूदेवं क्षणमपि सखे विद्युता विप्रयोगः ॥६५॥५५॥५२

यदिति ॥ तत् तस्मात् कारणात् । मुने भो सर्वज्ञ । मौढ्यात् अज्ञानात् । न्यायं नयनमार्गम् । उल्लङ्घ्य मे मम । वाचां वचसां यत् बहु विलसितं बहुलं विहितम् । तत् निन्दितस्वं निन्दितः स्वो

यस्य-तत् तथोक्तम्। "स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः। दुष्कृतं च पापमपि। उपसर्गार्जितमिति शेषः। "अंहो दुरितदुष्कृतम्" इत्यमरः। मिथ्या असत् अभावरूपमित्यर्थः। भवतु अस्तु। जिन भो विजयिन्। त्रयोविंशतितमतीर्थङ्करपरमदेव। सखे भो मित्र। पार्श्व भो पार्श्वजिन। भक्त्या गुणानुरागेण। पादौ चरणाम्भोरुहे। विनमतः विनमतीति विनमंस्तस्य नमस्कुर्वतः नमस्यतो वा। मे मम। तत्प्रसादात् तयोः पादयोः प्रसादात् प्रसन्नत्वात्। "प्रसादस्तु प्रसन्नता" इत्यमरः। एवम् इत्थम्। विद्युता विदो बोधस्य। "विद्धाने ज्ञातरि त्रिषु" इत्यमरः। 'द्युत् दीप्तौ' क्विबन्तः। तया सम्यग्ज्ञानेनेत्यर्थः। विप्रयोगः विश्लेषः। क्षणमपि अल्पकालमपि। मा भूत् मा जनि ॥ ६५ ॥ पादादिवेष्टितानि समाप्तानि ॥

इतः कतिपयानि चूलिकापद्यान्याह—

अनुनयति सतीत्थं भक्तिनम्रेण मूर्ध्ना
कमठदनुजनाथे नागराजन्यसाक्षात्।
ध्रुवमनुशयतप्ताद्वैरबन्धश्चिरात्तः
स्खलति निजचित्तात्सन्तताश्रुच्छलेन ॥ ६६ ॥

अनुनयतीति ॥ नागराजन्यसाक्षात् नागानां राजानः उरगेन्द्राः तेषामपत्यानि नागराजन्याः। "जातौ राज्ञः" इति यः। "येऽनोऽद्ये" इति इत्यनो लुक्। तेषां नागकुमाराणां। साक्षात् प्रत्यक्षतः। "मूर्धाभिषिक्तो राजन्यः।" "साक्षात्प्रत्यक्षतुल्ययोः" इत्यमरः। कमठदनुजनाथे कमठचरासुरनायके। भक्तिनम्रेण भक्त्या नमनशीलेन। इत्थम् अनेन प्रकारेण। अनुनयति सति अनुनयतीत्यनुनयन् तस्मिन् सति प्रणामादिविनयशीले सति। अनुशयतप्तात् पश्चात्तापेन सन्तप्तात्। निजचित्तात् स्वहृदयात्। चिरात्तः चिरात्प्राप्तः। वैरबन्धः विरोधसम्बन्धः। सन्तताश्रुच्छलेन प्रवृद्धबाष्पाम्बुव्याजेन। "पदं व्यति-

करं छलम् " इति धनञ्जयः । ध्रुवं निश्चयेन गलति स्म चन्यति स्म ॥ ६६ ॥

केवलज्ञानानन्तरमुद्भूतानतिशयानभिधातुमुपक्रमते—

अथ सुरभि समीरोन्दोलितैः कल्पवृक्षैः
समममरनिकायाः पुष्पवृष्टिं वितेनुः ।
अविरलनिपतद्भिः स्वर्विमानैर्निरुद्धां
नवजलदविलिप्ते वीक्ष्यतासौ तदाद्यौः ॥ ६७ ॥

अथेति ॥ अथ अनन्तरे । अमरनिकायाः देवसमूहाः । सुरभिसमीरान्दोलितैः सुरभिणा घ्राणतर्पणयुक्तेन समीरेण वायुना आन्दोलितैः कम्पितैः । कल्पवृक्षैः सुरद्रुमैः । समं साकम् । पुष्पवृष्टिं प्रसूनवर्षणम् । वितेनुः ववर्षुः । तदा तदवसरे । अविरलनिपतद्भिः अविरलं निरन्तरं निपतन्त्यवतरन्तीति तथोक्तास्तैः । स्वर्विमानैः स्वर्व्योमयानैः । "स्वर्गे पुरे च लोके स्वः" इत्यमरः । निरुद्धा व्याप्ता । असौ द्यौः । एतन्नभः । "द्योदिवौ द्वे स्त्रियामभ्रम्" इत्यमरः । नवजलदविलिप्तेव प्रत्यग्रमेघेन लेपितेव । ईक्ष्यत अदृश्यत ॥ ६७ ॥

सपदि जलदमुक्तैः सान्द्रगन्धाम्बुपातै-
र्मधुपगणविकीर्णैराश्वसत्क्ष्मा क्षतोष्मा ।
वियति मधुरमुच्चैर्दुन्दुभीनां च नादः
सुरकरतलगूढास्फालितानां जजृम्भे ॥ ६८ ॥

सपदीति ॥ जलदमुक्तैः वारिवाहेण वृष्टैः । मधुपगणविकीर्णैः मधुपानां भ्रमराणां गणैः निचयैः विकीर्णैः व्याप्तैः । सान्द्रगन्धाम्बुपातैः निरन्तरैः गन्धेन युक्तानामम्बूनां पातैः सेकैः । क्षतोष्मा क्षतः ऊष्मा यस्याः सा शान्तोष्णा । क्ष्मा भूमिः । "क्ष्मावनिर्मेदिनी मही" इत्यमरः । सपदि शीघ्रम् । आश्वसत् उदजीवत् । सस्यादिशोभावती

वभूवेत्यर्थः । वियति आकाशे । सुरकरतलगूढास्फालितानां सुरकर-तलैः निर्जरपाणितलैः गूढं गुप्तम् आस्फालितानां ताडितानाम् दुंदुभीनां भेरीणां " भेरी स्त्री दुंदुभिः पुमान् । " इत्यमरः । नादश्च निनदोऽपि । मधुरं श्रुतिसुखं यथा तथा ॥ उच्चैरधिकं । जजृंभे जृंभति स्म ॥ ६८ ॥

इति विदितमहर्द्धिं धर्मसाम्राज्यमिन्द्रा
जिनमवनतिभाजो भेजिरे नाकभाजाम् ।
शिथिलितवनवासाः प्राक्तनीं प्रोज्झ्य वृत्तिं
शरणमुपययुस्तं तापसा भक्तिनम्राः ॥ ६९ ॥

इतीति ॥ कथितोपलक्षणात् चतुस्त्रिंशदतिशयैः । विदितमहर्द्धिं विदिता प्रतीता महती ऋद्धिः सम्पदस्य तम् । धर्मसाम्राज्यं संसार-समुद्रे मग्नान् जन्तून् उद्धृत्य उत्तममोक्षसुखे धरतीति स्थापयतीति धर्मस्तस्यसाम्राज्यं सम्राड्भावो यस्य तम् । जिनं पार्श्वतीर्थेश्वरम् । नाकभाजां नाकं स्वर्गं भजन्तीति नाकभाजस्तेषाममराणाम् । इन्द्रा वर्याः । अवनतिभाजः अवनतिं प्रणमतं भजन्तीति तथोक्ताः सन्तः । भेजिरे सिषेविरे । तापसाः जटिलादयः कुलिङ्गिनः । प्राक्तनीं प्राग्जाताम् । वृत्तिम् आचरणम् । प्रोज्झ्य विहाय । शिथिलवनवासाः विश्लिष्टविपिनविलयाः । भक्तिनम्राः भक्त्या नमनशीलाः । तं तीर्थेशिनम् । शरणं रक्षणम् । उपययुः श्रयंति स्म । जटिलादयः कुतापसाः निजकायक्लेशे निष्फलत्वं निश्चिन्वन्तः । तपोमहिम्ना प्राप्तोदयं पार्श्व-तीर्थङ्करं तत्तपोलब्धुकामाः शरणं ययुरिति भावः । तदुक्तं समन्तभद्रस्वामिभिः । "वनौकसः स्वश्रमवन्ध्यबुद्धयः शमोपदेशं शरणं प्रपेदिरे । ससत्यविद्यातपसां प्रणायकः समग्रधीरुग्रकुलाम्बरांशुमान् ॥ ६९ ॥

अथ भगवानाचार्यः स्वाभिप्रायप्रकाशपुरःसरं कृतिमुपसंहरन् मङ्गलाशिषमाह—

इति विरचितमेतत्काव्यमावेष्ट्य मेघं
बहुगुणमपदोषं कालिदासस्य काव्यम् ।
मलिनितपरकाव्यं तिष्ठतादाशशाङ्कं
भुवनमवतु देवस्सर्वदाऽमोघवर्षः ॥ ७० ॥

इतीति ॥ कालिदासस्य कालिदासनाम्नः कवेः । मेघं काव्यं मेघदूताह्वयं प्रबन्धम् । आवेष्ट्य वेष्टयित्वा । इति एवम् । विरचितं विहितम् । बहुगुणं बहवो माधुर्यादयः गुणा यस्मिन् तत् । अपदोषम् अपगता अलक्षणादयो दोषा यस्मात्तत् । एतत्काव्यं पार्श्वाभ्युदयाभिधानं काव्यम् । आशशाङ्कम् आचन्द्रावधि नित्यमित्यर्थः । मलिनितपरकाव्यं मलिनितं कलङ्कितं परकाव्यं मेघसंदेशो यया तथा । तिष्ठतात् निवसतु । अमोघवर्षः काव्यकर्तुः प्रियशिष्यः वंकापुराधिपः । पक्षे अमोघंसफलं वर्षं वृष्टिः यस्य सः । देवः प्रभुः । पक्षे मेघः । "देवो राज्ञि सुरेम्बुदे" इति नानार्थरत्नमालायाम् । भुवनं जगत् । सर्वदा सर्वस्मिन् काले । अवतु पातु "अव रक्षणे" लोट् ॥७०॥

एतत्काव्यप्रभवमेव पुनः सप्रपञ्चमाह—

श्रीवीरसेनमुनिपादपयोजभृङ्गः
श्रीमानभूद्विनयसेनमुनिर्गरीयान् ।
तच्चोदितेन जिनसेनमुनीश्वरेण
काव्यं व्यधायि परिवेष्टितमेघदूतम् ॥ ७१ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचित-
मेघदूतवेष्टितवेष्टिते पार्श्वाभ्युदये भगवत्कैवल्य-
वर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

श्रीवीरसेनेति ॥ श्रीवीरसेनमुनिपादपयोजभृङ्गः वीरसेनश्चासौ मुनिश्च वीरसेनमुनिः श्रियोपलक्षितस्तथोक्तः पादावेव पयोजे पादपयोजे श्रीवीरसेनमुनेः पादपयोजे तथोक्ते भृङ्ग इव भृङ्गः श्रीवीरसेनमुनिपादपयोजयोः भृङ्गस्तथोक्तः । गरीयान् गुरुतरः । श्रीमान् तपोलक्ष्मीवान् । विनयसेनमुनिः विनयसेननामा यतिः। अभूत् बभूव । तच्चोदितेन तेन सधर्मणा विनयसेनमुनिना चोदितः प्रेरितस्तेन। जिनसेनमुनीश्वरेण मुनीनामीश्वरस्तथोक्तः जिनसेनश्चासौ जिनसेन इति वा मुनीश्वरस्तेन । परिवेष्टितमेघदूतं परिवेष्टितम् आक्रान्तं मेघदूतं तन्नामकाव्यं येन तत्तथोक्तम् । काव्यम् एतत्पार्श्वाभ्युदयसञ्ज्ञं काव्यम् । व्यधायि अकारि ॥ ७१ ॥

इत्यमोघवर्षपरमेश्वरपरमगुरुश्रीजिनसेनाचार्यविरचितमेघदूतवेष्टिते पार्श्वाभ्युदये तद्व्याख्यायां च सुबोधिकाख्यायां भगवत्कैवल्यवर्णनो नाम चतुर्थः सर्गः ॥ ४ ॥

---

शुभम् ।

अत्र काव्यावतरो वितन्यते—

श्रीजिनेन्द्रमताब्धीन्दुर्मूलसङ्घाम्बरांशुमान् ।
वीरसेनाभिधानो वाऽवर्त्तिष्टाचार्यपुङ्गवः ॥ १ ॥

तच्छिष्यो जिनसेनार्यो बभूव मुनिनायकः ।
यत्कृतिर्भुवनेऽद्यापि चन्द्रिका प्रसरायते ॥ २ ॥

वङ्कापुरे जिनेन्द्राङ्घ्रिसरोजेदिन्दिरोपमः ।
अमोघवर्षनामाऽभून्महाराजो महोदयः ॥ ३ ॥

स स्वस्य जिनसेनार्षे विधाय परमं गुरुम् ।
सद्धर्मं द्योतयंस्तस्थौ पितृवत्पालयन्प्रजाः ॥ ४ ॥

कालिदासाह्वयः कश्चित्कविः कृत्वा महौजसा ।
मेघदूताभिधं काव्यं श्रावयन्गणशो नृपान् ॥ ५ ॥

अमोघवर्षराजस्य सभामेत्य मदोद्धुरः ।
विदुषोऽवगणय्यैष प्रभुमश्रावयत्कृतिम् ॥ ६ ॥

तदा विनयसेनस्य सतीर्थ्यस्योपरोधतः ।
तद्विद्याहंकृतिच्युत्यै सन्मार्गोद्दीप्तये परम् ॥ ७ ॥

जिनसेनमुनीशानस्त्रैविद्याधीश्वराग्रणीः ।
विंशत्यग्रशतग्रन्थप्रबन्धश्रुतिमात्रतः ॥ ८ ॥

एकसन्धित्वतस्सर्वं गृहीत्वा पद्यमर्थतः ।
भूभृद्विद्वत्सभामध्ये प्रोचे परिहसन्निति ॥ ९ ॥

पुरातनकृतिस्तेयात्काव्यं रम्यमभूदिदम् ।
तच्छ्रुत्वाऽसोऽब्रवीद्रुष्टः पठतात्कृतिरस्ति चेत् ॥ १० ॥

पुरान्तरे सुदूरेऽस्ति वासराष्टकमात्रतः ।
आनाय्य वाचयिष्यामीत्यवोचद्यमिकुञ्जरः ॥ ११ ॥

इत्येतदवलोक्याथ सभापतिपुरोगमाः ।
तथैवास्त्विति माध्यस्थ्यात्समयं चक्रिरे मिथः ॥ १२ ॥

श्रीमत्पार्श्वार्हदीशस्य कथामाश्रित्य सोऽतनोत् ।
श्रीपार्श्वाभ्युदयं काव्यं तत्पादार्धादिवेष्टितम् ॥ १३ ॥

सङ्केतदिवसे काव्यं वाचयित्वा स संसदि ।
तदुदन्तमुदीर्याथ कालिदासममानयत् ॥ १४ ॥

श्रीमद्बेलगुलविन्ध्याद्रिप्रोल्लसद्दोर्बलीशिनः ।
श्रीपादाम्बुजमूलस्थः पण्डिताचार्य्ययोगिराट् ॥ १५ ॥

तन्मुनीन्द्रमतिप्रौढिप्रकटीकरणोत्सुकः ।
तद्व्याख्यां प्रार्थितश्चक्रे निजसुन्दरसूनुना ॥ १६ ॥

श्रीपार्श्वात्साधुतः साधुः कमठात्खलतः खलः ।
पार्श्वाभ्युदयतः काव्यं न च क्वचिदपीष्यते ॥ १७ ॥

ततः सौजन्यसम्पूर्त्यै दौर्जन्यपरिहाणये ।
काव्यकौशल्यसंवित्त्यै सद्भिरभ्यस्यतामदः ॥ १८ ॥

इति पार्श्वाभ्युदयकाव्यं तद्व्याख्यानं च परिसमाप्तम् ॥

मङ्गलमहाश्रीः ॥

---

# शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशु० | शु० |
|---|---|---|---|
| २ | ७ | कश्चिद्भवे | कस्मिंश्चिद्भवे |
| " | ११ | तन्मुनीन्द्रं | तं मुनीन्द्रम् |
| ३ | १३ | महिमावती | महिमवती |
| " | १७ | तस्थिवन्त— | स्थितवन्त— |
| " | २५ | कसः २ | यसः २ |
| ४ | ८ | मन्दाक्रान्तानि | मन्दाक्रान्ता— |
| " | १३ | वर्पभोग्येण | वर्षभोग्येन |
| ५ | २ | —ग्येण | —ग्येन |
| " | १५ | —घीटितो | —घांटितो |
| " | २० | घाटितः | धाटितः |
| ६ | २ | पुण्याणि | पुण्यानि |
| ७ | ५ | स । भवन् | संभवन् |
| " | ११ | लिट् | लट् |
| " | १२ | " | " |
| ८ | २ | बहुव्रीहिः | कर्मधारयः |
| " | ७ | ग्रैष्मस्य | ग्रीष्मस्य |
| " | २१ | कूर्पराधः | कूर्पराधः— |
| " | २५ | चित्तं क्षोभान् | चित्तक्षोभान् |
| १४ | १२ | दुःखहेतवो | दुःखहेतौ |
| " | २० | सान्त— | स्वान्त— |
| १५ | १४ | त्वं | तत्त्वं |
| " | १५ | निदधासीति | निदधातीति |
| " | २२ | इत्युक्ता— | इत्युक्त्वा— |
| १६ | १ | इत्युक्ते— | इत्युक्त्वे— |
| १७ | ६ | मनोहरं यस्य तस्मिन् | मनोहरं तस्मिन् |
| २० | २ | धूमज्योतिः सलिल | धूमज्योतिः—सलिल— |
| " | २० | आणिमादय | अणिमादय |
| २१ | १३ | धातोस्तव्यानीयत्यः | धातोरनीयत्यः |
| २२ | ५ | औत्सुकस्य भावः | उत्सुकस्य भावः |
| २४ | २० | जृम्भसि | जृम्भते |
| २५ | १७ | सनि लङ् | णिचि लुङ् |
| २६ | ३ | —याद्ययुद्धं | —याद्य युद्धं |
| " | २१ | राजयुद्धेतिरूढिं | राजयुद्धेति रूढिं |
| २७ | २० | -नुभवन्स्वर्ग- | -नुभव स्वर्ग- |
| २८ | ६ | अनुभवस्वर्गसुखं | अनुभव स्वर्गसुखं |
| " | २४ | श्रेय्यान् | श्रेयान् |
| २९ | १ | मुहासुखं | महासुखं |
| " | २ | ततः | तत् |
| ३० | ११ | पल्लवस्तं | पल्लवस्त्वं |
| ३१ | ९ | तानि | ० |
| " | १४ | भवन्तम् | त्वाम् |
| ३३ | ३ | जाम्ल्यश्च | डाम्ल्यश्च |

पा. १८

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| ३४ | १५ | जानीसीति | जानासीति |
| ३५ | ८ | -विषये। स्मृत्यर्थ— | -विपये स्मृत्यर्थ- |
| ३६ | १७ | इत्यर्थः। | इत्यमरः। |
| ३७ | १८ | नुदयति | नुदति। |
| ३८ | ५ | देहिना | देहिनां |
| " | ११ | आपो | अपो |
| ३९ | २ | -मधिको— | —मधिके— |
| " | " | नस्म | नश्म |
| ४० | १९ | तथोक्ता। | तथोक्ता तस्याः। |
| ४१ | १३ | कालोद्भूत | कालोद्भूता |
| " | १४ | तेन उद्गलितः | तया उद्विगलितः। |
| ४२ | ४ | अहमेव | ममैव |
| ४३ | २४ | द्वितीया। | द्वितीया पक्षे न। |
| ४४ | ६ | राजन् सखेः | राजन्सखेः |
| ४४ | ९ | पृच्छः | प्रच्छः |
| " | १३ | वन्द्ये | वन्द्यैः |
| " | १६ | महद्विपदि | महाविपदि |
| ४६ | ५ | जुहोन् | गुह्व |
| " | १३ | —पदानां | पदानि |
| ४७ | २ | त्वप्रया— | त्वत्प्रया— |
| ४८ | १६ | लुट् तस्यांस् | लुटि तास् |
| " | १९ | सुखकरे | सुखकरी |
| " | २० | परिलघुपयः | परिलघु पयः |
| ५० | १० | सन्नद्धः। | ० |

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| " | १९ | हृष्टोत्साह | हृष्टोत्साहः |
| ५१ | ३ | विद्युदुत्पत्ति- | विद्युदुत्पत्ते- |
| ५३ | ११ | व्योम्नि। | वियति व्योम्नि। |
| " | २५ | त्वाद्दक्षवि | त्वादृक्षे |
| ५४ | ६ | -प्रतिति- | -प्रतति- |
| " | १६ | -प्रतिति- | -प्रतति- |
| ५५ | १८ | त्वां | त्वं |
| " | २१ | -तर्पणः | तर्पणं |
| ५७ | ८ | -सक्तिस्तस्य | सक्तिस्तस्या |
| " | १२ | लिट् | लेट् |
| ५८ | १७ | तीणम्। | तो णम्। |
| ६१ | ५ | सोधिराधारः | सोधेराधारः |
| ६३ | ५ | कर्टि- | कटि- |
| ६५ | ३ | प्रेक्ष्यसि | प्रेक्षिष्यसे |
| ६७ | १९ | स्त्वां | स्त्वं |
| ६८ | १४ | याः। | याः |
| ६९ | २ | लघिमा | लघिमा तेन |
| " | ५ | लिंटि। | लेंटि। |
| " | १९ | वरीवर्तते। | वरीवृत्यते। |
| ७० | १३ | नध्यारूढा ननु वन- | नध्यारूढानऽनुवन- |
| " | २० | भागिनी | भागिनि |
| ७१ | ३ | स्वा | त्वां |
| " | ४ | भवति। | भवन्ति। |
| ७२ | २३ | दर्शनाविपयं | दर्शनविपयं |
| ७४ | २१ | भवति। | त्वयि भवति। |
| ७७ | १६ | -दुयाम- | -दुद्दाम्- |

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| ७७ | १६ | विलसद्विद्यु- द्दामहासे | ० |
| ७८ | २ | स्रोतरत्रापि | स्रोतरत्वेपि |
| ७९ | ९ | चिदेशापु- रीम्। | विदिशापु- रीम्। |
| ८० | १५ | विदेशा- पुर्य्याम्। | विदिशापु- र्य्याम्। |
| ८१ | ११ | जीविकां कृत्य | जीविकाकृत्य |
| " | १७ | " | " |
| ८२ | २ | गिरम् | गिरिम् |
| ८५ | ४ | -तीरजाना | तीरजानां |
| ८६ | २१ | जंत्रवीणः | जैत्रवाणैः |
| ८८ | ४ | सा | सा तस्याः |
| ९२ | ५ | व्यावर्ण्यो | व्यावर्ण्य |
| " | १८ | अप्कर्णाघैः | कूजितम्। अप्कर्णाघैः |
| ९४ | १७ | लादुद्धृदस्य | लादुद्धृत्य |
| ९५ | ३ | पीततोयाः | आपीततोयाः |
| " | " | पीतं | आपीतं |
| " | ४ | जलधयः जलानि | जलधय इव जलानि |
| ९७ | १५ | चिन्हितेषु | चिन्हितेषु। हर्म्येषु |
| ९९ | २४ | -तेजसां | -तेजसा |
| १०० | ९ | । प्रदक्षिणं | प्रदक्षिणम्। |
| १०२ | १६ | आवद्धं | आरब्धं |
| १०३ | ४ | -मभिभ्रा- म्यतः | -मभि भ्राम्य- तः |
| " | २१ | स्नानित- | स्तनित- |
| " | २२ | लप्स्यते | लप्स्यसे |
| १०४ | १३ | लप्स्यते | लप्स्यसे |
| " | १४ | इतीन्निपेधः | इतीण्निषेधः |
| १०६ | १६ | विद्युद्धासि- | विद्युदुद्धासि- |
| " | १९ | प्रेक्षिष्यन्ति | प्रेक्षिष्यन्ते |
| १०७ | १९ | मुखस्य | मुखरस्य |
| १०८ | ५ | द्रष्टास्मि | द्रष्टासे |
| " | १२ | भर्तुः | ० |
| " | १५ | द्रष्टासि | द्रष्टासे |
| " | १९ | वहन्मास- | वहन्मा स- |
| ११० | १३ | स्वयोग्या | ० |
| " | २२ | गर्जन्त्यु- | गर्जेत्यु- |
| १११ | १४ | श्रोचैर्ध्वनिषु च भवान् डम्बरं | श्रोचैर्ध्वनिषु च भवाडम्बरं |
| " | १६ | सुजनविधुरे | सुजन विधुरे |
| " | २० | सरम्भे | संरम्भे |
| ११३ | १ | स्तोयो | तोयो |
| " | २० | स्याद्वलिभिः | स्याद्वलभिः |
| ११६ | ९ | -मनुभव- त्वय्य- | -मनुभव त्व- य्य- |
| ११७ | २४ | सलिलं वसनं | सलिलवसनं |
| ११९ | ३ | त्वन्निष्यदो | त्वन्निष्यन्दो |
| " | ११ | कसम्बधा- | कसम्बन्धा- |
| १२१ | ७ | भवता | भविता |
| " | १६ | एतं | एनं |

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| १२२ | ६ | श्रुतिपथसुख | श्रुतिपथसुखं |
| १२३ | १ | -रुचापाव- | -रुचा पाव- |
| " | १५ | हृद्यस्वच्छे | हृद्ये स्वच्छे |
| " | १८ | -कणमया- | -कणमया- |
| १२७ | ९ | -निमिपां | -निमिपा |
| " | १६ | ओघारे | आधारे |
| " | १७ | ईंपू | ईंपू |
| १२८ | २० | प्रमाणाम् | प्रमाणाम् |
| १२९ | २ | द्दष्टिं | दृष्टिं |
| " | ८ | -प्रमाणाम् | -प्रमाणाम्। |
| " | १७ | सद्दशं | सुदृशां |
| १३१ | ४ | वीक्ष्यमाणो | वीक्षमाणो |
| " | ५ | -तत्रापि वर्षन् | तत्राभिवर्षन् |
| " | १० | वीक्ष्यमाणः वीक्ष्यते इति वीक्ष्यमाणः | वीक्षमाणः। वीक्षते इति वीक्षमाणः |
| " | १२ | अन्तरे | अन्तिके |
| १३३ | २ | उल्लङ्घ्य | उल्लङ्घयेः |
| " | २१ | परिगमन-तस्त्वां | परिगमन-तस्त्वां |
| " | " | नयः | सयः |
| " | २२ | सकिल | स किल |
| " | २३ | लाङ्गलीयाः | लाङ्गली याः |
| १३४ | ६ | ताः भूमीः | ताः |
| १३६ | ६ | अवलोक्य | ० |
| " | १३ | -प्रसिद्धि- | -प्रसिद्ध- |
| " | १९ | -कमलं | कमल- |
| १३७ | ३ | गौरीं | गौरी |
| " | २५ | देवदन्तीवत् | देवदन्तिवत् |
| १३९ | २४ | भवद्योगेन | भवद्योगे न |
| १४० | ७ | लिट् | लेट् |
| " | २३ | इव | एव |
| १४१ | १ | । पश्य | प्राप्य । पश्य |
| " | ४ | दधिघनमिव | दधि घनमिव |
| " | २० | क्षुदादिषु | क्षुत्रादिषु |
| १४३ | १८ | -क्लृड् । | -क्लिड् । |
| " | २० | अलंशक्त्या | अलं शक्त्या। |
| १४४ | २ | तथास्त्व- | तथास्त्वं |
| " | १४ | भीतिम् । | भीतिः । |
| १४५ | ८ | प्रक्षिप्तव्य | प्रक्षेप्तव्य |
| १४६ | १५ | पूतस्त्वमपि | पूतस्त्वमपि |
| " | १६ | -ये श्रद्दधानाः | -येऽश्रद्दधानाः |
| १४७ | १५ | ध्यायमानाः | घ्रायमानाः |
| १४८ | १३ | कलध्वनि-येथा | कलध्वनि यथा |
| १४९ | १ | -क्रम्यतां- | -क्रम्य तां- |
| " | ७ | विशोपो- | विशेपो- |
| " | २४ | वह्नीति | वह्निति |
| १५१ | ४ | व्रजति | व्रजेति |
| " | १२ | कुमुद्व- | कुमुदव- |
| १५३ | ६ | भवित्री | भवित्रीं |
| " | ११ | अनन्तरिता- | एकान्तरिता- |
| १५४ | ३ | एकान्तरिता- | अनन्तरिता- |
| " | १३ | पर्वाणां | पर्वणां |
| १५५ | ६ | कङ्कटकोटयः | कङ्कणकोटयः |

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| १५७ | ३ | -तामावन- | -तामवन- |
| " | १२ | पर्वतरब्धि- | पर्वतयोरब्धि- |
| १५८ | ७ | शास्यसे | शास्यसे |
| " | ८ | दृष्ट्वेति | दृष्टेति |
| " | २१ | किन्नुमत्तो | किन्नु मत्तो |
| १५९ | १ | तप्तुमिच्छवः | तपस्यितुमिच्छवः |
| " | २४ | -द्युतिः | -द्युति- |
| १६० | १० | -कारव्या- | -कारव्य- |
| " | ११ | -शैलानभोगं | -शैला नभोगं |
| " | १३ | प्रासादश्च | प्रासादाश्च |
| " | १९ | क्तः | तथोक्तः |
| १६२ | १४ | -भिसदधी- | -भिरुदधी- |
| १६३ | १६ | विकीर्णाः | विशीर्णाः |
| १६७ | १६ | -निहतै- | -निहितै- |
| १६८ | १५ | अध्यास्ते | अध्यासते |
| १६९ | ७ | त्वत्र- | तत्र- |
| १७० | ५ | यस्य इति | यस्या इति |
| " | " | सर्वर्द्धयः | सर्वर्द्धीः |
| " | १८ | ध्रुवमुपरताः | ध्रुवमुपगताः |
| १७१ | १ | निर्वृत्त- | निवृत्त- |
| १७१ | ७ | वहुव्रीह्वा- वस्यः | वहुव्रीह्वाव- नूत्य |
| १७२ | ५ | -प्रहतमुखा- | -प्रहतमुरवा- |
| १७४ | २१ | -प्रीतमाहत्य | -प्रीतिमाहत्य |
| " | २२ | यदुपतिहितं | यदुपनिहितं |
| १७५ | १५ | रेणुस्तन- | रेणुः स्तन- |
| १७६ | ५ | -न्प्रवृपेण्यो | -न्प्रावृपेण्यो |
| " | १९ | उष्मवन्ति | ऊष्मवन्ति |
| १७९ | ११ | गलितमिच्छु | गलितुमिच्छु |
| " | १५ | रागावनि- | रागादनि- |
| १८० | ७ | प्रमोहात् प्र- कृष्टो मोहः | प्रमोदात्। प्रकृष्टो मोदः |
| " | ८ | प्रमोह- | प्रमोद- |
| " | ११ | अर्चिभि- | अर्चिर्भि- |
| १८१ | ११ | -नाग्रभूमिः | -नाग्रभूमीः |
| " | १६ | अग्रभूमिः | अग्रभूमीः |
| १८२ | २ | सजलकणि- का दो- | सजलकणि- कादो- |
| " | ६ | भवनवलभौ | भवनवलभिं |
| " | ७ | -दारुणि | -दारु |
| १८३ | २ | -वलभिं | -वलभेः |
| १८४ | ७ | स्रष्टुमन्यां | स्रष्टिमन्यां |
| १८६ | २३ | तन्विकल्पं | स्रग्विकल्पं |
| १८७ | १२ | प्रसूते | सूते |
| " | १५ | कान्तादिगि- | कान्ता दिगि- |
| " | २४ | करिणाः | करिणः |
| १८८ | १५ | द्या भरण- | द्याभरण- |
| " | २१ | प्रायः स्वापं | प्रायश्चापं |
| १८९ | २० | -जयाप्रा- | -जयप्रा- |
| १९० | ५ | तत्रागारे | तत्रागारं |
| १९१ | २ | यस्य सः। | यस्य सः। भृङ्गसङ्गीतहारी। सान्द्रच्छायः। |
| १९२ | १५ | ऊमिर्वा | ऊर्मिर्वा |

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| १९३ | ६ | वेष्टणेन | वेष्टनेन |
| ,, | ११ | प्रेक्षोपान्त- | प्रेक्ष्योपान्त- |
| १९४ | ३ | लक्ष्यते | लप्स्यते |
| ,, | १४ | तनुः | तनु- |
| १९५ | ३ | स्मरन्ति | स्मरन्ती |
| १९५ | १० | -वत्स्मरणे- | -वस्मरणे- |
| ,, | २० | निरुध्ये- | निरुद्धे |
| ,, | २२ | दृष्ट्वेति | द्रष्टेति |
| १९६ | ७ | दर्शेर्लट् | -दर्शेर्लुट् |
| ,, | ९ | -स्थामति | -स्थामिति |
| ,, | ,, | वहुतिथिं | वहुतिथीं |
| ,, | ११ | -रचिते | -लसिते |
| ,, | १८ | वहुतिथिं | वहुतिथीं |
| १९७ | १२ | लब्धकामां | वद्धकामां |
| ,, | १९ | लब्धसाम्या | वद्धसाम्या |
| ,, | २२ | -पवीजैः | -पवीज्यैः |
| १९८ | ११ | त्वामिव भवन्तमिव | त्वामेव भवन्तमेव |
| ,, | १९ | जातामन्ये | जाता मन्ये |
| १९९ | २२ | अधिकता | अधिकानां |
| २०० | ४ | -कान्ति- | -कान्ते- |
| २०१ | २२ | लट् | लेट् |
| २०२ | ८ | काञ्चनी | काञ्चनी |
| ,, | २२ | तदास्यै | त्वदास्यै |
| ,, | २३ | शिञ्जाविलय- | शिञ्जावलय- |
| २०३ | २२ | तत् | ततः |
| २०४ | १४ | मत्कृते | मत्कलत्रे |
| ,, | २१ | -सिव। | -मिव |

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| २०५ | २५ | मालिस्तस्या | माली तस्या |
| २०६ | २ | -न्तरभवनं | -न्तर्भवनं |
| ,, | ८ | भजन्तः | भजन्ती |
| ,, | १० | लिखन्ति | लिखन्ती |
| ,, | २२ | तन्त्रीराद्रीं | तन्त्रीरार्द्राः |
| ,, | ,, | -रीमास्टृ- | -कीमास्टृ- |
| २०७ | १० | समयमथवा श्वास- | सभयमथवा- श्वास- |
| ,, | १८ | परिचितं | चिरपरिचितं |
| २०८ | ९ | कश्चित् | कशित् |
| २०९ | १४ | अन्यान्वयः | अन्योन्वयः |
| २१० | १९ | -भिस्तद्विनो- | -भिः स्ताद्विनो- |
| २११ | ६ | व्यापारां | सव्यापारां |
| ,, | ८ | बाधेत् | बाधेत |
| ,, | १३ | -द्रां भवति श- | -द्रामवनिश- |
| ,, | १५ | -पार्श्वम्। | पार्श्वाम्। |
| २१२ | २ | -चरितं | -रचितं |
| ,, | ५ | -गां कथमिव नये- | -गः कथमुपनये- |
| ,, | ११ | ता | तां |
| ,, | २२ | क्लेशमानं | क्लिश्यमानं |
| २१३ | ११ | -सुखोपायै- | -सुखोपायै- |
| २१४ | १२ | -लयाक्लेशिना | -लयक्लेशिना |
| ,, | १७ | -वलम्बी | -वलम्बि |
| २१७ | ६ | मुदु | मृदु |
| २१९ | ४ | माध्यानु- | साध्यानु- |
| ,, | १२ | -नुस्यूतम्। | -नुविद्धम् |
| २२० | २५ | तत्प्रमाणा | तत्प्रमाणाय |

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| २२१ | २ | स्पन्दते | स्पन्दते |
| २२२ | ८ | परि ही– | परीहि– |
| ,, | १३ | –मानेपि | –मानोपि |
| ,, | १५ | –द्वेति प्रणि– | –द्वेतिप्रणि– |
| ,, | १६ | निर्भयो | निर्णयो |
| २२३ | १४ | श्रुतिपथोऽन्न रन्ध्रम्। | श्रुतिपथं श्रुतिरन्ध्रम्। |
| ,, | १९ | घास्यन्यूरुः | घासत्यूरुः |
| २२४ | २१ | चासौ निद्रा चेति कर्मधारयः। | निद्रा ययेति बहुव्रीहिः। |
| २२६ | १० | -ग्रन्थिगाढो- | -ग्रन्थि गाढो- |
| २२७ | १ | –घनाघर्म– | –घना घर्म– |
| ,, | ६ | प्रबोध्य | प्रोत्थाप्य प्रबोध्य |
| २२९ | १ | प्रोज्झ्यवाचं- | प्रोज्झ्य वाचं- |
| २३१ | १० | –लिङ् | –लुङ् |
| ,, | २३ | अभिमानाः | अभिमनाः |
| २३२ | १० | वीरश्री | वीरश्रीः |
| ,, | १२ | वीरश्रीः प्रे– | वीरश्रीप्रे– |
| ,, | १५ | यदास्याः | यदा स्याः |
| २३३ | १९ | अप्रशस्तं | प्रशस्तं |
| २३४ | १ | समुचितपदं | समुचितमिदं |
| ,, | १९ | –मार्यवृत्ति | मार्य वृत्ति– |
| २३८ | १३ | एकीभव– | विंशति एकीभव– |
| ,, | १६ | साधो | सार्थो |
| २३९ | ६ | दधदविरलं | दधदविरतं |

| पृष्ठम् | पंक्तिः | अशु० | शु० |
|---|---|---|---|
| ,, | १९ | योगिनी– | योगिनि– |
| ,, | २२ | ध्यायस्येव | ध्यायस्येवं |
| ,, | २४ | शिखिनं | शिखिनां |
| २४० | २४ | -चिंतादया– | –चिन्ताद्या– |
| २४१ | ८ | सर्वगामी | सर्वगामि |
| ,, | १४ | न न कोपि | न कोपि |
| ,, | १९ | मुमुक्षुमि– | मुनिषु मि– |
| २४२ | १ | स्वामसाध्वी- | त्वामसाध्वी- |
| ,, | ६ | भवन्तं | भवन्तीं |
| ,, | २१ | क्रियो | क्रिया |
| २४४ | ३ | पुष्णवाणै– | पुष्पवाणै– |
| ,, | ५ | तीव्रापायत्व- | तीव्रापाया त्व- |
| ,, | १४ | लङ् | अङ् |
| २४५ | १२ | –रादिते– | –राधिजे– |
| ,, | ,, | निद्रासम्बद्धात् | निद्रासंबन्धात् |
| ,, | १५ | विज्ञापनं | विज्ञानं |
| २४६ | १८ | चिन्तयन्तीं | चिन्तयन्ती |
| २४७ | ९ | –निधानम् | –निदानम् |
| ,, | २१ | –निधानं | –निदानं |
| २४८ | २ | गाढोष्णाभिः | गाढोष्मभिः |
| २४८ | ७ | आसक्त प्रीतिगतं | आसक्तिं प्रीतिं गतं |
| ,, | १० | गाढोष्णाभिः | गाढोष्मभिः |
| २५० | १ | युक्ति | युक्तं |
| ,, | ४ | सत्यमेवं | सत्यऽमैव |
| ,, | २५ | कस्यापनतम् | कस्योपनतम्। |

